अय्या श्री देवनाथतातयार्यमहादेशिकप्रणीता

# वेदान्तवैजयन्ती

*संपादकः*

वलयपेट्टै ना. रा.

श्रीनिवासताताचार्यः

ग्रन्थकृतां शताब्दपूर्तिमहोत्सवे प्राकाश्यं नीता

वै. सं. २०५३ 1996 कर्कटार्द्रा



श्रीशैलवंश्यनिजतातनृसिंहसूरेः
पादाम्बुजप्रणयिनं तदवाप्तमन्त्रम् ।

# VEDANTHA VAIJAYANTHI

By

Navalpakkam Tirumalai Chaturveda, Satakrathu,

Ramanuja Siddhantha Bhaskara

Desika Darsanadhurandhara

**Mahavidwan Sri U. Ve. Ayya Devanathathathacharyaswamy**

*Editor and Publisher*

**Dr. N. R. SRINIVASAN**

Professor & Head,

Department of Dharmashāstra, and Mīmanśa

Sanskrit Vidya Dharma Vigyan Sankay

Banaras Hindu University

Varanasi-221 005

(Published with the financial assistance from the Ministry of Human Resource Development, Government of India)

# वेदान्तवैजयन्ती

( द्वितीयोल्लासः )

श्री-उ-वे-तिरुमलै चतुर्वेद शतक्रतु, रामानुजसिद्धान्तभास्कर,
देशिकदर्शनधुरन्धर, महाविद्वान् नावल्पाक्कम्
**अय्या श्रीदेवनाथताताचार्यमहोदयैः**
अनुगृहीता


सम्पादकः, एवं प्रकाशकः

**डा० (वलयपेट्टै) ना० रा० श्रीनिवासताताचार्यः**

आचार्योऽध्यक्षश्च
धर्मशास्त्र-मीमांसाविभागः
संस्कृतविद्या-धर्मविज्ञानसङ्कायः
काशीहिन्दूविश्वविद्यालयः
वाराणसी



भारतसर्वकार-मानवसंसाधनविकासमन्त्रालयस्य
द्रव्यसाहाय्येन मुद्रिता

१९९१

श्रीमते श्रीनिवासपरब्रह्मणे नमः
श्रीमते लक्ष्मीहयवदनपरब्रह्मणे नमः
श्रीमते रामानुजाय नमः
श्रीमते निगमान्त महादेशिकाय नमः

श्रीमते देवनाथतातयार्यमहादेशिकाय नमः

# शताब्दपूर्तिमहोत्सवपत्रिका

श्रीमद्वेदमार्गेत्यादिविशेषणपञ्चकविशिष्टानां स्वामिनां संनिधावनन्तप्रणामपूर्वकं विज्ञापनम् । उभयकुशलोपरि ।

ऐषमः धातृनाम्नि संवत्सरे कटकमासि आर्द्रानक्षत्रसनाथे भानुवासरे (11.8.96)

---

श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्ताचार्यश्रीभगवद्रामानुजसिद्धान्तनिर्धारण-सार्वभौमानां, श्रीमन्निगमान्तमहादेशिकप्रवर्तितसत्संप्रदायनिर्वहणधूर्वहाणां, नाथमुनिवंशावतंसानाम्, श्रीअण्णयतातयार्यान्वयमुक्ताफलानाम्, अय्या श्रीनृसिंहतातात्मजानां, श्रीनृसिंहतातयार्यमहादेशिकसेवासमधिगतसमस्ततन्त्राणां, चतुःश्रुतिशतक्रतुप्रमुखसार्थसंज्ञावतां, वेदन्यायमीमांसावेदान्ताद्यनेकशास्त्र-प्रवचनैकदीक्षाणां, छात्रजननिबद्धजैत्रध्वजप्रसाधितदशदिशासौधानां, धर्मशास्त्रोक्तरीत्या रेखयाऽप्यप्रच्युतनित्यकर्मानुष्ठातृणां, परमैकान्तिसार्वभौमानाम्, आचार्यत्वोपयुक्तभद्रगुण-बृंहितानां, श्रीतत्त्वमुक्ताकलापाद्यनेकग्रन्थव्याख्यानवेदान्तवैजयन्त्यादिग्रन्थप्रणयनादिना पण्डितलोकोद्धारकाणां, विश्वविद्यालयेनापि दुस्साध्यविविधविद्या-संबन्धिकार्यनिर्वर्तकानां, ब्रह्मविद्याविहरणस्थलानाम्, आचार्यसार्वभौमानाम्,

अय्यास्वामीतिविश्वविख्यातकीर्तिमूर्तीनां,

## श्री देवनाथतातयार्य महादेशिकानां

---

शताब्दपूर्तिमहोत्सवः नावल्पाकाग्रहारे स्वामिनामावासभूमौ प्रचलिष्यति । तस्मिन्नवसरे (7-8-96) दिनाङ्कात् वेद-दिव्यप्रबन्ध - श्रीभाष्यादिग्रन्थचतुष्टय - पुराणेतिहासपारायणं विद्वत्सभा च प्रवर्तिष्यते । तत्रभवन्तो भवन्तः कृपया सर्वासु गोष्ठीषु यथावसरमवश्यं सन्निधायास्मान् अनुगृह्णन्तु इति प्रार्थयामहे ।

वाचिकदोषाः क्षन्तव्याः
इत्थं

श्रीमते श्रीनिवासपरब्रह्मणे नमः
श्रीमते रामानुजाय नमः
श्रीमते निगमान्तमहादेशिकाय नमः

# प्राक्कथनम्

श्रीनिवासं परं ब्रह्म श्रीमद्वेङ्कटनायकम् ।
देवनाथार्यमाचार्यं चाश्रये भक्तिपूर्वकम् ॥

अथेदानीमाचार्यसार्वभौमैः अय्या श्रीदेवनाथताताचार्यैः प्रणीतस्य वेदान्तवैजयन्ती-नामकग्रन्थस्य द्वितीयोल्लासः प्राकाश्यं नीयत इति महतो हर्षस्यावसरः। ग्रन्थोऽयं शतभूषणीग्रन्थविमर्शात्मकस्सन् श्रीमन्निगमान्तमहादेशिकप्रणीतशतदूषणीप्रतिपादितमर्थ-मनेकयुक्ति-प्रमाण-न्यायादि प्रदर्शनपूर्वकमपुनरङ्कुरशङ्कं स्थिरीकरोति । प्रायेण प्रतिदर्शनं प्रतिप्रस्थानं च केचनार्थविशेषास्तत्तदाचार्यैः प्रतिपाद्यन्ते; त एव परस्परमतविशेषद्योतका भवन्ति। यथा पूर्वमीमांसायां प्राभाकरप्रस्थानं भाट्टप्रस्थानं चेति प्रस्थानद्वयं; तत्र प्राभाकरप्रस्थाने बृहती प्रकरणपञ्चिकादिग्रन्थः, भाट्टप्रस्थाने कुमारिलभट्टवार्तिक-न्यायरत्नमालादिग्रन्थः। एवं वेदान्तेऽपि श्रुतिषु मध्ये भेदश्रुतेः प्राधान्यमवलम्ब्य द्वैतप्रस्थानं, अभेदश्रुतेः मुख्यत्वमङ्गीकृत्य अद्वैतप्रस्थानं; घटकश्रुतिद्वारा भेदाभेदश्रुत्यो-रुभयोरपि समन्वयप्रदर्शनपूर्वकं सर्वश्रुतिप्रामाण्यसिद्धौ प्रधानदृष्टिमवलम्ब्य विशिष्टाद्वैत-प्रस्थानं चेति प्रस्थानत्रयं प्रादुरभूत् । प्रतिप्रस्थानं च शङ्कर-रामानुज-मध्वाचार्यैः विषय-संशय-पूर्वपक्ष-सिद्धान्तादिरूपाधिकरणशैल्या भाष्यं प्राणायि। तदनन्तरं तत्तत्पूर्वाचार्यैः भाष्यादिषु सङ्ग्रहेण प्रतिपादितमर्थं विवरीतुं, विशिष्य स्वस्वसिद्धान्तं दृढयितुं च न्याया-मृतं, अद्वैतसिद्धिः शतदूषणी चेति ग्रन्थत्रयं प्रतिप्रस्थानं वादग्रन्थत्वेन प्रवृत्तम् । तत्र



शतदूषणी अतिप्राचीना विशिष्टाद्वैतप्रस्थानीया, श्रीमन्निगमान्तमहादेशिकप्रणीता। एतदनन्तरं अन्येऽपि वादग्रन्थास्तत्तत्प्रस्थाने प्रवृत्ताः। तेषु वेदान्तवैजयन्तीनामकप्रकृत-ग्रन्थः अनन्तकृष्णशास्त्रिकृतशतभूषणीग्रन्थविमर्शरूपः। अत्र च शतभूषणीस्थविषयः पङ्क्तिश अनूद्य भवतां किमेवमभिप्रायः, अथवाऽन्यो वाऽऽशयः इति विकल्प्य अस्मिन् पक्षे इयमनुपपत्तिः, अन्यस्मिन् पक्षे चायं बाध इति विमृश्यते। अपि च शतभूषणीग्रन्थे तत्र तत्र परिजिहीर्षया उद्धृतस्य शतदूषणीग्रन्थस्य वास्तविकमूलार्थ अयमेवेति मूलार्थश्च सुविशदं प्रत्यपादि। अनेन शतदूषणीग्रन्थोऽपि तत्र तत्र स्थलविशेषे व्याख्यातः। इदानीं स्थालीपुलाकन्यायेन स्थलमेकमुदाहरामि—वेदान्तस्य निर्विशेषब्रह्मप्रतिपादन एव तात्पर्यं, अतः 'अथातो ब्रह्मजिज्ञासा' इति सूत्रस्थब्रह्मशब्देन निर्विशेषं ब्रह्मैव बोध्यत इत्यद्वैतिनो वर्णयन्ति। अत्र शतदूषणीकाराः--ब्रह्मशब्दस्य निर्विशेषब्रह्मबोधकत्वं कया वृत्त्या ? शक्त्या लक्षणया वा। लक्षणयेति चेत् कुत्रापि ब्रह्मशब्दस्य मुख्यवृत्तत्व-मस्ति न वा ? नास्ति चेत् लक्षणाऽपि न सङ्गच्छेत, लक्षणायाश्शक्यसम्बन्धरूपत्वात्। एवं मुख्यवृत्तत्वानङ्गीकारे ब्रह्मशब्दस्य साधुत्वमपि न स्यात्, शक्तिमूलकानादिप्रयोग-विषयत्वस्यैव साधुत्वस्वरूपत्वेन शक्त्यभावे तन्मूलकानादिप्रयोगविषयत्वस्याप्यसंभवात्। अथ ब्रह्मशब्दस्य प्रकृत्यादिष्वपि प्रयोगदर्शनात् तत्र मुख्यवृत्तत्वं, निर्विशेषब्रह्मणि लक्षणेति चेत्—न। "यद् साक्षादपरोक्षाद् ब्रह्म" 'तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तः' 'तत्रैव मुख्यवृत्तोऽयमन्यत्र ह्युपचारतः' इति श्रुतिस्मृतिविरोधात्। 'यद् साक्षादित्यत्र साक्षात्वं मुख्यत्वं, तच्च ब्रह्मविशेषणं तथा च मुख्यं ब्रह्मेति प्रतिपाद्यते। एवं 'तस्मिन्नेव' 'तत्रैवे'ति च स्मृतौ कण्ठरवेण एवकारेण ब्रह्मव्यतिरिक्तप्रकृत्यादिषु मुख्यवृत्तत्वनिषेधः, "अन्यत्र ह्युपचारत" इति औपचारिकत्वं च उपापादि। अपि च शब्दस्य साधुत्वे प्रवृत्तिनिमित्तमावश्यकं यथा गोशब्दस्य निखिलगवानुगतं गोत्वं प्रवृत्तिनिमित्तं दृश्यते; तथा प्रकृत्यादिषु अनुगतजात्यादिकमपि नास्ति, बृहत्व-बृंहणत्वरूपप्रवृत्तिनिमित्तस्य च ब्रह्मण्येव सत्त्वात् तद्विशिष्टं (सगुणं) ब्रह्मैव सूत्रस्थब्रह्मशब्देन मुख्यवृत्त्याऽभिधीयते। इत्थं च निर्विशेषे ब्रह्मणि काऽपि वृत्तिर्नघटत इति ब्रह्मशब्दवृत्त्यनुपपत्तिवादे प्राहुः। तत्प्रसङ्गे शतभूषणीकारः किञ्चिदाह—'यत् साक्षादपरोक्षाद्ब्रह्मे'त्यत्र ब्रह्मणो मुख्यत्वरूपं साक्षात्वं न प्रतिपाद्यते, किं तु ब्रह्मणि अपरोक्षत्वं विशेषणं, तस्मिन्नापरोक्ष्ये साक्षात्त्वं (अन्यानपेक्षत्वरूपं) विशेषणं, तथा चान्यानपेक्षमपरोक्षत्वमेव ब्रह्मणः प्रतिपाद्यत इति। तदिदं न युज्यत इति वेदान्तवैजयन्तीग्रन्थे ( १३ तमे पृष्ठे ) **'यत्तु—'यद् साक्षादपरोक्षाद् ब्रह्मे'ति तु ब्रह्मणोऽपरोक्षत्वमेव साक्षादन्यानपेक्षं प्रतिपादयति न तु ब्रह्मणो मुख्यत्व**'मिति तदीयवाक्यमनूद्य तन्नेत्यादिनाऽग्रेतनग्रन्थेन अभिहितम्। तथा हि—साक्षात्त्वस्य आपरोक्ष्येऽन्वयाङ्गीकारे पदार्थतावच्छेदक विशेषणत्वं, ब्रह्मपदार्थान्वये च पदार्थविशेषणत्वं भवति। तत्र पदार्थविशेषणत्वे सम्भवति पदार्थतावच्छेदकविशेषणत्वस्वीकारोऽन्याय्यः। किं चापरोक्षत्वे साक्षात्त्वान्व-येन यत् अन्यानपेक्षत्वरूपं नैरपेक्ष्यं सिद्ध्यति तत् अपरोक्षादिति निरुपाधिकनिर्देशादेव लभ्यते, अतस्तत्रान्वये वैयर्थ्यं चापद्यत, इति साक्षात्त्वस्य ब्रह्मपदार्थविशेषणत्वमेवो-चितम्। अस्मिन् पक्षे 'तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तः' 'परं जैमिनिर्मुख्यत्वा'दिति

स्मृतिसूत्रसंवादोऽपि सम्पद्यते। तस्मात् 'यत् साक्षादि'ति श्रुत्या मुख्यं ब्रह्मैव प्रतिपाद्यते इति। मुख्यं ब्रह्म च बृहत्त्वबृंहणत्वरूपधर्मविशिष्टं (सगुणं) ब्रह्मैव, तत्रैव ब्रह्मशब्दो मुख्यवृत्त इति युक्ति—प्रमाणप्रदर्शनपूर्वकं शतदूषणीकाराणां मतं समर्थितम्। सम्प्रति ब्रह्मशब्दवृत्त्यनुपपत्तिवादादारभ्य बाह्यप्रकाशानुपपत्तिवादान्तो भागः प्रकाश्यते। इतः पूर्वंक्रि १९७६ वत्सरे प्रथमोल्लासः प्रकाशितः। शेषांशश्च अग्रिमे भागे प्रकाशं यास्यति, तस्मिन्नवसरे एतद्ग्रन्थप्रतिपाद्यविषयः प्रतिवादं अक्लेशेनावबोधाय अस्माभिस्सङ्ग्रहेण उपपादयिष्यते।

अस्य ग्रन्थस्य निर्मातारः श्री० उ० वे० अय्या देवनाथताताचार्यस्वामिपादाः न्यायमीमांसाद्यनेकशास्त्रपारङ्गतानां तपस्विनां विरक्ताग्रेसराणां वलयपेट्टै चिन्नस्वामीति प्रसिद्धानां तिरुमलै-चतुर्वेदशतक्रतु नावल्पाक्कं अय्या श्रीनरसिंहताताचार्यस्वामिवर्याणामात्मजत्वेन १९५२ तमे वैक्रमशकाब्दे कटकमासि आर्द्रानक्षत्रे अवतीर्णाः। एते काञ्चीमण्डलान्तर्गतनावल्पाक्काभिधानाग्रहारे बाल्य एव वयसि वेदमधीत्य न्यायादि—सामान्यशास्त्रं वेदान्तशास्त्रं च ज्ञानानुष्ठानवैराग्यशेवधीनां श्री उ० वे० नरसिंहताताचार्यस्वामिपादानां नावल्पाक्कं स्वामीति व्यावहारिकनाम्ना विख्यातानां सकाशे अधीयते स्म। एतेषां कस्यापि विषयस्य गहनतमस्यापि सकृत् श्रुतमात्रेण झटित्येव ग्रहणं, गृहीतस्य कदाऽपि न विस्मरणं चेति ग्रहणस्मरणशक्ती उभे अपि सुदृढे आसाते। एते स्वजीवनकाले भगवदुपासनं अध्यापनं ग्रन्थलेखनं चेति कार्यत्रयं नियमेन कर्तव्यतया सङ्कल्पमकार्षुः। तत्र धर्मशास्त्रोक्तपाञ्चकालिकवर्त्मना नित्यं यथाकालं सन्ध्योपासनवैश्वदेवादिनित्यकर्मादिकं भगवदाराधनवेषेण बाल्यादादेहपातमविचाल्य यथावदन्वतिष्ठन्। वेदशास्त्रसंरक्षणे बद्धादराः इमे अध्यापनं ग्रन्थलेखनं च यदा वयं कुर्मस्तदैव वेदशास्त्रसंरक्षणं भवेदिति विचिन्त्य वयसो विंशतिमारभ्य त्रिणवतिपर्यन्तं अनेकशिष्यान् प्रति वेदशास्त्रादिकमध्यापयामासुः। एतेषामध्यापनवैखरी च प्रतिपंक्ति विशिष्य अध्येतुः निस्संशयमवबोधं यावत् अर्थप्रतिपादनं, क्वचित् अत्रायं विशेषार्थ इति विशेषार्थोपपादनं, कुत्रचित् क्लिष्टतमे स्थले सूक्ष्मार्थसूचनेन ग्रन्थिविच्छेदकरणमित्येवमादिरूपा अनन्यसाधारणीति सुप्रसिद्धा। अनितरसाधारणप्रतिभासम्पन्ना इमे स्वजीवनकाले स्वसमीपमागत्य अध्ययनं कुर्वतामध्यापनेन उपकारसंभवेऽपि परत्रस्थितानामन्येषां, तथा भाविनि काले अध्येष्यमाणानां च ग्रन्थलेखनद्वारा उपकारो भवतु इति मत्वा नैकान् ग्रन्थान् प्रणिन्युः।

| ते च | (१) न्यायवासना | (न्यायकुसुमाञ्जलिव्याख्या) प्रकाशिता |
|---|---|---|
| | (२) अक्षरार्थः | (तत्त्वमुक्ताकलापव्याख्या) प्रकाशिता |
| | (३) वेदान्तवैजयन्ती | विमर्शरूपः प्रकाश्यते |
| | (४) पाठपरित्राणम् | ,, |
| | (५) सूत्रानुगुण्यसिद्धिविमर्शः | ,, |

इत्येवमादयः। इत्थं संभावितसर्वप्रकारेण सम्पूर्णस्वजीवनकाले संस्कृतविद्याभिवृद्ध्यर्थं महायोगदानमाचरितमित्यत इमे महनीयगुणाब्धयः। आह च भगवान् महर्षिः—

"विद्यादानेन सुमतिर्ब्रह्मलोके महीयते" इति।

## कृतज्ञतानिवेदनम्

स्वहस्तलिखितां मातृकां अतीव कृपया प्रदाय यथावसरमस्य ग्रन्थस्य प्रकाशनं विदधत्विति अस्मानादिष्टवद्भ्यः प्रातस्स्मरणीयेभ्यः प्रकृतग्रन्थनिर्मातृभ्य अस्मदाचार्यपादेभ्य अय्या श्रीदेवनाथतातार्यस्वामिवर्येभ्यः सभक्तिप्रणामास्सपर्य्यन्ते । अस्य मुद्रणार्थं सावधानेन त्वरया च प्रतिलिपीकरणादिसर्वविधसहयोगं विहितवद्भ्यां भ्रातृभ्यां ग्रन्थकृत्प्रीतिपात्राभ्यां चि० कृष्ण (कण्णन्) शठकोपताताचार्याभ्यां च प्रेमपूर्णाशीर्वचनानि प्रयुञ्जे ।

ग्रन्थस्यास्य मुद्रणव्ययविषये भारतसर्वकारमानवसंसाधनविकासमन्त्रालयेन महत् साहाय्यमाचरितम् । अतस्तत्कृते सहर्षं तदधिकारिणां सविधे नितरां कार्तज्ञ्यं निवेदयामि । एवमेतन्मुद्रणकर्मणि विनाऽनवधानेन सुष्ठु कार्यं सम्पादितवद्भ्यः रत्नामुद्रणालयाधिकारिभ्यः श्री विपुलशङ्करपण्ड्यामहाशयेभ्यो नितरां साधुवादान् वितरामि ।

इति सुधीविधेयः
नावल्पाक्कं (वलयपेट्टै) रामानुजताताचार्य
श्रीनिवासदासः
(एन० आर० श्रीनिवासन्)
ग्रन्थकृदन्तेवासी
न्याय-मीमांसा-वेदान्तशिरोमणिः
विद्यावारिधिः

# वेदान्तवैजयन्तीग्रन्थे विमृष्टानां वादानां सङ्ग्रहः


| | | |
|---|---|---|
| १. | ब्रह्मशब्दवृत्त्यनुपपत्तिवादः | १–३५ |
| २. | जिज्ञासानुपपत्तिवादः | ३६–५४ |
| ३. | ऐकशास्त्र्यसमर्थनवादः | ५५–९५ |
| ४. | अविधेयज्ञानभङ्गवादः | ९६–११८ |
| ५. | बाधितानुवृत्तिभङ्गवादः | ११९–१२९ |
| ६. | विविदिषासाधनत्वभङ्गवादः | १३०–१४३ |
| ७. | शाब्दप्रत्यक्षभङ्गवादः | १४४–१७८ |
| ८. | साधनचतुष्टयपूर्ववृत्तत्वभङ्गवादः | १७९–१९५ |
| ९. | कथानधिकारवादः | १९६–२०७ |
| १०. | निर्विशेषस्वप्रकाशभङ्गवादः | २०८–२२४ |
| ११. | निर्विशेषनिर्विकल्पभङ्गवादः | २२५–२३३ |
| १२. | सन्मात्रग्राहिप्रत्यक्षभङ्गवादः | २३४–२४४ |
| १३. | भेददूषणनिस्तारवादः | २४५–२६४ |
| १४. | वेदप्रामाण्यपरिग्रहानुपपत्तिवादः | २६५–२७१ |
| १५. | दृश्यत्वानुमाननिरासवादः | २७२–२८८ |
| १६. | व्यावर्तमानत्वानुमानभङ्गवादः | २८९–२९७ |
| १७. | दृग्दृश्यसम्बन्धानुपपत्तिपरिहारवादः | २९८–३१७ |
| १८. | बाह्यप्रकाशानुपपत्तिवादः | ३१८–३३५ |

# विषयसूची

| | पृ० सं० |
|---|---|
| १. ब्रह्मशब्दवृत्त्यनुपपत्तिवादः | १–३५ |
| मुख्यवृत्त्यभावे साधुत्वानुपपत्तिः | १ |
| हरिकारिकोक्तसाधुत्वप्रकाराणां मुख्यवृत्त्यनुविधायिता | २ |
| साधुत्वमिथ्यात्वेऽनुपपत्तिः | २ |
| अर्थवादानामपि शक्तिमूलैव लक्षणा | ३ |
| साङ्केतिकत्वे शतदूषण्यननुमतिः | ४ |
| पुराणबलात् साङ्केतिकत्वासिद्धिः | ५ |
| अवाच्यस्य लक्ष्यतोक्तेरसङ्गतिः | ६ |
| सौषुप्तानन्दस्यावाच्यतानुपपत्तिः | ६ |
| निष्कर्षविवक्षायामपि शक्त्यैव बोधः | ७ |
| न्यायरत्नदीपावलीबहिष्कारः | ८ |
| दण्डितात्पर्यनिर्णयः | ,, |
| न्यायपरिशुद्धिविसंवादः | ९ |
| अवाच्यत्वे वाच्यमित्यपि दुर्वचम् | ११ |
| काल्पनिकवाच्यत्वोपगमे दूषणम् | १२ |
| सगुणस्यैव साक्षाद्ब्रह्मत्वं मुख्यब्रह्मत्वं च | १३ |
| अधिष्ठानत्व-विवर्तमूलत्वयोः बृहत्वबृंहणत्वरूपत्वेऽनुपपत्तिः | ,, |
| अविद्यानिवृत्तेरात्मस्वरूपत्व-पञ्चमप्रकारत्वयोरनुपपत्तिः | १४ |
| निर्वचनस्य उपलक्षणपरत्वानुपपत्तिः | १५ |
| विशिष्टशक्तेन विशेष्यमात्रोपस्थितेर्मणावनुक्तिः | १५ |
| विशेष्यमात्रबोधे परिभाषोक्तरीतेरसङ्गतिः | १६ |
| अभिहितान्वयवादेऽपि विशिष्टवाचकान्निर्विशेषबोधानुपपत्तिः | १७ |
| तात्पर्यविषयत्वमात्रस्य वाक्यजन्यज्ञानविषयत्वप्रयोजकत्वेऽतिप्रसङ्गः | ,, |
| क्वचिदप्यखण्डार्थस्य न सिद्धिः | १९ |
| नामन्त्रित इति सूत्रे सामान्यपदप्रयोजनस्य निमित्तभेदे सत्येव सम्भवः | २० |
| सगुणब्रह्म-वैकुण्ठाद्यप्रसिद्धिप्रतिबन्दोपरिहारः | २१ |
| सगुणेऽपि वृत्त्यनुपपत्तिसाम्यापादननिरासः | ,, |
| अन्यपरसुरेश्वराचार्यवार्तिकोदाहरणासङ्गतिः | २२ |
| जहदजहल्लक्षणाप्रतिक्षेपः | ,, |
| सोऽयमित्यादौ तत्तेदन्तयोरविरोधः | २३ |
| उपहितज्ञानस्याज्ञाननिवर्तकत्वानुपपत्तिः | २४ |
| उपाध्यविषयकत्वे लघुचन्द्रिकाविरोधः, तदुक्तप्रमात्वेऽनुपपत्तिश्च | २५ |

सगुणव्युत्पन्नेन निर्गुणबोधानुपपत्तिः — २६
विशेष्यमात्रात्मन्युपहिते वृत्त्यनुपपत्तिः — २७
लक्ष्यार्थजिज्ञासायास्सूत्रितत्वानुपपत्तिः — २८
आनन्दवल्ल्यादेः परोक्ततात्पर्यानुपपत्तिः — २९
आनन्दवल्ल्यामेव सत्यत्वादिनिरूपणम् — ३०
आनन्दवल्ल्यादेः ज्ञेयब्रह्मत्वनिरासः — ३१
सविशेषज्ञानस्यैव मुक्तिहेतुत्वम् — ,,
देवतान्तरव्यावृत्तिः — ३२
वसुदेवात्मजत्वावस्थायामेव वासुदेवत्वं, पुरुषोत्तमत्वं च — ३३
ब्रह्मपुरुषोत्तमशब्दयोरुभयोरपि निर्दोषत्वे, गुणविशिष्टत्वे च तत्परत्वम् — ३४

**२. जिज्ञासानुपपत्तिवादः — ३६–५४**

इष्टसिद्ध्युक्तप्रसङ्गस्य व्याप्तिशून्यता — ३६
वृत्तिव्याप्यत्वावेद्यत्वयोर्विरोधः — ,,
घटादेः फलव्याप्यत्वे, ज्ञानस्य मनोधर्मत्वे च मानाभावः — ,,
ज्ञानस्यात्मधर्मत्वे प्रमाणोपन्यासः — ३७
वृत्त्युपहितचित्तादात्म्यस्य मिथ्यात्वप्रयोजकत्वानुपपत्तिः — ३८
वृत्तिज्ञानस्य स्वरूपज्ञानादधिकानवगाहित्वे तु नाज्ञाननिवर्तकता — ,,
निर्विशेषे सामान्यविशेषासम्भवः — ३९
निरंशे विदिताविदितांशभेदानुपपत्तिः — ४०
अनादेः सदादिसामान्यज्ञानस्य संशयद्वारा हेतुत्वासम्भवः — ४१
उपहितज्ञानस्य घटादिज्ञानसाधारणेन व्यवहारदशायामबाधमात्रेण न जिज्ञासाफलत्वसम्भवः — ,,
वैशद्यानावृतत्वादिविशिष्टतयाऽपि स्वरूपस्य फलत्वासम्भवः — ४२
जिज्ञासायास्सदानन्दादि भेदभ्रमनिवृत्त्यर्थत्वे दूषणम् — ,,
शास्त्रस्य प्रणाड्या ब्रह्मविषयकत्वानुपपत्तिः — ४३
कल्पिताकारनिवृत्तेः ब्रह्मात्मैक्यरूपत्वे दूषणम् — ,,
अद्वैतमते अज्ञानोपहितस्य जिज्ञास्यताभ्युपगमः — ४४
यतो वेति कारणवाक्ये जतिलयवागून्यायसंचारस्यायुक्तता — ४५
कारणवाक्ये विवर्तवादस्य न प्रसक्तिः — ,,
अद्वैतिभिरनुक्तोपालम्भ इति वक्तुं न शक्यम् — ४६
ज्ञानेतरनिवर्त्यत्वे सत्यत्वप्रसङ्गः — ,,
अखण्डाकारवृत्तेस्स्वतो निवृत्त्यनुपपत्तिः — ४७
कथञ्चिदपि सम्बन्धरहितस्योपलक्षणत्वानुपपत्तिः — ४८
अद्वैतमते ब्रह्मण एव भ्रान्तता — ,,

उपाधिभेदेनाप्येकत्र युगपत् सर्वज्ञत्वाज्ञत्वयोर्विरोधः ४९
अद्वैतविशिष्टाद्वैतमतयोः न तत्त्वहितपुरुषार्थैकरूप्यम् ,,
परमसाम्याधिकमुक्त्यसिद्धिः ५०
आनन्दाज्ञाने तत्र सदादिभेदकल्पनानुपपत्तिः ५१
विशिष्टस्वरूपान्तर्गतविशेषणपरिणामस्य विशिष्टपरिणामरूपतायाः-
शङ्करभाष्येऽप्यनुमतिः ५२
कारणवाक्यसामान्यस्य परिणामिकारणपरत्वम् ५३
वियदाद्यधिकरणसार्थक्यम् ,,
ब्रह्मजिज्ञासायास्सङ्कर्षणेनागतार्थता ५४

३. ऐकशास्त्र्यसमर्थनवादः ५५–९५

शास्त्रैक्यप्रतिज्ञा ५५
विज्ञानेश्वरव्याख्यानसंवादः ५६
तामसपुराणानां विद्यास्थानानन्तर्भावः ,,
अनुगतोपकारविरहादेव विद्यास्थानभेदः ५७
याज्ञवल्क्यस्मृतेश्शास्त्रैक्ये मानता, प्रबन्धैक्ये तु बोधायनवृत्त्यादेः ५७
शतदूषणीनिरस्तानामेव युक्तीनां पुनर्वचनानुपपत्तिः ,,
विषयाद्यैक्यबोधकशतदूषण्याशयः ५८
परोदाहृतवाक्यार्थानाञ्जस्यम् ,,
मीमांसा-वेदाङ्गादीनामुपकारभेदवर्णनम् ५९
द्वैताद्वैतादिभाष्याणामेकत्वापत्तिवारणम् ,,
शारीरकस्य पूर्वमीमांसावृत्ति-वार्तिकसंमतत्वम् ६०
शास्त्रैक्येऽपि श्रीभाष्यकृतां बोधायनवृत्तेरेवानुसरणम् ,,
शङ्करभाष्य-तदनुयायिग्रन्थेषु वृत्तिखण्डनम् ६१
बोधायनोपवर्षयोर्भेदाभेदयोरनैर्भर्यम् ६२
शङ्करादिखण्डितस्य वृत्तिकारस्य बोधायनत्वोन्नयनम् ,,
शङ्करभाष्ये भेदखण्डनेनैव विशिष्टाद्वैतखण्डनसिद्धिः ६३
शङ्करभाष्यस्य स्वमतिविजृम्भितत्वं वार्तिकसिद्धम् ,,
वार्तिकोक्तवृत्तिग्रन्थस्य बोधनीयत्वौचित्यम्– ६४
बोधायनोपवर्षशारीरकवृत्त्योरनुपलब्धौ विशेषः ६५
बोधायनस्याद्वैतित्वनिरासः ,,
यामुनाचार्यग्रन्थे बोधायननामग्रहणाभावे हेतुः ६६
श्रीभाष्यस्य श्रीकण्ठ भाष्यमूलकत्वशङ्काव्युदासः ६७
श्रीकण्ठभाष्यस्य अत्यन्तनवीनत्वसाधनम् ,,
वेदार्थसङ्ग्रहादिनिरस्तशैवमतानां श्रीकण्ठमताद्विशेषः ६८
व्याख्येय भेद-पौनरुक्त्य-विरोधादिनिबन्धनशास्त्रभेदाक्षेपः ६९

| | |
|---|---|
| मीमांसयोः व्याख्येयैक्यसमर्थनम् | ७० |
| मीमांसयोरनेकवेद भाष्यव्यावृत्तमेकग्रन्थत्वम् | ७१ |
| ग्रन्थैक्ये क्वाचित्कपुनरुक्ति सार्थक्यप्रकारः | ,, |
| शङ्करभाष्यादावपि तत्र तत्र पूर्वतन्त्रेण पौनरुक्त्यपरिहारदर्शनम् | ,, |
| देवतायाः स्वोद्देश्यककर्मण्येवानधिकारः | ७२ |
| जैमिनेः कर्मणः फलवचने हार्दाभिप्रायः | ,, |
| जैमिनेरप्यनेकत्र ब्रह्मतद्गुणाभ्युपगमः | ७३ |
| क्रियाया अपि पूर्वतन्त्रे विनियोगान्तरप्रदर्शनम् | ७४ |
| पूर्वतन्त्रे ब्रह्मकारणत्वाप्रतिषेधः | ७५ |
| अपूर्वकारणत्वस्य ब्रह्मकारणत्व एव पर्यवसानम् | ,, |
| आकाशाद्यनित्यत्वेऽपि वाचकशब्दप्रवाहनित्यत्वोपपत्तिः | ७६ |
| विरोधाविरोधयोरुक्तार्थसङ्ग्रहः | ,, |
| विषयभेदाच्छास्त्रभेदशङ्का-तन्निरासश्च | ७७ |
| धर्मशब्दस्य क्रियामात्रपरत्वेऽपि भागद्वयसाधारण्यम् | ७८ |
| धर्मशब्दस्य वेदार्थमात्रपरत्वं, तत्र भामतीसंवादश्च | ,, |
| परिमलोक्तटीकायोजनान्तरानुपपत्तिः | ७९ |
| पुनः प्रतिज्ञासार्थक्यम् | ८० |
| सूत्रे आवृत्त्यादिकल्पनस्यादोषता | ,, |
| आवृत्तस्यार्थान्तरपरत्वोपपत्तिः | ८१ |
| षोडशान्ते सूत्रावृत्त्या शास्त्रभेदाक्षेपस्य निरासः | ८२ |
| कर्मविचारस्य ब्रह्मविचारपूर्वत्वे संप्रतिपत्तिः | ८३ |
| गृहस्थेतराश्रमिणां देवानामपि ब्रह्मविचारे कर्मविचारापेक्षा | ,, |
| जीवन्मुक्तानामपि धर्मानुष्ठानावश्यकता | ८४ |
| देहात्माभिमाननिवृत्तेः कर्मत्यागं प्रति अप्रयोजकता | ८५ |
| शारीरक एवापेक्षितसर्वन्यायव्युत्पादनस्य निरासः | ८६ |
| उपजीव्योपजीवकभावविरहस्य चण्डमारुतसंमतत्वनिरासः | ८७ |
| प्रकारान्तरेणाप्युपजीव्योपजीवकभावप्रतिपादनम् | ८९ |
| सूत्रेषु निदर्शननिर्देशस्य शास्त्रभेदगमकत्वायोगः | ,, |
| अपरजैमिनिरितिशङ्कानिरासः | ९० |
| कर्मविचारानन्तर्योक्त्या सङ्कर्षानन्तर्यस्याप्युक्तिः | ९२ |
| काण्डत्रयक्रमौचित्यम् | ,, |
| स्थितेऽरविन्द इति न्यायेन प्रथमत एव ब्रह्मविचारानुपपत्तिः | ९३ |
| अथशब्दस्य कर्मविचारानन्तर्यपरत्वौचित्यम् | ९४ |
| शतदूषणीनिरस्ताधिकयुक्त्यप्रदर्शनम् | ,, |
| सर्वसिद्धान्तसङ्ग्रहे मीमांसाया विंशत्यध्यायोक्तिः | ९५ |

४. अविधेयज्ञानभङ्गवादः ९६–११८

अविद्यायाः काचकामलादिवत् ज्ञानमात्रेतरनिवर्त्यत्वम् ९६
अविद्याया उपासननिवर्त्यत्वे प्रमाणप्रदर्शनम् ९७
कर्मबीजनाशकज्ञानस्योपासनात्मकत्वे शाङ्करभाष्यवाक्यस्यापि गमकत्वम् ,,
स्मृतिलम्भे-आत्मावाऽरे द्रष्टव्य इत्यनयोर्भिन्नविषयत्वनिरसनम् ९८
सर्वब्रह्मविद्यासाध्यस्य मोक्षस्य एकत्वम् ९९
द्रष्टव्य इत्यस्य फलपरत्वानुपपत्तिः ,,
द्रष्टव्य इति मुक्त्यनुवादानुपपत्तिः १००
इष्टसिद्ध्युक्तमुक्तावनुपपत्तिः १०१
वस्तुस्वरूपावधारणमित्यत्र तत्पुरुषस्यैव स्वारस्यम् ,,
द्रष्टव्य इत्यस्य मुख्यार्थासंभवोपपादनम् १०२
मुख्यार्थसंभवेऽपि, पुरुषतन्त्रत्वं, सविशेषविषयिता च १०३
ब्रह्मविदाप्नोतीत्युपासनापरम् १०४
वेद इत्यस्योपासनविधायकत्वे शाङ्करसंमतिः १०४
ज्ञानविधेयत्वसमर्थनोपरि आक्षेपव्याघातः १०५
मोक्षस्य साध्यत्वेऽपि न विनाशित्वापत्तिः ,,
मोक्षसाधनज्ञानस्य भाव्यत्व भावार्थत्वादिना यागादिवद्विधेयत्वम् १०६
भक्तेः ज्ञान-दर्शन-प्राप्तिसाधनत्वे मानप्रदर्शनम् ,,
ज्ञानीत्वात्मेत्यनेन न निर्विशेषज्ञानतादात्म्ययोः प्रदर्शनम् १०८
ज्ञानी त्वात्मेत्यस्य ज्ञानिप्रशंसापरत्वे तु न विरोधः, किं तु
तादात्म्यपरत्व एव १०९
अद्वैते गीताया न तात्पर्यं, किं तु विशिष्टाद्वैते ११०
अद्वैतस्य तात्त्विकत्वे गीताचार्यादीनामुपदेशाद्यनुपपत्तिः ११०
उपदेशाद्यनुपपत्तेरद्वैतभाष्यवाक्यात् न परिहारः १११
अर्वाचीनोक्तोपायशरीरविशेषणदूषणम् ,,
श्रीभाष्यकृन्मतेऽप्युपदेशाद्यनुपपत्तिसाम्यनिरासः ११२
प्रवचनविवादाद्यनुपपत्तेरद्वैतासाधारण्यम् ,,
निर्विशेषज्ञप्तेः वैशद्यायोगः ११३
सविशेषध्यानस्य वैशद्योपपत्तिः, सर्वौषधावधातन्यायप्रवृत्तिश्च ११४
ध्यानस्य ध्येयप्रसादद्वारकं तत्साधर्म्यहेतुत्वं शङ्कराचार्याणामप्यनुमतम् ,,
भूयस्त्वेन विषयभेदव्यपदेशः ११५
तस्याभिध्यानादिति वाक्यतात्पर्यम् ११६

५. बाधितानुवृत्तिभङ्गवादः ११९–१२९

प्रायणान्त ध्यानोपायत्ववादिनां नोपदेशाद्यनुपपत्तिः ११९
अद्वैतमते बाधितानुवृत्तिस्वरूपम् १२०

| | |
|---|---|
| पुरोवाद एव व्याहत इति वर्णनं, द्विचन्द्रज्ञानवैषम्यं च | ,, |
| विनोपादानं वासनानुपपत्तिः | १२१ |
| परोक्तसंस्कारानुमानस्यानैकान्त्यम् | ,, |
| वध्यघातकयोस्तादात्म्यानुपपत्तिः | १२२ |
| शतदूषणीकृतां मते न तत्प्रसक्तिः | १२२ |
| संस्कारस्य तत्त्वज्ञाननाश्यत्वानुपपत्तिः | १२३ |
| अद्वैते तत्त्वदर्शिनामविद्यालेशाद्यनुवृत्त्यनुपपत्तिः | १२४ |
| कुलालचक्रभ्रमणाद्यनुवृत्तिवैफल्यम् | ,, |
| तस्य तावदेवेति श्रुतिवाक्य-अनारब्धकार्याधिकरणयोः मिथ्यावादविरोधिता | १२५ |
| पूर्वमबाधकस्य तत्त्वदर्शनस्य पश्चादप्यविशेषादबाधकत्वम् | १२६ |
| संस्कारशरीरादेः ज्ञाननिवर्त्यत्वाभावात् मिथ्यात्वानुपपत्तिः | ,, |
| **६. विविदिषासाधनत्वभङ्गवादः** | **१३०-१४३** |
| भामतीविवरणमतविपरीतोक्तिनिरूपणम् | १३१ |
| मतद्वयेऽपि विविदिषापर्यन्तमेव कर्मानुष्ठानम् | ,, |
| गृहस्थाश्रम एव विद्यायाश्शीघ्रसिद्धिः | १३२ |
| भामती-ब्रह्मसिद्धयोरत्र नैकमत्यम् | १३३ |
| स्वर्गकामवाक्य-विविदिषावाक्ययोर्वैषम्योक्तिनिरासः | ,, |
| विविदिषाया यज्ञादिफलत्वासंभवः | ,, |
| बुभुक्षादृष्टान्तवैषम्यम् | १३४ |
| ब्रह्मसिद्धौ कर्मणामदृष्टद्वारा वेदनाङ्गत्वम् | १३६ |
| ज्ञानिनां कर्माधिकारासंभवशङ्कानिरासः | १३७ |
| कर्मसाध्यवेदनस्वरूपनिरूपणम् | १३९ |
| विविदिषन्तीत्यत्र अविधेयज्ञानविवक्षायां सन्प्रत्ययादिवैयर्थ्यम् | १४० |
| **७. शाब्दप्रत्यक्षभङ्गवादः** | **१४४-१७८** |
| परिभाषोक्तप्रत्यक्षलक्षणाक्षेपः | १४४ |
| सिद्धान्तिनां प्रत्यक्षलक्षणम् | १४५ |
| प्रत्यक्षे इन्द्रियेतरकरणानङ्गीकरणम् | १४६ |
| संवित् स्वप्रकाशेति वाक्यजन्यस्य परोक्षत्वमेव | १४८ |
| दशमस्त्वमसीत्यत्र परोक्षत्वमेव | १४९ |
| परोक्षेणाप्यपरोक्षभ्रमबाधः | १४९ |
| बाधकानुमानस्यापि विपक्षे बाधकाभावः | १५० |
| प्रत्यक्षस्य शास्त्रजन्यत्वेऽपि न प्राबल्यसंभवः | ,, |
| वाक्यापरोक्षे परोक्तप्रमाणान्यथासिद्धिः | १५१ |

विषयगतपरोक्षापरोक्षत्वयोरविरोधः १५२
परोक्तविषयापरोक्ष्यप्रतिक्षेपः ,,
संनिकृष्टेऽपि शब्दानुमानाभ्यां प्रत्यक्षासभवः १५३
अपरोक्षविषये परोक्षोपगमेऽतिप्रसङ्गपरिहारः १५६
एकत्रैवाज्ञानवैविध्यनिरासः ,,
प्रसञ्जकस्यानिष्टत्वायोगः १५८
प्रसङ्गस्यानिष्टत्वासंभवः १५९
योगिप्रत्यक्षसाधनम् १६१
आनन्दवल्ल्यामपरोक्षगन्धाभावः १६३
शास्त्रज्ञानात् सूक्ष्मशरीरात्मभ्रमानिवृत्तिरित्यस्य निरासः १६४
दृश्यत्वहेतोर्व्यभिचारस्य दुर्वारता १६६
मिथ्यार्थस्य स्वरूपप्रच्युतिनिरासः ,,
अज्ञानस्य भ्रमोपादानत्वनिरासः १६८
पञ्चमषष्ठादि विकल्पशिरोऽवलंबनेऽपि नापरोक्षावश्यंभावः ,,
अपरोक्षमन्तराऽपि संसारभ्रमनिवृत्तिः १६९
अविद्याया अप्रामाण्यप्रयोजकत्वम् १७०
उपासनाधीनापरोक्षस्य मोक्षहेतुत्वेऽपि न क्षतिः ,,
ब्रह्मापरोक्षोपगमेऽद्वैतिनामेव दृश्यत्वसिद्धया महती क्षतिः १७१
सुनिश्चितेत्यत्र सुपदसार्थक्यम् १७२
अनुमानप्रयोगदूषणम् ,,
तं त्वौपनिषदमित्यस्य सार्थक्यम् १७३
योगिप्रत्यक्षस्य दुरपह्नवता १७६

**८. साधनचतुष्टयपूर्ववृत्तत्वभङ्गवादः १७९-१९५**

मिथस्संश्रयपदार्थोऽन्योन्याश्रय एव न परोक्तः १७९
साधनद्वयपूर्वत्वोपगमेऽपि तस्य विवक्षानर्हता १८१
प्रत्यक्षानुमानतो नित्यानित्यवस्तुविवेकायोगः ,,
विवेकस्य सम्भावनात्मकत्वे दूषणम् १८२
कर्मविचारस्य पूर्वत्वे नान्योन्याश्रयप्रसक्तिः १८३
अधिगतकर्मणामेव ब्रह्मविचारेऽधिकारः १८४
कर्मविचारस्य ब्रह्मविचारोपयोगिता १८५
कर्मणां वेदनोपयोगः १८६
ब्रह्मविचारनिरूपितविनियोगानां कर्मणां कर्मविचारादेव स्वरूपाधिगमः १८७
कर्मफलानित्यत्वनिर्णयः १८८
पुरुषप्रवृत्तिक्रमप्रतिबन्धकनिवृत्तिसूचनम् १८९
कर्मणां ब्रह्मविचारप्रतिबन्धकत्वम् १९०

कर्मविचारस्य साक्षाद्ब्रह्मविचारोपयोगः, अपरोक्षमोक्षोपायत्ववादस्सूत्रानारूढश्च १९१
अधीत्य स्नायादित्यत्र कृत्स्नाध्ययनस्यैव समावर्तनपूर्वत्वम् १९२
वेदनाङ्गकर्मविषये ब्रह्मसिद्धिः १९३

९. कथानधिकारवादः १९६–२०७

सौगताद्वैतिनोः कथाधिकारे साम्यम् १९७
व्यावहारिकमानात् पारमार्थिकासिद्धिः ,,
स्वरूपेणासतः भ्रमप्रमाहेतुत्वासंभवः १९८
सत एव हेतुत्वम् १९९
स्वमतसिद्धसत्ताकस्यैव प्रमाणतया प्रदर्शनयोग्यता, शिष्योद्देशेन शतदूषण्यादिप्रवृत्तिश्च २००
अद्वैतिनां प्रमाणसत्तायामौदासीन्येन कथाऽसम्भवः २०१
खण्डनोक्तदूषणपरिहारः २०२
स्वरूपेणासतां अबाधितविषयत्वं न सत्ता भवति २०३
परमार्थ-मिथ्यावादिवेदान्तिनोर्विशेषः २०४
अद्वैतिनामुभयथाऽपि कथानधिकारः २०५
अद्वैतिनां शिष्यादिभिस्सह वादकथायामप्यनधिकारः ,,

१०. निर्विशेषस्वप्रकाशभङ्गवादः २०८–२२४

शतदूषण्यां प्रतिपादितस्य निर्विशेषस्वप्रकाशभङ्गवादस्य सङ्ग्रहः २०८
सविशेषवादेऽपि निर्विशेषवादे चोदितदूषणानां प्रसङ्गः, तत्परिहारश्च २०९
जीव-परमात्म-धर्मभूतज्ञानत्रितयसाधारणं स्वप्रकाशत्वं अन्यानधीनप्रकाशत्वरूपमिति निरूपणम् ,,
धर्मभूतज्ञानसङ्कोचेऽप्यार्हतमतव्यावृत्तिः २१०
धर्मसङ्कोचस्य धर्मिसङ्कोचनैरपेक्ष्यम् २११
निर्विशेषे प्रमाणाभावोपपादनम् २१२
सविशेषवाक्यप्राबल्यनिरूपणम् २१३
ज्ञानस्वरूपस्य धर्मिणः, धर्मभूतज्ञानस्य च सविशेषविषयकत्वमेव २१५
निर्विशेषस्याध्यासाधिष्ठानत्वासंभवः २१६
कस्यांचिदप्यवस्थायां न निर्विशेषानुभवः २१७
वाक्यवेद्यो न निर्विशेषः ,,
अध्यारोपापवादन्यायाप्रवृत्तिः २१८
सविशेषस्वप्रकाशत्वे तमेव भान्तमिति श्रुतिविरोधपरिहारः २१९
संविद्रूपस्य ब्रह्मणो निर्विशेषत्वे व्याघातः २२०
संविदस्सविशेषत्वे नियमाः २२१

सुषुप्तावपि सविशेषानुभवः २२३
परमात्मनो धर्मभूतज्ञानाङ्गीकारे शङ्कितविरोधपरिहारः २२४

**११. निर्विशेषनिर्विकल्पभङ्गवादः** **२२५–२३३**

निर्विकल्पे नैयायिकमतभेदः २२५
भिन्नसामग्रीवेद्यस्वरूपग्रहणमपि सविशेषविषयकम् २२५
वाक्यात् निर्विशेष-निर्विकल्पप्रत्यक्षासम्भवः २२६
योगशास्त्रेऽपि निर्विकल्पस्य सविशेषावगाहित्वाविरोधः २२७
असंप्रज्ञातसमाधिस्वरूपम् ,,
प्रह्लादवामदेवादीनां सविशेषानुसन्धानम् २२८
इच्छामात्रात् प्रत्यक्षनिरोधायोगः, अद्वैत्यभिमतनिर्विकल्पात् नैयायिकाभिमतस्य निर्विकल्पस्य भेदः, निर्विकल्पस्य निष्प्रकारत्वनिरासश्च २२९
सविकल्पस्य भ्रमत्वनिरासः, वाचाऽऽरम्भणश्रुत्या घटादेर्न मिथ्यात्वं च २३०
प्रत्यभिज्ञा-सविकल्प भेदः २३१
प्रत्यक्षविशेषाणां वेदान्तैरबाध्यत्वम् ,,
निर्विशेषे तन्निर्विकल्पे च साधकाभावो बाधकसत्त्वं च २३२

**१२ सन्मात्रग्राहिप्रत्यक्षभङ्गवादः** **२३४-२४४**

सत्तादात्म्यभाने सत्त्वाभानानुपपत्तिः २३४
सन् घट इत्यादौ घटत्वाद्यंशेऽपि प्रामाण्यम् ,,
स्वरूपेण ग्रहणे भेदस्य निरपेक्षता २३५
ब्रह्मसिद्धयुक्तनिर्विकल्पनिरासः २३६
तत्तत्संस्थानादेरेव व्यावृत्तिरूपत्वम् २३७
भेदग्रहणे प्रत्यक्षतदाभासयोस्तुल्यता २३८
प्रत्यक्षस्य सन्मात्रग्राहित्वे दूषणानि २३९
सन् घट इत्यादेः ब्रह्माविषयकत्वम् २४०
सन्मात्रग्राहित्वे ब्रह्मसिद्धिविरोधः २४१
श्रीभाष्यकृन्मते निवृत्त्यनुपपत्तिसाम्यनिरासः ,,
भेदस्यापि प्रत्यक्षत्वोपगमे सन्मात्रग्राहित्वविरोधः, शास्त्रप्रत्यक्षविरोधश्च २४२
ज्ञानसामान्यस्याधिष्ठानांशादौ प्रामाण्ये दूषणम् २४३

**१३ भेददूषण निस्तारवादः** **२४५-२६४**

व्यवहारदशायां भेददूषणनिरासस्य मुक्तावपि तुल्यन्यायता २४५
मुक्तिदशायामपि सामान्यतो भेदबाधकप्रमाणस्य दुर्भिक्षता २४६
वाचाऽऽरम्भणश्रुत्या भेदनिरसनासंभवः २४७

| | |
|---|---|
| व्यावहारिकभेदमूलविकल्पेन पारमार्थिकभेदबाधायोगः | २४८ |
| भेदवाद-तत्परिवादकृतोर्विकल्पोपपादने वैषम्यम् | २५० |
| स्वमतसिद्धस्य परमतसिद्धस्य वा भेदस्योपजीवनेन न विकल्पोपपत्तिः | २५१ |
| भेदस्यानिर्वचनीयत्वसाधकयुक्त्या अभेदस्यापि तदापादनम् | २५३ |
| भेदसत्यत्वे सर्वं खल्विति सामानाधिकरण्योपपादनम् | २५४ |
| भेदस्य धर्मधर्म्युभयात्मकत्वे व्याघातपरिहारः | २५५ |
| सर्वज्ञानयाथार्थ्यख्यातिवादयोः शुक्तित्वादेर्भेदत्वसमर्थनम् | २५६ |
| सन् घट इत्यत्र भासमानयोर्धर्मधर्मिणोरुभयोरपि पारमार्थिकता | २५७ |
| खण्डनग्रन्थदूषणम् | २५८ |
| सत्त्वाच्चापरस्येति सूत्रभाष्याद्यसामञ्जस्यम् | २६० |
| भेदपारमार्थ्यनिगमनम् | २६३ |
| अनृतादिव्यावृत्तेरपि मृषात्वे दूषणम् | ,, |

| | |
|---|---|
| **१४. वेदप्रामाण्यपरिग्रहानुपपत्तिवादः** | **२६५-२७१** |
| वेदसौगतागमवैषम्यायोगः | २६५ |
| सौगतसाम्योक्तिप्रयोजनम् | २६६ |
| वेदप्रामाण्ये श्रीभाष्याद्वैतमतयोरत्यन्तवैषम्यम् | २६७ |
| सौगतागमात् पाञ्चरात्रस्य विशेषः | २६८ |
| पाञ्चरात्रस्य सौगतसाम्योक्तिनिराकरणम् | २६९ |
| श्रीभाष्यकृन्मते वेदसौगतागमवैषम्यम् | २७० |

| | |
|---|---|
| **१५. दृश्यत्वानुमाननिरासवादः** | **२७२-२८८** |
| वेदे विश्वमिथ्यात्वाप्रसक्तिः | २७२ |
| मिथ्यात्वबोधकतया परोक्तश्रुतीनामन्यथासिद्धिः | २७२ |
| भाष्यसूचितदृश्यत्वानैकान्त्यवारकविशेषणदानादिष्टासिद्धिरनिष्टापत्तिश्च | २७३ |
| साध्यविकल्पे तृतीयकल्पदूषणम् | २७५ |
| बाध्यत्वबाध्यत्वे सत्यत्वनियमः | २७६ |
| ब्रह्मातिरिक्तमेवाबाध्यं बाध्यत्वं साध्यमिति पक्षे दूषणम् | २७७ |
| सद्विविक्तत्वकल्पे दूषणम् | २७९ |
| प्रत्यक्षेण मिथ्यात्वविरोधिसत्त्वग्रहणम् | २८० |
| प्रपञ्च प्रत्यक्ष-मिथ्यात्वानुमानयोर्भिन्नविषयत्वनिरासः | २८१ |
| अप्रसिद्धमिथ्यात्वसाधनानुपपत्तिः | २८३ |
| विश्वप्रत्यक्षान्मिथ्यात्वानुमानस्यापच्छेदनयात् प्राबल्यमित्युक्तिनिरासः | २८४ |
| दृश्यत्वविकल्पदूषणसमर्थनम् | २८५ |

१६. व्यावर्तमानत्वानुमानभङ्गवादः २८९–२९७

ब्रह्मण्यनैकान्त्यस्यानिवार्यता २८९
द्वितीयकल्पेऽनैकान्त्य-अप्रयोजकत्वस्थापनम् २९१
तृतीयकल्पदूषणसमर्थनम् २९२
चतुर्थकल्पदूषणसमर्थनम् ,,
पञ्चमकल्पदूषणसमर्थनम् २९३
ब्रह्मणस्सर्वबुद्धिविषयत्वे प्रमाणादिविरोधः २९४
भ्रान्तबुद्धिविषयत्वेन शुक्तिरूप्यस्यापि नित्येश्वरबुद्धिविषयत्वसमर्थनम् २९५
षष्ठकल्पदूषणसमर्थनम् २९६

१७. दृग्दृश्यसम्बन्धानुपपत्तिपरिहारवादः २९८–३१७

दृश्यत्वे परोक्तगौणमुख्यभावनिरासः २९८
परिणामवाद एव श्रुतिस्मृतिसंमतः प्रामाणिकः, तत्रैव ब्रह्मणा प्रपञ्चस्य पारमार्थिकस्सम्बन्ध इति निरूपणम् २९९
सन् घट इत्यत्र ब्रह्मभानव्युदसनेन प्रामाण्यसाधनम् ३००
दग्दृश्यसम्बन्धस्य दुरपह्नवता, काल्पनिकसम्बन्धप्रतियोगिनः काल्पनिकत्वानियमश्च ३०१
सम्बन्धमिथ्यात्वेन सम्बन्धिनोऽपि मिथ्यात्वे ब्रह्मणोऽपि मिथ्यात्वापत्तिः ३०२
उपलब्ध्यधिकरणविरोधाविरोधचिन्ता ३०४
प्रमाणमन्तरा दृशस्स्वप्रकाशत्वे दृश्यस्यापि तत्प्रसङ्गः ३०५
फलव्याप्यत्व-वृत्तिव्याप्यत्व भेदव्युदासः ३०५
दृश्यत्वस्य स्वप्रकाशत्वाविरोधित्वम् ३०६
वृत्तिव्याप्यत्वेऽपि ब्रह्मणो विषयताभ्युपगमावश्यंभावः ३०७
आत्मनोऽपि देहादावध्यासः ३०८
भाविबाधानुपपत्तिः ३०९
पारमार्थिकस्य पारमार्थिकं प्रत्येवोपादानत्वम् ३१०
शतदूषण्यामनिर्वचनीयानुमतेरप्रसक्तिः ,,
सम्बन्धानुपपत्त्या मिथ्यात्वानुमानानुग्राहकतर्कासंभवः ३११
अनुभूतेर्वृत्तिविषयत्वेऽपि सत्यत्ववत् घटादीनामपि तदविरोधः ३१२
सम्बन्धानुपपत्त्येत्यस्य प्रतीयमानारोपितसम्बन्धातिरिक्त सम्वन्धानुपपत्त्यर्थकत्वे दोषः ३१३
सम्बन्धारोपे प्रतियोगिन एवारोप इत्यत्र व्यभिचारप्रदर्शनम् ,,
पारमार्थिकसम्बन्धसमर्थनम् ३१४
ब्रह्मसिद्धयुक्ति विमर्शनम् ३१५

| | |
|---|---|
| बाह्य प्रकाशानुपपत्तिवादः | ३१८- |
| जीवाज्ञानपक्षेण ब्रह्माज्ञानदूषणस्यापरिहार्यत्वम् | ३१८ |
| बाह्यानुभवाभावे सर्वज्ञत्वानुपपत्तिः | ३२० |
| परमते उक्तदोषस्य स्वमतेऽप्रसक्तिः | ३२१ |
| अन्तःकरणतादात्म्याध्यासनिरासः | „ |
| अज्ञानस्यान्तःकरणाश्रितत्वे दूषणम् | ३२३ |
| अन्तःकरणावच्छिन्नजीवाश्रितत्वे दूषणम् | ३२४ |
| अवच्छेदकभेदेन ब्रह्मणि विरुद्धसमावेशस्य आकाशदृष्टान्तवैषम्येण निरासः | ३२५ |
| ब्रह्मणोऽविद्याद्यनुभवानुपगमे तदनुवृत्तितत्कार्याद्यनुपपत्तिः | ३२६ |
| जीवाज्ञानपक्षे ब्रह्माज्ञानानुभवाप्रसक्तिः, स्वानुभवस्वरूपस्याविद्यानुभवविरोधश्च | „ |
| अनादित्वे भ्रमस्य सोपाधिकत्वानुपपत्तिः | ३२७ |
| शतदूषण्युक्तातिप्रसङ्गादेरव्याहतत्वम् | ३२८ |
| श्रीभाष्ये ब्रह्मसिद्धिसिद्धान्तोन्मूलनम् | ३२९ |
| ब्रह्मतिरोधानानुपपत्तिवत् जीवस्य कर्मणा तिरोधाने नानुपपत्तिः | ३३० |
| श्रीभाष्यकारसिद्धान्तेऽपि दूषणसाम्यापादनाशक्यता | ३३१ |
| धर्मभूतज्ञानोपगमकैमर्थ्यादिप्रश्नोत्तराणि | „ |
| वैदिकानां साङ्ख्यप्रक्रियानादरणीयता | ३३३ |
| बाह्यानुभवस्योपादनवत् हानमप्यशक्यम् | ३३४ |

॥ श्रीः ॥

॥ श्रीनिवासपरब्रह्मणे नमः ॥

# वेदान्तवैजयन्ती

अप्पा श्रीदेवनाथताताचार्यरचिता

## ब्रह्मशब्दवृत्त्यनुपपत्तिवादः

अजायत यतस्स्रष्टा गजाननपितामहः ।
स जागर्त्यवितुं देवोऽब्धिजाश्रितभुजान्तरः ॥

"अथातो ब्रह्मजिज्ञासे"ति सूत्रस्थेन ब्रह्मशब्देन निर्विशेषं किमपि लक्षणया प्रतिपाद्यत इत्यद्वैतिनः। तदुन्मूलनाय प्रवृत्ते शतदूषण्याः प्रथमे वादे निर्विशेषवादे ब्रह्मशब्दस्य क्वचित् मुख्यवृत्तत्वमस्ति न वेति प्रकृतोपयोगितया कृते विकल्पे प्रथमतः सूचीकटाहन्यायेन द्वितीयकल्पे ब्रह्मशब्दस्यासाधुत्वं प्रसज्यत इति प्रधानं दूषणमुद्भावितम् ।

तत् यथावन्निवारयितुमपारयन्तोऽप्यभिनिवेशपरवशा अमुख्यवृत्तस्यापि लक्षणया साधुत्वं न हीयत इत्यधुना केचित् यदाचक्षते तत् व्याहतमेव ।

### मुख्यवृत्त्यभावे साधुत्वानुपपत्तिः

मुख्यवृत्त्यभावे लक्षणायास्साधुताया वा वक्तुमशक्यत्वात् । न चावाचकत्वेऽपि ब्रह्मशब्दस्य साधुत्वं,

"अनप भ्रष्टतानादीरथाभ्युदयहेतुता ।
व्याक्रिया व्यञ्जनीया वा जातिः काऽपीह साधुता ॥
अनिदं प्रथमाश्शब्दास्साधवः परिकीर्तिताः ।"

इत्यादिहरिकारिकादिसिद्धं यौगिकशब्दानामिव न हीयत इत्युक्तं युक्तम् ।

**हरिकारिकोक्तसाधुत्वप्रकाराणां मुख्यवृत्त्यनुविधायिता**

शक्तिमूलकानादिप्रयोगविषयत्वस्यैव साधुत्वात्मकत्वे पूर्वोक्तकारिकातात्पर्यस्योपगन्तव्यत्वात् अन्यथा शक्त्यभावे शक्यार्थसंबन्धादिनिबन्धनवृत्त्यन्तरस्याप्यसंभवेन प्रयोगस्यैव प्रसक्त्यभावात्, अभ्युदयसाधनत्व, व्याकरणाभ्यासजन्य संस्कारव्यंग्यजातिमत्वादेरपि दुर्वचत्वापातात् ।

अनादिप्रयोगविषयतामात्रस्य तेऽसुरा हेलयो हेलय इत्यत्रापि सत्त्वेनातिप्रसक्तत्वात् । अपभ्रष्टभिन्नत्वस्य साधुत्वात्मकत्वे तत्रापभ्रष्टत्वं च साधुशब्दभिन्नत्वमित्येव वक्तव्यतया आत्माश्रयादिप्रसङ्गश्च स्यात् ।

अतः क्वचिदपि मुख्यवृत्त्यभावे असाधुत्वापत्तिर्दुर्वारैव । तथोक्तं 'न हि वाच्यमविज्ञाय साधुत्वमवधार्यते' इति ।

**यौगिकशब्देषु तु यथासंभवमवयवसमुदायशक्तिसंभवान्नेयमनुपपत्तिरिति न तत्साम्यमत्र वक्तुं शक्यम् ।**

**अथ ब्रह्मेतरसर्वमिथ्यात्ववादिनां मते ब्रह्मशब्दसाधुत्वस्यापि मिथ्यात्वेनासाधुत्वस्येष्टत्वात्** तत्प्रसङ्गस्त्विष्टप्रसङ्ग एवेति शङ्कामनुभाष्य तत्रैवं प्रसङ्गरूपेण समाधिरुक्तः । **हन्त तर्हि सर्वशब्दासाधुत्वं, साध्वसाधुविवेकाभावे च कृतं साङ्गोपाङ्गैः वेदैरिति ।**

**साधुत्वमिथ्यात्वेऽनुपपत्तिः**

न चात्र यत्पुनः शब्दानामिव तद्धर्मस्य साधुत्वस्य मिथ्याभूतस्यापि यावद्बाधमर्थक्रियाकारित्वात् मिथ्यात्वस्येष्टत्वेऽपि न हानिः ।

न चैतावताऽत्र साध्वसाधुविवेकाभावः । व्यवहारदशायां बाधाबाधाभ्यां तदुपपत्तेः । अत एव वेदप्रामाण्यमपि व्याख्यातमित्युक्तं, तत् युक्तं—शब्दगतसाधुत्वस्य मिथ्यात्वेनानिर्वचनीयतया असाधुत्वमेव पारमार्थिकमिति तवेष्टप्रसङ्गत्वेनोपगमे पारमार्थिकसाधुत्वाभावस्याद्वैतमते सर्वशब्दसाधारण्येन तदभिप्रायेण साध्वसाधुव्यवस्थाया व्यवहारदशायामपि दुर्निर्वहत्वात् ।

साध्वसाधुविवेकाभावे च 'एकश्शब्दस्सुष्ठु प्रयुक्तः' "आहिताग्निरपशब्दं प्रयुज्य, 'न म्लेच्छितवै नापभाषितवै" इत्येवं साधुशब्दविधि-

प्रायश्चित्तविधि-अपशब्दप्रयोगनिषेधादीनामपौरुषेयानामप्यप्रामाण्येन तुल्यन्यायादन्यत्रापि तथेति प्रमितिजननलक्षणप्रयोजनाभावात् कृत्स्नवेदतदङ्गोपाङ्ग-वैफल्यप्रसङ्गो दुर्वार एव स्यात्। तस्मादसाधुत्वप्रसङ्गस्य शब्दान्तरेषु साधुत्वे क्लृप्तप्रयोजकस्याभावेन साधुत्वतुच्छतायामेव तात्पर्यस्याभ्युपगन्तव्यतया तत्राद्वैतिभिरपि इष्टापत्तेः कर्तुमशक्यत्वात्। तत्सिद्धमनिष्टप्रसङ्ग एवायमपरिहार्यश्चेति।

अथ वृत्तिमत्त्वं बोधकत्वमेव वा साधुत्वमस्तु, लक्षणादिना तत्संभवात्, अतो नोक्तप्रसङ्ग इत्याशङ्कायामुक्तं "**मुख्यार्थशून्यस्य तन्मूलवृत्त्यन्तरे लिङ्गत्वे चासंभवति कथं क्वचिद्बोधकत्वमपीति।**

**अर्थवादानामपि शक्तिमूलैव लक्षणा**

न चात्रार्थवादानामिवावाचकत्वेऽपि लक्षकत्वं सत्यादिपदानां न विरुद्धयत इति समाधानं साधीयः। 'वायुर्वै क्षेपिष्ठा देवता' इत्यादौ शक्यार्थक्षेपिष्ठत्वादिगुणसंबन्धेनैव लक्षणा इत्युपवर्णनात्। क्वचिच्छक्यार्थ-संबन्धिलक्ष्यार्थसंबन्धेन।

न चार्थवादगतैनैकेन पदेन लक्षणायामितरपदवैयर्थ्यप्रसङ्गेन पद-समुदायात्मकवाक्यस्यैव लक्षणाया अभ्युपगन्तव्यतया समुदायात्मकस्य वाक्यस्य च शक्त्यनुपगमात् शक्त्यघटितस्यैव संभावितसंबन्धविशेषस्य तत्र लक्षणारूपत्वमङ्गीकर्तव्यमिति वाच्यम्। पदार्थबोध इव वाक्यार्थबोधेऽपि पदशक्तेः प्रयोजकतया पदशक्तिबोध्यसंबन्धस्य लक्षणात्वस्वीकारे पदवाक्य-लक्षणोपपत्तेः। तदुक्तं परिभाषायामपि 'शक्त्या यत्पदेन ज्ञाप्यते तत्संबन्धो लक्षणा। शक्तिज्ञाप्यश्च यथा पदार्थः, तथा वाक्यार्थोऽपीति न काचिदनुपपत्तिरिति।

तस्मात् यस्य शब्दस्य न क्वचिदपि शक्तिरुपेयते न तस्य वृत्त्यन्तर-प्रत्याशावकाशः, मुख्यार्थयोगेनैव लक्षणाश्रयणात्। तदुक्तं—

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।**
**अन्यार्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया॥**

इति।

अथ शक्त्यभावेऽपि अर्थविशेषे आधुनिकसंकेतेन गावी गोणीत्यादिवदपभ्रंशरूपतया वा प्रयोगे सति शक्तिभ्रमात् बोधकत्वं बोध्यसंबन्धरूपलक्षणावृत्तिमत्वं च स्यादित्याशङ्कायामुक्तं **'न च सांकेतिकोऽयमपभ्रंशो वा येन वाचकत्वाभिमानात् बोधकत्वं स्यादिति ।**

अत्र ब्रह्मशब्दस्य सांकेतिकत्वमपभ्रंशत्वं चोभयमपि कण्ठरवेण निरस्तम् । उभयनिरासहेतुश्चापौरुषेयत्वमिति स्फुटमित्याशयेन न विशेषतो निरदिश्यत, न तु सांकेतिकत्वस्यानिरसनीयत्वाशयेन, न च सांकेतिक इति प्रतिज्ञाविरोधात् । अपभ्रंशात्मकत्वस्य निरसनायापौरुषेयत्वस्य हेतुतया विवक्षाया आवश्यकत्वाच्च । अपौरुषेयत्वे एव हि संकेतवदपभ्रंशप्रयोजकाशक्तिविशेषस्याप्रसक्त्या अपभ्रंशताया अपि न प्रसक्तिस्स्यात् ।

यद्यप्यपभ्रंशत्वपक्षे पृथगेवानवस्थादिदूषणान्तरं वक्ष्यते **यस्येति ।** तथाऽपि तत्रापौरुषेयत्वविरोध एव प्रधानं दूषणमिति न तदुपेक्षणमिह क्षमम् ।। तस्मादिह पक्षद्वयस्यापि निरासकमपौरुषेयत्वादिति अनुक्तमपि विवक्षितमेव ।

अस्तु वा तदविवक्षितं, तथापि असाङ्केतिकत्वस्य संप्रतिपन्नत्वात् न तत्र हेत्ववचनेऽपि काचित् क्षतिः । न हि डित्थादिशब्दवत् ब्रह्मशब्दस्य सांकेतिकत्वं कश्चिदुपैति ।

### साङ्केतिकत्वे शतदूषण्यननुमतिः

एतेन प्रत्यस्तमितभेदं यदिति पुराणवचनं निर्विशेष एव ब्रह्मशब्दस्य सांकेतिकत्वगमकमिति पक्षमुपक्षिप्य अमुं च पक्षं शतदूषण्यपि 'न च सांकेतिकोऽयमपभ्रंशो वेति ग्रन्थशेषे अपभ्रंशपक्षायोग एव युक्तीनां निर्देशात् सांकेतिकपक्षस्यादूषणाच्च हृदयेनानुमन्यते इत्युक्तमपास्तम् । सांकेतिकत्वपक्षस्यानुमतिलेशेऽपि सति "न च सांकेतिक" इति प्रतिषेधानुपपत्तेः । कथंचिदनुमतिसद्भावे विधिप्रतिषेधयोरौदासीन्येन हि भाव्यम् । सांकेतिकत्वेऽपौरुषेयत्वस्य बाधकतायास्स्फुटत्वाभिधानाच्च । अत एवोक्तपुराणवचनस्य परोक्तार्थवर्णनमप्यनुपपन्नम् । अपौरुषेयब्रह्मशब्दस्य सांकेतिकत्वानुपपत्तेः ।

**पुराणबलात् साङ्केतिकत्वासिद्धिः**

यदुक्तं—इदं वचनं भगवच्छरीरशुद्धप्रत्यगात्मपरमिति श्रीभाष्यानुयायिनां विवरणं विष्णुपुराणप्रकरणादिविरुद्धमिति ।

तन्न, मुक्तात्मपरतया श्रीभाष्यविवरणस्यैव पुराणप्रकरणानुगुणत्वात् । तथा हि—'कथ्यतां मे महाभाग, चेतसो यश्शुमाश्रयः' इति पृष्टः केशिध्वजः शुभाश्रयं वक्ष्यन् इतरेषां शुभाश्रयत्वव्युदासाय प्रथमतः

**"आश्रयश्चेतसो ब्रह्म द्विधा तच्च स्वभावतः ।**
**भूप मूर्तममूर्तं च परं चापरमेव च ॥"**

इत्यादिना भगवद्रूपं बद्ध-मुक्तात्मवर्गं मूर्तामूर्तरूपेण परापररूपेण च विभज्य ततः 'त्रिविधा भावना भूप' इत्यादिना प्रथमतो भावनात्रितयवत्वेन बद्धात्मरूपं मूर्तं प्रतिपाद्य तदनन्तरं प्रत्यस्तमितभेदमिति मुक्तात्मरूपं अमूर्तं देवादिभेदरहितं निर्दिश्य तच्च विष्णोः परं रूपमरूपाख्यमित्यनेन पूर्वोक्तममूर्तपररूपमेतदेव मुक्तात्मरूपमिति प्रत्यभिज्ञाप्य तस्य च—

**"न तद्योगयुजां शक्यं नृप चिन्तयितुं यतः ।"**

इति शुभाश्रयत्वं हि प्रतिषेधति । उत्तरत्रापि इदमेवामूर्तपररूपं

**"विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथा परा ।**
**अविद्या कर्म संज्ञाऽन्या तृतोया शक्तिरिष्यते ॥"**

इत्यत्र विष्णोः परशक्तित्वेन व्यपदिश्य तदेव पुनः

**"द्वितीयं विष्णुसंज्ञस्य योगिध्येयं महामते ।"**

अमूर्तं ब्रह्मणो रूप मिति अमूर्तरूपं ब्रह्मव्यतिरिक्तमिति स्फुटीकृत्य 'समस्ताः शक्तयश्चैता नृप यत्र प्रतिष्ठिताः' इत्यादिना परशक्त्याऽऽत्मनः प्रत्यस्तमितभेदमिति पूर्वोक्तमूर्तरूपस्याप्याश्रयभूतं जगद्विलक्षणं भगवतो रूपान्तरं प्रदर्श्य तस्यैव हि तद्रूपं विश्वरूपस्य तस्य योगयुजा नृपं चिन्त्यमात्मविशुद्ध्यर्थं सर्वकिल्बिषनाशनमित्यादिना शुभाश्रयत्वं प्रतिपादयति ।

अस्मिन् प्रकरणे ब्रह्मणोऽमूर्तपररूपत्वेन विष्णुपरशक्तित्वेन शुभाश्रयेतरत्वेन ब्रह्मातिरिक्तत्वेन शुभाश्रयविष्णुरूपान्तरप्रतिष्ठितत्वेन च पूर्वा-

परश्लोकसमधिगतस्वरूपस्यैव प्रत्यस्तमितभेदमिति निरूपणात् तस्य देहादि-भेदरहितशुद्धात्मपरत्व एव स्वारस्यावगमात् । परब्रह्मपरत्वोपगमेऽपि संकेतासंभवोक्त्या शक्तेरेव वाच्यतया परेष्टासिद्धिः । अगोचरं वचसामिति स्वोक्तिविरोधात् । एवं ब्रह्मशब्दस्य क्वचिदपि शक्त्यनुपगमे वृत्त्यन्तरस्याप्यसंभवेन प्रकारान्तरस्य चाप्रसक्त्या बोधकत्वस्यैव दुर्वचत्वेन असाधुत्व-प्रसङ्गो दुष्परिहर इत्युक्तम् ।

अथ ब्रह्मशब्दस्यैव केनचिद्वैभवातिशयेन मुख्यार्थविरहेऽपि यदि लक्षणया बोधकत्वं स्यादित्युच्येत तदा तदुक्तिरुपालभ्यते तदिदं वन्ध्यायाः पौत्रदर्शनमित्यादिना ।

### अवाच्यस्य लक्ष्यतोक्तेरसङ्गतिः

यत्त्वत्र ब्रह्मशब्दस्य सौषुप्तानन्दादेरिव पदार्थनिर्णयाद्युक्तरीत्या पदान्तरावाच्यत्वेऽप्यप्रमेयत्वेऽपि वा लक्षणया प्रतीत्यविरोध इति प्रत्यवस्थानं; तदसंबद्धमेव । ब्रह्मशब्दस्येत्यस्यास्मिन् वाक्येऽनन्वयात् ब्रह्मशब्दस्य मुख्यार्थविरहे द्वारलोपेन लक्षणयाऽपि कस्यचिदर्थस्य बोधकत्वं न स्यादित्याक्षेपे लक्ष्यस्यार्थस्य पदान्तरावाच्यत्वेऽपि लक्षणया प्रतीत्यविरोध इत्यस्य भिन्नविषयत्वेनाम्रान् पृष्ट इति न्यायेन समाधित्वासंगतेश्च । प्रकृते मुख्यार्थरहितेनापि पदेन केनचित् लक्षणया प्रतीति हि क्वचित् निदर्शनीया; सत्येव खलु निदर्शयितुं शक्यते । अशक्ये च मौनमेव ज्यायः, नत्वप्रस्तुतप्रपञ्चनम् ।

किं च पदान्तरावाच्यस्य लक्षणया प्रतीतिरसिद्धा, तीरादिपदवाच्यस्यैव लक्षणया गङ्गादिपदात् प्रतीतेः ।

### सौषुप्तानन्दस्यावाच्यतानुपपत्तिः

न च सौषुप्तानन्दस्य पदान्तरावाच्यस्यैव लक्षणया प्रतीतिः, असिद्धेः । तत्रानुकूलसामान्यपरतया लोकव्युत्पन्नसुखानन्दादिपदान्तरवाच्यत्वाविरोधात् । न च तत्र मानागोचरत्वात् मुख्यवृत्तिर्न संभवतीति वक्तुं युक्तम् । तस्य लक्ष्यत्वव्यपदेशानर्थक्यापत्तेः । न ह्यमेयं लक्ष्यमिति व्यपदेशतः प्रमेयं स्यात् । एवं सति लक्षणाया अप्यनपेक्षणात् क्व लक्षणया प्रतीतिः ? सुखमहमस्वाप्समित्यत्रेति चेत्, किमयं मानसः प्रत्यवमर्श उत शब्दानु-

भवः ? आद्ये शब्दतद्वृत्त्योः कथमस्ति अवसरः। द्वितीयेऽपि किमेवं व्यपदेष्टुरेवायमनुभवः उतान्यस्य श्रोतुः। आद्ये व्यपदेशवैयर्थ्यं, पूर्वमेव व्यपदेशात् तत्कर्तुस्तदर्थानुभवावश्यंभवात्। न ह्यर्थमबुद्ध्वा व्यपदेष्टुं शक्यम्। अन्त्ये च यद्ययमनुभवः श्रोतुः प्रमाणेन स्यात् तर्हि तद्विषयस्यानन्दस्य मानगोचरत्वमनुमतमेव स्यात्, तत एव तत्र मुख्यवृत्तिरपि नाक्षिप्येत।

यदि न प्रमाणेन तर्हि केन पुनरन्येन ? स्वरूपज्ञानेनेति तावत् न वक्तुं शक्यम्। परकीयस्वरूपानन्दस्य स्वस्वरूपज्ञानेन प्रकाशायोगात्। अन्यथा सुखमहमस्त्राप्समिति शब्दव्यपदेशानर्थक्यात् सुखदुःखादिप्रतिसंधानव्यवस्था च न स्यात्। अतः प्रमाणत एव तदनुभव इत्यस्य वक्तव्यतया मानगोचरत्वं सिद्धम्। अत एव तस्याप्रमेयत्वोक्तेरपि व्याहतत्वात् मुख्यवृत्तिसत्त्वे बाधकविरहेण लक्षणानुधावनं व्यर्थम्। एवं च सौषुप्तानन्दस्यावाच्यत्ववत् लक्ष्यत्वमप्यसिद्धमेव।

न च शरीरवाचकानां पदानां शरीरिपर्यन्तत्वेन यस्य पृथिवी शरीरं 'आकाशस्संभूतः' इत्यादौ विशेष्यमात्रे विशेषणमात्रे वा मुख्यवृत्तस्य शब्दस्य कस्याप्यभावेऽपि विशेषणविशेष्यांशयोः निष्कर्षविवक्षया पृथक् पृथगेवानुमतस्य बोधस्य संपत्तये अवाच्येऽपि विशेषणाद्यंशमात्रे लक्षणाभ्युपगमावश्यंभावात् श्रीभाष्यानुयायिनामपि वृत्त्यनुपपत्तिरियं समानैवेति वाच्यम्।

**निष्कर्षविवक्षायामपि शक्त्यैव बोधः**

विशेष्यांशमात्रपरतयाऽभिमतस्य यस्येति पदस्य आत्मन इत्यस्य ब्रह्मादिपदस्य च शरीरवाचकपदत्वाभावेन शरीरविशिष्टपरत्वाप्रसक्त्या गुणविशेषतदधीननिरतिशयोत्कर्षादिप्रवृत्तिनिमित्तविशिष्टविशेष्यमात्रशक्तत्वेन तत्र लक्षणाया अनपेक्षणात्। विशेषणांशमात्रेऽपि शरीरवाचकस्य शरीरिपर्यन्तबोधिन्या शक्त्यैव शरीर्यग्रहणेन तात्पर्यविशेषेण वा चार्वाकादेः पिण्डमात्रे गवादिशब्दस्येवाकाशादिशब्दस्यापि भङ्क्त्वा प्रयोगोपपत्तेः, तत्रापि लक्षणाया अविवक्षणात्। अत एवाकाशादिपदं भूताकाशादौ मुख्यवृत्तमिति लोकव्यवहारस्याप्युपपत्तिः।

एवं जातिवाचकपदेन व्यक्तिलक्षणापक्षेऽपि व्यक्तिवाचकं व्यक्त्यादि-पदान्तरमस्त्येवेति नावाच्यस्य लक्षणा । अतो न कुत्रापि पदान्तरावाच्यस्य लक्षणया प्रतीतिः ।

**न्यायरत्नदीपावलीबहिष्कारः**

एतेन इक्षु क्षीरमाधुर्यविशेषोऽवाच्योऽपि लक्ष्यते नात्र लक्षणाऽपीति चेन्न, अत्रेत्यनुवादाभावप्रसङ्गात् । एवं लक्ष्यस्य न मेयत्वनियमोऽपीति न्यायरत्नदीपावल्युक्तमप्यपास्तम् । अमेयत्वे लक्षणाधीनमिति विषयत्वाभावेन लक्ष्यत्वासंगतेः, लक्ष्यमिति निर्देशानुपपत्तेश्च ।

न चोपाधिरहितं लक्ष्यमिति निर्देशोह्युपाधिराहित्योपलक्षितं लक्ष्य-मिति श्रोतुर्निश्चयोपपत्तेरित्युक्तिरत्र कथं चिदपि परिहृति भंवितु मर्हति । लक्ष्यमिति निर्देशाधीननिश्चयविषयत्वोपगमेऽमेयत्ववचनव्याघातात् ।

स्वयंप्रकाशस्वरूपनिश्चये च लक्ष्यमिति निर्देशाद्यानर्थक्याच्च । एवं

**दण्डितात्पर्यनिर्णयः**

**इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।**
**तथाऽपि न तदाख्यातुं सरस्वत्याऽपि शक्यते ।।**

इत्यत्र दण्डिनाऽपि 'नावाच्यो लक्ष्य इत्युच्यते किं तु तत्तदनुभवैक स्फुटवेद्य इक्षु क्षीरादिमाधुर्यगतपरस्परव्यावृत्तवैजात्यविशेषो विशेषतः केनापि शब्देन कयाऽपि वृत्त्या केनापि वक्त्रा कथयितुं न शक्यत इत्येवोच्यते न तु मुख्यवृत्ति-मात्रेण कथयितुं न शक्यत इति । सामान्यनिर्देशस्य विना गमकं विशेषमात्र-परतया संकोचानुपपत्तेः ।

**इति मार्गद्वयं भिन्नं तत्स्वरूपनिरूपणात् ।**
**तद्भेदास्तु न शक्यन्ते वक्तुं प्रतिकविस्थिताः ।।**

इति खल्वस्य पूर्वश्लोकः । तत्र विद्यमाना अप्यवान्तरभेदा वक्तुं न शक्यन्त इत्युक्तमर्थं दृष्टान्तेन समर्थयितुमितिश्लोकः । अत एव स्वसंवेद्य इति व्याख्यातारः ।

न च लक्षणावृत्तेरपि तत्रानभ्युपगमे अत्रेति तदनुवादोऽपि न स्यादिति प्रसंजयितुं युक्तम् । सामान्यतस्तत्राभिधानोपगमेनानुपपत्त्यभावात् । इक्षुमाधुर्यमीदृशं क्षीरमाधुर्यमेतादृशमिति तस्य विविच्य विशेषतो वक्तुमशक्यत्वेऽपि इक्षुमाधुर्यविजातीयमेव क्षीरमाधुर्यमिति सामान्यतोऽभिधाय तथैव तदेतदादि सर्वनामशब्देनापि शक्तिवशादेव सामान्यत एवं पुनरनुवादेन विशेषतो बोधौपयिकशब्दवृत्तिसामान्यप्रतिषेधे विरोधाभावात् ।

एतावता इक्ष्वादिमाधुर्यविशेषस्य सामान्याकारेण मुख्यवृत्त्यैव बोधकानां पदानां सत्त्वेऽपि विशेषरूपेण कयाऽपि वृत्त्या बोधकं न किंचिदप्यस्ति पदमिह प्रपञ्च इति संपिण्डितो दण्ड्याशय इति प्रतिपादितं भवति ।

अथापि सामान्यवाचिपदात् साक्षात्परम्परया वा केषांचिद्विशेषप्रतिपत्तिः स्वानुभववासनयैव संपद्यत इत्यवधेयम् ।

अत एव दण्ड्यप्यालङ्कारिकः इक्षुक्षीरगुडादीनामिति पदावाच्यस्यापि न्यायरत्नदीपावल्याद्युक्तरीत्या गुडादिमाधुर्यविशेषस्य लक्षणयैव बोधमङ्गीकरोति इत्युक्तिरपि निर्युक्तिकैव ।

### न्यायपरिशुद्धिविसंवादः

यच्चाथ संवादलोभातिशयादुक्तं, किं बहुना न्यायपरिशुद्धिरपि शतदूषणीकाराणामेव । लक्षणानिरूपणे "उक्तं च तन्त्रान्तर" इत्युपक्रम्य न हि प्रतीतमिति सर्वं निर्देष्टुं, शक्यं, सर्वलौकिकपरीक्षकव्यवहृतस्य घटस्यापि पृथुबुध्नादिमत्वाङ्गुलिनिर्देशविषयत्वादेस्साधारणत्वात्, तद्विशेषस्य तु दुर्वचत्वादिति वदतीति ।

तच्च भ्रमसाम्राज्यविजृम्भितं, तथा हि यद्यप्येतानि वाक्यानि न्यायपरिशुद्धौ प्रायेण सन्ति, तथापि न लक्षणानिरूपणप्रकरणे; किं तु लक्षणनिरूपणप्रकरण एव । तथा न तन्त्रान्तर इत्युपक्रमः किं तु उक्तं हि तत्त्वरत्नाकर इति । ततः परमयं श्लोकः

**अर्था साधारणाकारप्रतिपत्तिनिबन्धनम् ।**
**स्व सजातीय विजातीय व्यवच्छेदेन लक्षणम् ॥**

इति । ततः प्रमेयनिष्कर्षकस्य प्रमाणस्येतरव्यवच्छेदांशे सहकारितयैव जात्यादिर्लक्षणमुच्यते । तत्त्वनिष्कर्षे तु प्रमाणमेव शरणमिति प्रत्यपादि । ततः 'एतेन लक्षणानिरुक्तिमात्रेण लक्ष्यमपलपन्तो निराकृताः इति वाक्यं; ततो न हि प्रतीतमित्यादीनि पूर्वोदाहृतवाक्यानि, तदनन्तरं उक्तं च दण्डिना इक्षुक्षीरगुडादीनामितिश्लोक उदाहृतः ।

अत्र लक्षणस्य प्रमेयनिष्कर्षे प्रमाणसहकारित्वमिति न्यायपरिशुद्धावुपगमेन क्वचित् लक्षणस्य दुर्वचत्वेऽपि सहकार्यन्तरसंनिहितप्रमाणबलाधीनप्रमेयनिष्कर्षो दुरपलप इति पूर्वोक्तार्थः क्वचिद्विषयविशेषे प्रदर्श्यते न हि प्रतीतमित्यादिना ।

पृथुबुध्नादिमत्वसामामन्यस्य कुसूलादिसाधारण्येऽपि तद्विशेषस्य घटासाधारण्यं स्फुटप्रत्यक्षसिद्धमेव । अथापि केनापि पदेन न केवलं मुख्यवृत्त्या; किं त्वमुख्ययाऽपि वृत्त्या स वक्तुं न शक्यते इति न लक्षणं भवितुमर्हति तद्वदन्यत्रापि बोधकपदाभावेन लक्षणाभावेऽपि तावता प्रमाणसिद्धः प्रमेयनिष्कर्षो दुरपह्नव एवेति भावः ।

अत्र यद्यपि लक्षणावृत्तेर्न प्रसक्तिः; तथाऽपि मुख्यवृत्त्यभावेऽपि लक्षणास्वीकारे तु नोक्तरीत्या लक्षणदुर्भिक्षावकाशस्स्यात् । लाक्षणिकपदेनापि निर्देष्टुं शक्यत्वात् । उक्तं च निर्देष्टुं न शक्यमिति । अतो मुख्यवृत्त्यभावे लक्षणादेरपि न प्रसक्तिरित्येव न्यायपरिशुद्धेरप्याशयः स्फुटो भवतीति तदुपादानमन्ततः स्वाभिमतविपर्ययायैवावकल्पेत । तथा च ब्रह्मशब्दस्य क्वचिदपि मुख्यवृत्त्यनुपगमे तन्मूलकवृत्त्यन्तरस्याप्यसंभवेन बोधकत्वानुपपत्तेरसाधुत्वापत्त्या शब्दान्तरेऽप्येतन्न्यायस्य तुल्यत्वेन शब्दैकसमधिगम्ये ब्रह्मणि प्रमाणाभावस्यैव ब्रह्म लक्ष्यमित्युक्त्या पर्यवसनात् ब्रह्मणस्तुच्छत्वमेव समर्थितं स्यादित्याशयेन दूषयति—"मुख्यार्थशून्येन ब्रह्म लक्ष्यमिति वदता तदपि मुखान्तरेण संवृतिमुखे निक्षिप्त" मिति ।

ननु ब्रह्मशब्दस्य अन्यत्रामुख्यत्वं समर्यते—**अन्यत्रह्युपचारत** इति । परस्य तु ब्रह्मणोऽवाच्यत्वं प्रमाणादवसीयते । 'यतो वाचो निवर्तन्ते' 'न शब्दगोचरो यस्य' 'योगिध्येयं परं पद' मित्यादौ । श्रोतव्यत्वं चान्यत्र श्रूयते "श्रोतव्यो मन्तव्य"-इति । अतः प्रमाणविरोधपरिजिहीर्षया मुख्यार्थ-

शून्येनैव ब्रह्मादिपदेन शब्दमहिम्ना विषयमहिम्ना वा ब्रह्म लक्ष्यमित्युपेतव्य-मित्यत्राभिधीयते—अवाच्यवादाश्च वाच्यवादेन निरसिष्यन्त इति । 'तद्-ब्रह्मेत्यभिधीयते'—'तस्मादुच्यते परं ब्रह्म वचसां वाच्यमुत्तममित्यादि-प्रमाणगणाविरोधाय वाङ्निवृत्तिवचनानामपरिच्छेद्यमाहात्म्यनिबन्धनताया वक्तव्यतया वाच्यत्वविरोधित्वाभावेन अवाच्यमिति वादाः प्रामाणिकानामनु-पादेया एवेति शब्दावेद्यत्वभङ्गे उपपादयिष्यत इति भावः ।

**अवाच्यत्वे वाच्यमित्यपि दुर्वचम्**

यदुक्तमत्र विनाऽपि वाच्यत्वान्तरं वाच्यत्वं यथा वाच्यत्वपदवाच्यं तथा ब्रह्म अवाच्यपदवाच्यत्वेऽपि अवाच्यमेवेति ।

**अवाच्यमिति वाच्यं चेद् ब्रह्म वाच्यत्वमृच्छति ।**
**अवाच्यमित्यवाच्यं चेद् ब्रह्म वाच्यत्वमृच्छति ॥**

इति वक्ष्यमाणदूषणस्य मिथ्यात्वस्य मिथ्यात्वे प्रपंचसत्यत्वस्येव न प्रसरः । वाच्यत्वावाच्यत्वयोरेकबाधकबाध्यत्वादिति ।

तदपेशलम्—वाच्यत्वे वाच्यत्वान्तरानुपगमेऽपि ब्रह्मणि वाच्यत्वो-पगमे तेनैव हि ब्रह्मणस्तद्गतवाच्यत्वस्य च वाच्यत्वव्यवहारनिर्वाहस्स्यात् । स्वपरनिर्वाहकसमाधेस्स्वप्रकाशवादादावद्वैतिभिरपि परिग्रहात् ।

ब्रह्मण्यपि वाच्यत्वानुपगमे तु अवाच्यपदवाच्यत्वस्य स्वपरनिर्वाह-कविधयाऽपि निर्वाहकान्तरस्याभावेनावाच्यत्वस्य दुर्वचत्वे वाच्यत्वसिद्धेरव-र्जनीयत्वात् वचसां वाच्यमुत्तममित्यादिप्रमाणतो व्यवहारदशायामेव अवा-च्यत्वस्य बाधेन वाच्यत्वतदभावयोरेकबाधकबाध्यत्वं चायुक्तमेव । वाच्य-त्वावाच्यत्वयोरेकबाधकबाध्यत्वोपगमेऽपि नावाच्यत्वसिद्धिप्रत्याशावकाशः । एकबाधकबाध्यत्वं च समानसत्ताकत्वे प्रयोजकमित्यद्वैतसिद्धावुक्तत्वेन तत्रैव विषमसत्ताकयो र्भावाभावयोरविरोधित्वेऽपि समसत्ताकयोर्विरोधिताया अनु-मतत्वेन च समसत्ताकयोर्वाच्यत्वावाच्यत्वयोः परस्परविरहरूपयोरत्यन्त-विरुद्धत्वेनाद्वैतिभिरपि सत्यत्वमिथ्यात्वयोरिव समुच्चयोपगमस्याप्यशक्यत्वेना-न्यतरपरिशेषावश्यंभावे वाच्यत्वोपगममन्तराऽवाच्यत्वस्योक्तरीत्या दुर्वचत्वेन वचसां वाच्यमुत्तममित्यादिना वाच्यत्वसिद्धेरेव निष्प्रत्यूहत्वात् ।

वस्तुतस्तु सत्यत्वमिथ्यात्वसमुच्चयो मिथ्यात्वमिथ्यात्वेऽपि प्रपञ्च-स्यापि बाध इत्येतदप्ययुक्तमेवेति परस्तादुपपादयिष्यते; अत्र त्वन्वारुह्यापि दृष्टान्तवैषम्यं दर्शितम् ।

यत्तु—अवाच्यत्ववादोऽभिधावृत्त्या लोकव्यवहारसिद्धया अबोध्य-त्वमादायैवेत्यवाच्यादिशब्दा अपि ब्रह्मणो लक्षणया बोधका एव मन्यन्ते न वाचका इति न विरोध इति ।

तन्न:,—उभयोरपि वृत्त्यो र्लोकसिद्धत्वाविशेषेण अभिधैव निषि-द्धयते न लक्षणावृत्तिरित्यत्र नियामकादृष्टे: ।

**काल्पनिक वाच्यत्वोपगमे दूषणम्**

यच्चात्र काल्पनिकवाच्यत्वाभ्युपगमेन समाधानं तच्च वाच्यत्वा-नुमानसिद्धसाधनवारणावसरे घटाद्यविशेषप्रसङ्गेन प्रत्युक्तं—घटादीनां लोक-सिद्धं शब्दवाच्यत्वमपि काल्पनिकमिति ह्याहुरद्वैतिन: ।

न च वाच्यत्वांशेऽयमिष्टप्रसङ्ग इति वाच्यं । तर्हि अवाच्यं ब्रह्मेति वादस्य ग्राह्यत्वायोगात् । न च पारमार्थिकवाच्यत्वविरहात् तद्ग्रहोऽपि युक्त इति वाच्यं; तथा सति तस्य घटादिसाधारण्येन ब्रह्मणि केवलमवाच्य-वादस्य विशेषतो वाच्यत्वानुपपत्ते: ।

वस्तुतस्तु पारमार्थिकमेव घटादिष्वपि लोकसिद्धं शब्दवाच्यत्वं ब्रह्मण्यपि तत् तथैवेति वेदान्तिनां मतं; यदि पुनरद्वैतिनोऽपि अस्य स्वागतं ब्रूयु: तर्हि अद्वैतमेव विहन्यु: । अतो वाच्यत्वानुपगमे च तन्मतेऽवाच्यत्वं लक्ष्यत्वं अन्यद्वृत्तिमत्त्वं सर्वमपि दुर्घटमेव स्यात् ।

एतेन यदि तदिदं वाच्यत्वांशमादाय; तर्हि नापत्तिरेवेत्यादिना शत-दूषण्युक्तप्रसङ्गपरिहाराय यदुक्तं तदपास्तं । वाच्यत्वांशमात्रेऽविशेषप्रसङ्गस्यै-वानिष्टत्वोपपादनाद्; सर्वात्मनाऽविशेषप्रसङ्गस्य प्राप्तेरेवाभावात् तन्निरासोद्य-मस्तु निरर्थक एवेति ।

एवं प्रथमविकल्पे द्वितीयं शिरोऽभ्युदस्य प्रथमं शिरो विकल्पयति । अस्ति चेत् किमन्यस्मिन् विचारविषये वेति । तत्राप्यादिम: कल्पो निरस्यते नाद्य इत्यादिना । साधुशब्दस्य प्रवृत्तिनिमित्तावश्यंभावेन ब्रह्मशब्दप्रयोग-

विषयेषु प्रकृत्यादिषु अनुगतजात्यादेरभावात् तत्र निर्वचनाद्यधिगताकार-पौष्कल्यस्योपचारतः प्रयोगान्तरनिर्वाहसंभवात् अनेकार्थत्वस्य चान्याय्यत्वात् 'यद् साक्षादपरोक्षाद्ब्रह्म' तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तः 'तत्रैव मुख्यवृत्तोऽयमन्यत्रह्युपचारतः' इति श्रुतिस्मृतिभ्यां विचारविषयतया अभिमतस्य परस्य ब्रह्मण एव मुख्यवृत्तिविषयत्वावगमात् च ततोऽन्यत्र मुख्यवृत्तिर्न संभवतीति भावः। अधिकमग्रे वक्ष्यते।

### सगुणस्यैव साक्षाद् ब्रह्मत्वं मुख्यब्रह्मत्वं च

यत्तु—यत् साक्षादपरोक्षाद्ब्रह्मेति तु ब्रह्मणोऽपरोक्षत्वमेव साक्षादन्यानपेक्षं प्रतिपादयति न तु ब्रह्मणो मुख्यत्वमिति। तन्न; साक्षादित्यस्य ब्रह्मपदार्थविशेषणत्वे संभवति अपरोक्षत्वरूपपदार्थतावच्छेदकविशेषणत्वोपगमस्यान्न्याय्यत्वात् अपरोक्षादिति निरुपाधिकनिर्देशादेव निरपेक्षापरोक्षत्वस्य लाभेन निरर्थकत्वाच्च ब्रह्मविशेषणतया मुख्यत्वपरत्वमेव हि युक्तमाश्रयितुं; तथा सति 'तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तः' परं जैमिनिर्मुख्यत्वादिति स्मृतिसूत्रसंवादोऽपि संपद्यते। अर्चिरादिगतिसमधिगमस्य सगुणब्रह्मण एव हि विचारविषयतया ब्रह्मशब्दमुख्यार्थत्वं जैमिनिराचार्यो मन्यते।

एतेन परं जैमिनिर्मुख्यत्वादिति मुख्यत्वं तु परस्य ब्रह्मणो मुख्यतात्पर्यविषयत्वमेव; न तु मुख्यवृत्त्या वाच्यत्वादित्युक्तमप्यपास्तम्। परं हि ब्रह्मशब्दस्य मुख्यमालम्बनं; गौणमपरमिति मुख्यार्थपरतयैव मुख्यपदस्य शाङ्करे विवरणात्। अर्चिरादिगतिप्राप्यत्वेन सगुणब्रह्मतया संप्रतिपन्ने मुख्यतात्पर्यविषयत्वोपगमस्यापि निर्गुणप्राधान्यवादिनां विरुद्धत्वाच्च।

द्वितीयं कल्पं निरस्यति **न द्वितीय इति**। अद्वैतमते शुद्धोपहितयोरुभयोरपि विचारविषयत्वोपगमात् तत्र शुद्धे वा मुख्यवृत्तिरुतोपहिते वेति विकल्पे न कश्चन कल्पः क्षणमिहानिरस्तस्स्थास्यतीत्याशयेनाह—**शुद्धोपहितविकल्पासहत्वा**दिति।

### अधिष्ठानत्व-विवर्तमूलत्वयोः बृहत्वबृंहणत्वरूपत्वेऽनुपपत्तिः

बृहति बृंहयतीति निरुक्तप्रवृत्तिनिमित्ताभावात् प्रकृतमाद्यकल्पं निरस्यति **न हीति**। अधिष्ठानत्व विवर्तमूलत्वे एव बृहत्व बृंहणत्वे। ते च

शुद्धेऽपि संभवत इत्यस्ति सनिमित्ततेति शङ्कामपाकरोति । नेति । उपपादयति तत्र तदुभयानभ्युपगमादिति । निर्विशेषतयाऽभिमते तत्र तयोरुपगमे स्वरूप एवान्तर्भावो वक्तव्यः । तथाऽभ्युपगमे स्वरूपस्येव तदन्तर्गताधिष्ठानत्वादेरपि मुक्तिदशायामवस्थित्युपगमावश्यंभावेनाध्यासनिवृत्तेरसंभवात् मुक्तिविरोधस्स्यादित्याह अन्यथा मुक्तेरेव मुक्तेरिति ।

स्वरूपान्तर्गतसर्वविवर्ताधिष्ठानत्व-तन्मूलत्वयोस्सर्वं विनाऽनुपपन्नत्वात् मुक्तिदशायामपि तदवश्यंभावेन सर्वसद्भावे ब्रह्मातिरिक्तसर्वबाधरूपाद्वैतमतमुक्तेरेव वा संभव इति भावः ।

**अविद्यानिवृत्तेरात्मस्वरूपत्व-पञ्चमप्रकारत्वयोरनुपपत्तिः**

एतेन विवर्तवादाङ्गीकारे मुक्तेरपि मुक्तिस्स्यादिति शतदूषणी । तत्र प्रथमेन मुक्तिपदेन यदि तदीया मुक्तिर्विवक्ष्यते द्वितीयेन च तस्या बाधस्तर्हि बाढम् । अद्वैतिनां मुक्तिस्तु यदि पञ्चमप्रकाराविद्यानिवृत्तिः; यदिवाऽऽत्मस्वरूपं; उभयथाऽपि नाविद्योपादानिकेति न तस्या अपि मुक्तिरापद्यत इत्युक्तमपि प्रत्युक्तम् ।

अविद्यानिवृत्तेरात्मान्यत्वे दृश्यत्वस्याप्यावश्यकत्वेन अद्वैतमते दृग्दृश्य संबन्धानुपपत्त्यादियुक्तिभिः मिथ्यात्वावश्यंभावेन पञ्चमप्रकारत्वानुपपत्तेश्च ।

अत एव ये तु पञ्चमप्रकारादिपक्षा स्ते तु मन्दबुद्धिव्युत्पादनार्था इति न तत्समर्थनमर्थयाम इत्यद्वैतसिद्धिः । आत्मस्वरूपत्वे तु नित्यतया साध्यत्वानुपपत्तिः ।

न च चरमवृत्त्युपलक्षितस्वरूपस्य मुक्तित्वे उपलक्षणस्य साध्यतया मुक्तेरपि साध्यत्वमिति वाच्यम् चरमवृत्तिनिवृत्त्या मुक्तेरपि निवृत्त्यापत्तेः ।

यद्युपलक्षणविरहेऽप्युपलक्षिता स्थितिरिष्यते तदा पूर्वं बन्धदशायामपि मुक्तिः स्यात् । न च पूर्वमसिद्धस्योपलक्षणत्वायोग इति वाच्यं; पाकयागाद्युपलक्षणक्रियासिद्धेः पूर्वमपि पाकार्थं पाचकमानयति; यागार्थमृत्विजो वृणीत इत्यादिव्यवहारेण निवृत्तस्येव भाविनोऽप्युपलक्षणत्वसंभवादिति दिक् ।

### निर्वचनस्य उपलक्षणपरत्वानुपपत्तिः

**अथ** गोसदृशो गवय इत्यादिवाक्यस्येव ब्रह्मशब्दनिर्वचनस्यापि वाच्योपलक्षणपरत्वेन प्रवृत्तिनिमित्तपरत्वाभावात् न शुद्धे शक्त्यनुपपत्तिरित्याशङ्कामनुभाष्य परिहरति **उपलक्षणार्थमिति** । अत्र न केवलं साधकाभावः, बाधकसद्भावोऽपीत्याह **तस्मादिति** तस्मादुच्यते बृहत्वात् बृंहणत्वाच्चेति श्रुतिस्मृत्योः पञ्चम्या बृहत्वादेः गोत्वादयं गौरित्यादौ गोत्वादेरिव निमित्तत्वावगमेनोपलक्षणत्ववादः श्रुतिस्मृतिबाधित इति भावः । तेन बृहत्वात् बृंहणत्वाच्च तद्ब्रह्मेत्यभिधीयते इत्यस्य उपलक्षणविधया ब्रह्मनिर्वचनपरत्वे न काऽपि बाधेत्युक्तिर्बाधितैव ।

**अथ** बृहत्वादेः स्वरूपातिरिक्तप्रवृत्तिनिमित्तत्वेऽपि व्यावहारिकत्वोपगमात् नाद्वैतविरोध इति शङ्कते **अस्त्वति** परिहरति **कथं तर्हीति** । विशिष्टवाचकत्वोपगमे ततश्शुद्धबोधासंभवेन शुद्धे शक्तिरिति पक्षः परित्यक्त एव स्यादिति भावः । प्रथमं विशिष्टरूपेणोपस्थापितं;पश्चात् स्वरूपेणोपस्थापितमिति शुद्धबोधकत्वात् शुद्धेऽपि वृत्तिरव्याहतैवेति शङ्कामनूद्य दूषयति **तदपीति** । तत्र मुख्यमिति प्रवृत्तिनिमित्तत्यागे शक्तेरप्रवृत्तेर्लाक्षणिकमेव स्यादिति भावः ।

न च विशिष्टनिर्विशेषयोरभेदः; येन विशिष्टवाचकं निर्विशेषस्यापि वाचकमित्युच्येत ? कल्पिताकल्पितयोरभेदायोगात् यदिदं रजतमभात् सेयं शुक्तिरित्यत्र रजतभानविषयत्वेनैव शुक्त्युपदेशः न तु रजतत्वेन ।

यत्तु—विनाऽपि लक्षणां सविशेषशक्तस्यैव विशेष्यमात्रतात्पर्यज्ञानसहकृतस्य निर्विशेषमात्रोपस्थापकत्वमित्यद्वैतदीपिकाऽऽदृतपक्षे नानुपपत्तिलेशोऽपि । तथा च मणिः विशिष्टशक्तेनापि पदेन तात्पर्यान्निर्विकल्पकाकाशस्मरणमिति व्यक्तं चैतत्परिभाषायामपीति ।

### विशिष्टशक्तेन विशेष्यमात्रोपस्थितेर्मणावनुक्तिः

**तन्न**; पूर्वं प्रवृत्तिनिमित्तविशेषद्वारेण विशिष्टमुपस्थापितवत्याश्शक्तेः पश्चात् तथाविधद्वारोपरोधे प्रवृत्त्ययोगेन विशेष्यमात्रोपस्थापकत्वस्याप्यसंभवात् तत्र तात्पर्यस्य प्रामाणिकत्वे लक्षणाया एवाश्रयणीयत्वात् ।

मणावपि न विशिष्टशक्तेन निर्विकल्पस्मरणमिष्यते। किं तु केवलव्यक्तिशक्त्यैव क्वचित्। यथा आकाशपदात् कदाचिदाकाशत्वविशिष्टतयाऽन्यदाऽष्टद्रव्यातिरिक्तद्रव्यत्वेन च प्रतीति र्जायते; तत्र विशिष्टशक्त्युपगमे शक्तिद्वयं कल्पनीयं; तदपेक्षया लाघवात् व्यक्त्यैक्येनाननुगमप्रसक्त्यभावाच्च आकाशव्यक्तिमात्रे एकैव शक्तिरिति स्वीकृत्य तत्तद्विशिष्टोपस्थितिं प्रति तत्तद्विशेषणवत्तयोपस्थितिः व्यक्तिशक्तिग्रह एव हेतुरित्युपेत्य प्रथममतिप्रसङ्गः परिहृतः।

ततः परमथवेति कल्पान्तरमन्वारुह्याकाशपदात् विशिष्टस्मृतिरेव नास्ति; किं तु निर्विकल्पकस्मृतिरेवेत्युक्तं। अत्र तु ग्रन्थकृतो न निर्भर इति पूर्वापरवाक्यस्वारस्यपरामर्शसिद्धम्। भवतु वा निर्भरः; सर्वथा विशिष्टशक्तेन विशेष्यमात्रोपस्थितेरित्यस्य तु नात्र संवादावकाशः। विशेष्यव्यक्तिमात्रशक्तेनैव निर्विकल्पस्मरणानुमतेः। व्यक्तं चेदं शक्तिवादे तदनुवादे च रत्नावल्याम्। अत एव विशिष्टवाचकपदेन विशेष्यमात्रबोधे लक्षणैव प्राचीनाद्वैतिभिरङ्गीकृता। यथोक्त परिभाषायामपि—'अन्तःकरणविशिष्टेनैक्यायोगात् ऐक्यसिद्धचर्थं स्वरूपे लक्षणेति सांप्रदायिका इति।

**विशेष्यमात्रबोधे परिभाषोक्तरीतेरसङ्गतिः**

यत्तु—तत्रैव वयं तु ब्रूम इत्यारभ्य शक्त्युपस्थितविशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरेवाभेदान्वयबोधो विरोधादिति वचनं; तच्चिन्त्यं; विशिष्टशक्तेः विशेष्यं विहाय विशेषणमात्रस्येव विशेषणं विहाय विशेष्यमात्रस्याप्युपस्थापकत्वासंभवात्। अन्यथा नित्यो घट इत्यादौ विशेष्यघटाद्यन्वयानुपपत्तावपि शक्त्युपस्थित एव विशेषणे घटत्वादौ नित्यत्वाद्यन्वये विरोधाभावात्। परिभाषायामेवानुपदं तत्र घटत्वादौ लक्षणान्वयालम्बनं व्याहन्येत। अनित्यो घट इत्यादौ तु घटपदेन विशिष्टोपस्थितावपि विशेष्य एव विशेषणान्वितेऽनित्यत्वमन्वेतुमर्हति न तु विशेषणेऽपि। ससंबन्धिकेतरार्थबोधकपदसमभिव्याहारे पदार्थः पदार्थेनान्वेति न तु तदेकदेशेनेति व्युत्पत्तेः।

विशिष्टान्वयबलादन्योन्यसमवायप्रसङ्गस्तु विशेषणान्वययौगपद्योपगमे न संभवतीति व्यक्तमाकरे। अत एव नीलोत्पलमानयेत्यादौ नीलोत्प-

लादेरेवानयननियम उपपद्यते । अन्यथा कदाचिदनीलस्यानुत्पलस्य वाऽप्यानयनापत्तेः । तथा घटमानयेत्यादौ घटादिपदस्य विशिष्टपरत्व एव घटत्वावस्थान्वितस्यानयननियम उपपद्यते विशेष्यमात्रपरत्वे कदाचिद् मुद्गराभिघातविनष्टघटत्वावस्थस्य मृत्कदम्बस्यानयनापत्तेः । अतो विशिष्टवाचिना पदेन शक्त्यैव न क्वचिदपि विशेष्यमात्रबोध इति विशेष्यमात्रप्रतिपत्तये लक्षणाया एवाश्रयणीयत्वात् न शुद्धे निर्विशेषतयाऽभिमते मुख्यवृत्तेरुपपत्तिसंभव इत्युक्तं भवति ।

**अभिहितान्वयवादेऽपि विशिष्टवाचकान्निर्विशेषबोधानुपपत्तिः ।**

एतेन न्यायरत्नावल्युक्तरीत्या सविशेषशक्तस्यैव ब्रह्मादिशब्दराशेः ब्रह्मण्यभिहितान्वयवादरीत्या पदाभिहितपदार्थैरेव तात्पर्यवशात् लक्षणया विनाऽपि विशेषणांशान्वयबाधे विशेष्यांशमात्रस्यान्वयानुभवस्वीकारात् साक्षाद्ब्रह्मणि शब्दवृत्त्यविषयत्वं न दोषायेत्युक्तमपास्तम् ।

अभिहितान्वयवादे गौरवदृष्ट्या वेदान्तिनामनभिमतत्वात् ब्रह्मजिज्ञासेत्यत्र ब्रह्मपदमुख्यार्थस्य सविशेषब्रह्मणो जिज्ञास्यतायास्संप्रतिपन्नत्वेन विशिष्टान्वये बाधाभावेन विशेषणमात्रान्वयतात्पर्ये मानाभावात् अभिहितानामर्थानां वाक्यमहिम्नाऽपदार्थस्याप्यन्वयविशेषस्य भानोपगमेऽपि अन्वयातिरिक्तस्य निर्विशेषब्रह्मणश्शब्दवृत्त्यविषयत्वेनापदार्थत्वे भानानुपपत्तेः । एवं वाक्यार्थे लक्षणाया अप्यनुपगमे पदाभिहितानामेव तु पदार्थानां लक्षणया तात्पर्यानुसारेण वाक्यार्थस्य लक्षणं तदुक्तं—

**'सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति न स्स्थितिः'**

इति । स्वोक्तिस्वोदाहृतवार्तिकादिविरोधस्यापि दुर्वारत्वाच्च ।

यत्तु—वाक्यजन्यज्ञानविषयत्वे हि न पदार्थसंसर्गत्वं तन्त्रं; अनभिमतसंसर्गस्यापि वाक्यजन्यज्ञानविषयत्वापत्तेः, किं तु तात्पर्यविषयत्वमिति परिभाषावचनं ।

**तात्पर्यविषयत्वमात्रस्य वाक्यजन्यज्ञानविषयत्वप्रयोजकत्वेऽतिप्रसङ्गः ।**

तन्न; तात्पर्यविषयत्वेनापदार्थस्यापि भानोपगमे लक्ष्यार्थस्यापदार्थत्वेऽपि तात्पर्यविषयत्वेन भानसंभवात् लक्षणाया एवोच्छेदापत्तेः । अतो

वाक्यजन्यज्ञानविषयत्वे तात्पर्यविषयीभूतपदाभिहितार्थसंसर्गविशेषत्वमेव तन्त्रमास्थेयमिति नापदार्थस्य संसर्गेतरस्य वाक्यवेद्यत्वमिति सिद्धम् ।

अथोपहितं मुख्यमिति पक्षोऽप्यद्वैतिमते न संभवतीत्याह—**उपहितमिति** । अत्र प्रामाणिकपारमार्थिकसर्वज्ञत्वाद्युपहितत्वविवक्षायामद्वैतविरोधः । अज्ञानादिदोषोपहितत्वविवक्षायां च मानाभावः । अशुद्धे च सति ब्रह्मणि तत्र भगवच्छब्दमुख्यवृत्तिनिरुक्तिविरोधः, परं ब्रह्मेति स्तुत्यनुपपत्तिः, परमं पवित्रमिति समभिव्याहारदौर्घटयं च दूषणान्युक्तानि ।

उक्तस्थले परब्रह्मशब्देन निर्विशेषस्य लक्षणया निर्दोषत्वेन स्तुत्याद्युपपत्तिस्स्यादित्यत्राह-पूर्वापरादिविसंवादाच्च न कुत्रापि निर्गुणसिद्धिरिति । प्रमाणसामान्यप्रकरणविसंवादेन निर्विशेषस्वरूपस्यैवासिद्धया न तल्लक्षणा युक्तेति भावः ।

न च तत्त्वमसि अहं ब्रह्मास्मीत्यादिवाक्येषु जीवत्वोपलक्षितेश्वरत्वोपलक्षितचिन्मात्रप्रत्यग भिन्न ब्रह्मस्वरूपस्य प्रतिपादनात् निर्विशेषसिद्धिरिति वाच्यं, त्वमहमादिपदानां विशिष्टवाचकत्वेन शक्त्या विशेष्यमात्रपरत्वानुपपत्ते रुक्तत्वात् । शक्यार्थबाधाभावे लक्षणाया अप्ययुक्तत्वाच्च ।

न च तत्र वाच्यार्थयोर्विशिष्टयोरैक्यान्वयानुपपत्त्या लक्षणाश्रयणमिति वाच्यम् । तथाप्यप्रसिद्धनिर्विशेषलक्षणापेक्षया प्रमाणशतप्रसिद्धस्वस्वामिभावादिसंबन्धविशिष्टलक्षणाश्रयस्यैव ज्यायस्त्वात् ।

वस्तुतस्तु मनुष्येभ्यो ज्ञानाधिको देव इत्यादाविव शरीरशरीरिभावेन शक्त्यैव विशिष्टोपस्थापनादभेदान्वयोपपत्तौ लक्षणाया अनावश्यकत्वाच्च ।

न च तथाऽपि तत्त्वंपदाभ्यामाकाङ्क्षायोग्यतादिसहकारेण स्वाभिहितविशिष्टार्थाभिधानद्वारा स्वाभिहितविशिष्टार्थगतवाक्यार्थानुभावकत्व शक्तिविशेषेण लक्षणाख्येन वाक्यप्रामाण्यनिर्वाहार्थं तात्पर्यानुसारेणाखण्डस्वरूपमात्रमन्यत्राप्रसिद्धमपि वाक्यमहिम्ना बोध्यत इत्युक्तं युक्तम् । अभिहितान्वयवादे संसर्गातिरिक्तस्यापदार्थस्यापि वाक्यमहिम्ना तात्पर्यसहकृतेन भानोपगमे लक्षणोच्छेदप्रसङ्गस्य प्रागेवोक्तत्वात् । पूर्वोक्तदिशा तत्त्वंपदा-

भिहितविशिष्टान्वये बाधकाभावेन प्रक्रमे बहुभवनानुप्रवेशसङ्कल्पात्मत्वादि-श्रवणात् पदाभिहितविशिष्टान्वय एव तात्पर्यस्याप्यवधारणात् अत्र वाक्य-महिम्नो वाच्यार्थानतिलङ्घित्वेनाप्रसिद्धतमाखण्डार्थबोधकत्वाभावात् ।

**क्वचिदप्यखण्डार्थस्य न सिद्धिः**

न च त्वं पदार्थस्य प्रत्यगात्मनो विगलितान्तःकरणादिसंबन्धस्य सुषुप्तावसंप्रज्ञातसमाधौ च प्रसिद्धिस्सर्वानुभवसिद्धा । तदुक्तं सिद्धान्तबिन्दौ— सुषुप्त्यसंप्रज्ञातसमाध्योः श्रुतिस्मृतिसिद्धत्वाच्चेत्युक्तं युक्तम् ।

सुखमहमस्वाप्समिति सुखत्वप्रत्यक्त्वादिना प्रत्यवमृश्यमानस्य सौषुप्तात्मनोऽखण्डार्थत्वानुपपत्त्या तदानीं निर्विकल्पकसाक्षिचैतन्यानुभवस्या प्रामाणिकत्वात् । असंप्रज्ञातसमाधिरपि न शब्दवाच्यताविरोधी, अपितु केवलं तदातनशब्दानुसंधानपरपन्थीति समाधिशास्त्रविद इति शतदूषण्या-मेव वक्ष्यते । अतस्तदाऽपि ध्येयगतविशेषानुसंधानेऽविरोधात् नाखण्डार्था-नुभव इति तत्रोभयोरप्यप्रमाणत्वात् ।

न चासंप्रज्ञातसमाधौ

**लयविक्षेपरहितं मनःकृत्वा सुनिश्चितम् ।**
**यदा यात्यमनोभावं तदा तत्परमं पदम् ॥**

तावन्मनो निरोद्धव्यमिति मैत्राय अमनस्कत्व मनोवृत्तिनिरोध-श्रवणात् आत्मेतरभानं न स्यादिति वाच्यम् । बन्धकविषयान्तरवृत्तिनिरोधस्य, अत एवामनस्कतौल्यस्य च तत्रावगमेन मुमुक्षुध्येयगतविशेषानुसंधाने विरो-धानवगतेः । मनोवृत्तिसामान्यनिरोधोपगमे लयविक्षेपरहितमिति लयव्या-वृत्त्युक्तेरनुपपत्तेः । अतो बन्धाय विषयासङ्गिमुक्त्यै निर्विषयं मन इत्यत्रा-पीदमेवाभिप्रेतमिति स्फुटम् ।

नापि

**"यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।**
**बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम् ॥"**

इति कठश्रुत्या निर्विशेषसमाधिसिद्धिः । तत्रापि बाह्येन्द्रियादिनियमनाव-धानश्रवणात् बन्धकविषयमनोवृत्तिनिरोधस्यैवावधारणात् ।

**न च 'यत्रोपरमते चित्तं निरुद्धं योगसेवया।**
**यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ (६-२०)**

इति गीतावचनं मनोवृत्तिसामान्यनिरोधे मानं, विषयान्तरेभ्यो मनोनिरोधेऽपि आत्मविषये तदनवगतेः। अत एवात्मनाऽऽत्मानं पश्यन्' 'आत्मसंस्थं मनः कृत्वा' 'आत्मन्येव वशं नयेत्' इत्यादीन्युपपद्यन्ते। स्वयंप्रकाशे चात्मनि मनोवृत्तिप्रसरस्य तद्गतविशेषालम्बन एव सार्थक्यम्। अतोऽखण्डार्थः क्वचिदपि नावधार्यत इति सिद्धम्।

किं च तत्त्वंपदयोरखण्डार्थबोधकत्वोपगमे प्रवृत्तिनिमित्तभेदाभावेन तद्घटितसामानाधिकरण्यानुपपत्तिः।

न च सामानाधिकरण्यं प्रवृत्तिनिमित्तभेदघटितं, विनाऽपि प्रवृत्तिनिमित्तभेदं संज्ञाशब्दानां सामानाधिकरण्यस्य 'नामन्त्रिते सामान्यवचन' मिति पाणिनिसूत्रस्य सामान्यवचनपदप्रयोजननिरूपणावसरे कैयटादिषूक्तत्वादिति वाच्यं,

**नामन्त्रित इति सूत्रे सामान्यपदप्रयोजनस्य निमित्तभेदे सत्येव संभवः**

भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति भाष्याद्युक्तिविरुद्धत्वेन प्रवृत्तिनिमित्तभेदं विनाऽपि सामानाधिकरण्यमित्यर्वाचीनोक्तीनामद्वैताभिनिवेशमूलकत्वेनाश्रद्धेयत्वात्। सौत्र सामान्यवचनपदप्रयोजनवर्णनेन क्वचिदघ्न्ये देवि सरस्वतीत्यादौ नामतया सामान्यविशेषभावाभावेन पर्यायानामपि पदानां सामानाधिकरण्यस्यानुमतत्वसिद्धावपि प्रवृत्तिनिमित्तभेदाभावेनापि पर्यायानां पदानां सामानाधिकरण्यस्योपगमासिद्धेः।

न च संज्ञाशब्देषु कथं प्रवृत्तिनिमित्तभेद संभवइति वाच्यं, पङ्कजादिपदवत् योगरूढत्वे योगशक्यतावच्छेदकतयाऽभिमतानां भेदेन पद्मादिपदवत् केवलरूढत्वेऽपि एकार्थकभिन्नानुपूर्वीक तथाविधानेकपदसमभिव्याहारे तत्तत्पदानां तत्तत्पदवाच्यत्वावच्छिन्नपरतयैव सार्थक्यस्य वक्तव्यतया तत्तत्पदवाच्यत्वानां भेदेन च प्रवृत्तिनिमित्तभेदसंभवात्। अतस्समानाधिकरणवाक्यस्य नाप्रसिद्धाखण्डार्थलक्षकत्वं युक्तम्।

**सगुणवैकुण्ठाद्यप्रसिद्धिप्रतिबन्दीपरिहारः**

न च सगुणब्रह्मवैकुण्ठलोकादीनामपीयमप्रसिद्धिस्समानेति वाच्यम् । प्रत्यक्षादिप्रमाणान्तरागम्यत्वेऽपि परश्शतश्रुतिस्मृतीतिहासपुराणादिषु मुख्यवृत्त्यैव एवंगुणविशेषमेतल्लक्षणकमिदमिदंपदवाच्यं किंचिदलौकिकमस्तीति स्फुटमभिधानेन तत्तल्लक्षणगुणविशेषवत्त्वेन तत्तत्पदवाच्यानां परोक्षप्रसिद्धेरुपपत्तेः । तथैव ह्युक्थ्यव्यूढादिशब्दैरर्थसिद्धिः, न चैवं निर्विशेषे सिद्धिस्संभवेत् । तत्र प्रथमतो बोधकशब्दस्यैवाभावात्, लक्षणगुणविशेषादेस्साक्षात् प्रसक्त्यभावाच्च न हि विशेषसामान्यशून्यं अवाच्यं किंचिल्लक्ष्यमस्तीति क्वचिदुपदिश्यते, येन तत्सिद्धिः संभाव्यते ।

नचावाच्यमुपदेष्टुं शक्यं; नेति नेतीत्यादिवाक्येऽपि न कृत्स्नाविशेषनिषेध इति प्रागेव निरूपितम् । अध्यारोपादिवादन्यायश्चोन्मत्तादिवाक्यस्यैवानुग्राहको न तु मातापितृसहस्रेभ्यो वत्सलतरस्य शास्त्रस्य । यतो वाचोनिवर्तन्तइत्यविशेषेण प्रवर्तमाना च श्रुतिर्न निर्गुणायाः पक्षे पतितुमर्हति । किं तु स्वघटकयच्छब्दादिसार्थक्याय समानप्रकरणैककण्ठ्यात् परिच्छेद गोचर वाङ्मनोनिवृत्तिमात्रे पर्यवस्यन्ती न ब्रह्मणो वाच्यत्वं पर्युदस्यति । परं तु आनन्दं ब्रह्मणो विद्वानित्यपरिच्छिन्नानन्दिनं ब्रह्मशब्देन निर्दिशन्ती स्वरूपतो गुणतश्चासंकुचित प्रवृत्तिनिमित्त बृहत्वपौष्कल्यादयमेव वाच्यतया मुख्योऽर्थ इत्यभिव्यनक्ति ।

**सगुणेऽपि वृत्त्यनुपपत्तिसाम्यापादननिरासः**

वृद्ध्यर्थकात् बृहिधातोर्निष्पन्नश्च ब्रह्मशब्दः स्वरसतस्स्वरूपतो गुणतश्चासंकुचितमेव बृहत्वं ब्रूयात् । बृहति बृंहयति बृहत्वात् बृंहणत्वाच्च ब्रह्म परिबृढं सर्वत इत्यादिनिर्वचनानामपि गुणतो बृहत्व एव स्वारस्यं सुस्पष्टम् ।

**वेदे भूरिप्रयोगाच्च गुणयोगाच्च शार्ङ्गिणि ।**
**तस्मिन्नेव ब्रह्मशब्दो मुख्यवृत्तो महामुने ॥**
**यस्मिन् प्रयुज्यमाने तु गुणयोगस्सु पुष्कलः ।**
**तत्रैव मुख्यवृत्तोऽय मन्यत्रह्युपचारतः ॥**

इत्यादिषु च पुराणादिषु गुणपौष्कल्यमेव मुख्यवृत्तेर्निमित्तमिति निर्णीयते । हेयप्रत्यनीकज्ञानशक्त्यादिगुणविशिष्टवाचकतया निरुक्तश्च भगवच्छब्दः "शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते" इति परिशुद्धे परब्रह्मशब्दवाच्ये स्मर्यमाणः स्वरूपगुणविभूतिकृतनिरतिशयबृहत्ववत एव ब्रह्मशब्दवाच्यत्वं गमयति । अत एवानवधिकातिशयासंख्येयकल्याणगुणगणः, सर्वज्ञं सर्वशक्तिसमन्वितं चेत्यादिना भाष्यकृतां ब्रह्मशब्दविवरणं; दोषवत्वे गुणहीनत्वे च बृहत्यर्थनिरवधिमहत्वं न संभवतीति अद्वैतिनां व्याख्यानं च । अतस्सगुणे ब्रह्मशब्दादीनां मुख्यवृत्तेर्न काचिदनुपपत्तिः, किं तु निर्गुण एव । तेन यश्चोभयोस्समो दोष इति परोक्तस्य नात्र प्रसक्तिः । अप्रसिद्धि–वृत्त्यनुपपत्त्यादिदोषाणां निर्गुणवादमात्रविश्रान्तत्वात् । तथा च वेदान्तेषु क्वचिदपि मुख्यतयाऽमुख्यतया वा निर्विशेषस्य वस्तुनः परिस्फूर्त्यभावात् तस्य यदत्र सर्वप्रकरणनिर्गलितत्ववचनं तत्तु सर्वप्रकरणबहिर्भूतत्वेनैव निर्वोढव्यं; नत्वन्यथा ।

### अन्यपरसुरेश्वराचार्यवार्तिकोदाहरणासङ्गतिः

अत्र सुरेश्वराचार्यकारिकोदाहरणं तु न कथंचिदपि संगतम् । न हि तत्र पदात् प्रतिपाद्यमानेऽर्थे विशेषणतया प्रथमोपस्थितप्रवृत्तिनिमित्तस्यापि विरोधिना पश्चादभावः प्रतीयत इत्युच्यते येन निर्विशेषसाधनात् प्रकृते संगतिस्स्यात् । किं तु शब्दाधीनप्रवृत्तिनिमित्तान्वयभानानन्तरभाविन्याः तद्विरोधिव्यावृत्तिप्रतिपत्तेरपि शाब्दत्वमार्थत्वमित्येवं मतभेदं प्रतिपाद्य भावरूपविशेषणभानव्यवधाने सत्यार्थत्वमेव न तु शाब्दत्वमिति हि निर्धार्यते ।

### जहदजहल्लक्षणाप्रतिक्षेपः

तस्मात् वेदवैदिकनिखिलप्रमाणकोणगवेषणेऽपि निर्विशेषगमकस्य क्वचिदपि संप्रतिपत्त्यभावेन न तत्राप्रसिद्धे कथंचिदपि दोषोपहितवाचितयाऽभिमतेन पदेन लक्षणयाऽपि स्तुतिरुपपत्स्यत इति स्तुतिप्रकरणविरोधात्; अविद्योपहितेऽप्यद्वैतमते न मुख्यवृत्तिरुपेतुं शक्यते । अतो मुख्यवृत्त्यसंभवात् ब्रह्मशब्दस्य न लक्षणाऽपि । एतेन ब्रह्मणि लक्षणान्तरासंभवेऽपि संभवत्येव जहदजहल्लक्षणा । तत एव हि प्रकृष्टप्रकाशश्चन्द्रइति प्रयोगे प्रकृष्टादिपदानां

चन्द्रमात्रार्थकताऽऽश्रीयते । न ह्यत्र प्रकर्षादिविशिष्टताबोधः; चन्द्रप्रातिपदिकार्थमात्रप्रश्नोत्तरत्वात् । अन्यथाऽप्रस्तुताभिधानप्रसङ्गात् । सोऽयमित्यत्रास्या अवश्याभ्युपेयत्वाच्चेत्युक्तमप्यपास्तम् ।

मुख्यवृत्त्यसंभवे तस्या अप्यसंभवात् तस्याः क्वचिदपि संप्रतिपत्त्यभावाच्च । प्रकृष्टप्रकाशश्चन्द्र इत्यत्र शक्तिवशादेवोपस्थितेन प्रकर्षविशिष्टप्रकाशरूपलक्षणेन ग्रहनक्षत्रादिव्यावृत्तिविशिष्टतया चन्द्रस्वरूपावधारणसंभवात् किं लक्षणया ? नचैवमप्रस्तुताभिधानं; सामान्यतः प्रतिपन्नचन्द्रपदार्थेन तद्विशेषजिज्ञासयैव चन्द्रासाधारणलक्षणस्य कश्चन्द्र इति पृष्टत्वात्; प्रकर्षाद्यविवक्षायां च पूर्वाधिगताधिकांशाप्रतिपादनेन स्वरूपविशेषावधारणौपयिकत्वानुपपत्तेश्च ।

### सोऽयमित्यादौ तत्तेदन्तयोरविरोधः

एवं सोऽयमित्यादावपि न लक्षणाप्रसक्तिः; शक्यार्थान्वये विरोधाभावात् । न च तत्तेदन्तयोर्विरोधः; असिद्धेः । अन्यथा सोऽयमिति प्रत्यक्षस्याप्यनुपपत्तेः । एकस्य कालद्वयसंबन्धानङ्गीकारे क्षणभङ्गवादावतारप्रसङ्गात् । अङ्गीकारे च कालद्वयसंबन्धवत् कालभेदेन देशद्वयसंबन्धेऽपि विरोधाभावात् न भागत्यागलक्षणावश्यंभावः । ब्रह्मणो निर्भागत्वाच्च न तत्र तत्संभवः ।

न चैतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीत्यत्र मात्राशब्दो ब्रह्मणस्सभागत्वं गमयतीति वाच्यं; भूतानन्दो-ब्रह्मानन्दादत्यल्पतर इत्यत्र तत्परत्वात् तस्य; अन्यथा निरवयवत्वशब्दकोपप्रसङ्गात् प्रमाणानामविरोधेन नयनमेव न्याय्यमित्यस्य "अविरोधं बादरायण" इत्यत्र सूत्रकृता सूचितत्वात् । तत्सिद्धं निर्विशेषे लाक्षणिकत्वमपि ब्रह्मशब्दस्य सर्वथा न संभवतीति । एवं परमते लक्षकत्वेनाभिमतशब्दस्वभावपर्यालोचनेन वृत्त्यनुपपत्तिरुक्ता ।

अथ लक्ष्यत्वाभिमतजिज्ञास्यवस्तुस्वभावपर्यालोचनयाऽपि तदनुपपत्तिं वक्तुं विकल्प्यते । **अपि चाविद्यानिवृत्त्यर्थमिह ज्ञातव्यमुपहितं**

**निरुपाधिकं वेति ।** तत्राद्ये सर्वप्रमाणवाक्यानामुपहितपरत्वावश्यंभावेन निर्विशेषवृत्त्यसिद्धिः । अतत्त्वज्ञानान्मोक्षप्रसङ्गश्च दूषणमुक्तम् ।

यत्तु जिज्ञास्यमुपहितं ब्रह्मेति भामती; निर्विशेषमेवेति तु विवरणं; तत्राज्ञाननिवर्तकं ज्ञानमुपहितविषयं; प्रथममते वृत्त्युपहित एव तत्त्वज्ञान-विषयः; नाविद्योपहितः । उपहितविषयज्ञानं च नोपाधिविषयमिति नातत्त्वज्ञानम् । उपहितान्याविषयकत्वे सति उपहितविषयकत्वं; ज्ञानाज्ञान-योस्समानविषयकत्वं; विशिष्टस्य विशेष्यविशेषणोभयरूपत्वमिति मत इवात्रापि विशेष्यमात्रस्योपाधिकालिकस्योपहितपदार्थत्वं; विशिष्टस्योपहितस्य वा मिथ्यात्वेऽपि अज्ञाननिवर्तकज्ञानविषयत्वं स्वरूपमात्रस्यैव; तत्त्वज्ञानस्या-ज्ञाननिवर्तकत्वं चाज्ञानानुपधानप्रयोजकवृत्त्युपधानेनेत्यादि ।

### उपहितज्ञानस्याज्ञान निवर्तकत्वानुपपत्तिः

तदसत्—उपाधिकालिकविशेष्यमात्रस्योपहितपदार्थत्वे वृत्तिकाले तदात्मकहेतुना तदनन्तरविनाशिनोऽविद्योपाधेरपि विद्यमानत्वेन वृत्त्युपहित एव तत्त्वज्ञानविषयो नाविद्योपहित इति नियन्तुमशक्यत्वात् । उभयोरपि वृत्त्यविषयत्वात् उपहितसमकालिकत्वाच्च वृत्त्युत्पत्तिकाल एवाविद्यानाशे तद्धेतुकत्वानुपपत्तेः ।

किं च निवर्तकज्ञानस्य विशेष्यमात्रविषयकत्वे विशेष्यमात्रस्या-विरोधित्वेन विरोधिविषयकत्वाभावात् निवर्तकत्वानुपपत्तिः ।

विरोध्यविषयकस्यापि निवर्तकत्वे स्वरूपात्मकज्ञानस्यापि सना-तनस्य निवर्तकत्वप्रसङ्गेन संसारस्यैवासंभवापत्तेः । विरोध्यविषयकज्ञान-निवर्त्यस्य मिथ्यात्वानुपपत्तेश्च । शुक्तिरजतादीनां विरोधिविषयकेणैव हि ज्ञानेन निवृत्तिरुपलभ्यते । न ह्युत्तरोत्तरज्ञाननिवर्त्यानां पूर्वपूर्वविज्ञानानां गरुडादिभावनानिवर्त्यविषादीनां वा मिथ्यात्वं संप्रतिपद्यामहे ।

उपहितान्याविषयकत्वे सत्युपहितविषयकत्वं ज्ञानाज्ञानयोस्समान-विषयकत्वमिति पारिभाषिकसमानविषयकत्वनिरुक्तौ उपहितपदस्योपाधि-कालिकविशेष्यमात्रपरत्वे अज्ञानस्यैपाधिकाकारविषयकत्वेनोपहितान्याविषय-कत्वासंभवात् न समानविषयकत्वं वक्तुं शक्यम् ।

### उपहितज्ञानस्याज्ञाननिवर्तकत्वानुपपत्तिः

न च ज्ञानस्य चिन्मात्रविषयत्वात् औपाधिकाकारविषयत्वं नास्तीति वाच्यं; अविद्योपाधिकं रूपमाह—सर्वज्ञं सर्वशक्तिसमन्वितमित्यत्र कल्पतरौ अविद्योपाधिकमिति अविद्याविषयीकृतमित्यर्थ इति सर्वज्ञत्वादीनामविद्याविषयत्वकीर्तनात् । उपहितपदस्योपाधिप्रतिबिम्बितपरत्वे उपाध्युपलक्षितपरत्वे चायं दोषस्समान एव । उपाधिविशिष्टपरत्वे च तस्य मिथ्यात्वेन तज्ज्ञानस्य भ्रमत्वादज्ञाननिवर्तकत्वानुपपत्तिरपरिहार्या । तत्त्वज्ञानस्याज्ञाननिवर्तकत्वे वृत्त्यन्तरद्वारकल्पनेऽप्ययं दोषस्समानः । विशिष्टस्य च विशेषणविशेष्योभयरूपत्वं न केनचिदप्युच्यते । उच्यमानमप्युभयघटितत्वपरमेव स्यात् न तु यथाश्रुतपरं, विशिष्टस्य विशेषणरूपत्वासंभवात् ।

इदमेव तावत् तत्रतत्रोच्यते 'विशिष्टं शुद्धान्नातिरिच्यत' इति । तथाऽपि विशेष्यमात्रावगाहिज्ञानस्य विशिष्टविषयकत्वं नाभ्युपेयते, तस्य वैशिष्ट्यावच्छिन्नविषयत्वरूपत्वेन विशेषणानवगाहिज्ञाने सत्वानुपपत्तेः । तथैवोपाध्यविषयकज्ञानस्य शुद्धोपहितयोरनतिरेकेऽप्युपहितविषयकत्ववचनमनुपन्नमेव ।

### उपाध्यविषयकत्वे लघुचन्द्रिकाविरोधः, तदुक्तप्रमात्वेऽनुपपत्तिश्च

अत एव लघुचन्द्रिकायामपि पञ्चममिथ्यात्वप्रकरणे शुद्धब्रह्मणो वृत्त्यविषयत्वपक्षे वृत्तिज्ञाने तद्विषयत्वोपहितस्यैव ब्रह्मणो विषयत्वोपगमावश्यंभावात्, तथाविधस्य च ब्रह्मणो मिथ्यात्वेन कथं तज्ज्ञानस्य प्रमात्वमिति शङ्कायां न तावदुपाध्यविषयकत्वात् तज्ज्ञानस्य प्रमात्वमिति परिहारोऽभ्यधायि; किं तूपाधिविषयकत्वमभ्युपगम्यापि अन्यादृशप्रमात्वपरिष्कारेण ।

व्यक्तं चेदं तत्रैव यद्यपि घटादिकं वृत्तिविषयत्वानुपहितमपि वृत्तिविषय इत्यत्रोपहितपदस्य त्वदुक्तार्थपरत्वे वृत्तिकाले उपाधिकालीनभिन्नत्वानुपपत्त्याऽनुपहितमपीत्युक्तेरयुक्तेः । तथाऽपि सर्वस्य ज्ञानस्य स्वविषयत्वोपहितमपि विषय इत्यप्युपरिष्टात् न वक्तव्यं स्फुटत्वात् । अतोऽस्यापि वाक्यस्योपाध्यविषयकत्व एव तात्पर्यमित्युक्तिं तु न तावदभिज्ञश्शृणुयात् । विशेष्यमात्रभानतात्पर्योपगमे उपहितमपि अनुपहितमपीति निर्देशभेदनैरर्थक्यात् विलक्षण प्रमात्वनिर्वनवैफल्याच्च ।

वस्तुतस्तु अबाधितस्य वृत्तिविषयत्वोपहितं रूपं यस्य ज्ञानस्य विषयः तत्त्वं प्रमात्वमित्येतत्तु चिन्त्यमेव ।

अबाधितधर्मिकत्वस्य भ्रमसाधारण्येनातिप्रसङ्गात्, विषयपदस्य यावद्विषयपरत्वे बाधितोपाधिविषयकज्ञानस्य प्रमात्वानुपपत्तेस्तदवस्थत्वात् घटादेरपि तत्प्रमायां वृत्तिविषयत्वानुपहितस्येव तदुपहितस्यापि भानकल्पने मानाभावेनानुगतत्वासंभवात् उपाधिकालीनविशेष्यमात्रस्य उपहितपदार्थत्वे तथाविधस्य च ब्रह्मणो मिथ्यात्वेनेति लघुचन्द्रिकावचनानुपपत्तेः । न हि मिथ्याकालीनं सत्यमपि मिथ्या, तस्या उपपन्नत्वे च मिथ्याविषयत्वेनोपहित-ज्ञानस्यातत्वज्ञानत्वतादवस्थ्याच्च । एवमुपहितपदस्योपाधिकालिक विशेष्य-मात्रपरत्वे जिज्ञास्यमुपहितं ब्रह्मेति भामती, निर्विशेषमेवेति तु विवरणं, इत्यनयोरर्थतो न भेदस्यात् । तथाचाविद्यानिवृत्त्यर्थमिह ज्ञातव्यमुपहितं निरुपाधिकं वेति विकल्पे द्वितीयकल्प एव परिगृह्यत इत्युक्तं भवति । तत्र चैवं दूषणमुक्तं—**द्वितीये त्वतद्व्युत्पन्नेन तदुक्त्ययोग एव** । तल्लक्षितं तज्जिज्ञास्यते लक्ष्यते शोध्यते चेति चेत् तत एव निर्विशेषलक्षकब्रह्मशब्दात् ज्ञातत्व लक्षितत्व शोधितत्वसिद्धया जिज्ञासाद्यनपेक्षा स्यादिति ।

### सगुणव्युत्पन्नेन निर्गुणबोधानुपपत्तिः

न च गुणवाचकानामेव पदानां निर्गुणपरत्वमविरुद्धं, गुणानां ब्रह्मणि कल्पितानां तेनाभेदस्योपगमादिति वाच्यम् । ब्रह्मशब्दस्य ब्रह्मणोऽन्यत्र मुख्यवृत्त्यसंभवस्य कल्पिताकल्पितयोरभेदासंभवस्य च प्रागेवोक्तत्वात् ।

न च कल्पितेनापि वाच्यतावच्छेदकेन गुणादिना अबाधितस्वरूप-मात्रस्यनलादिवेषधारिणो नलादिशब्देनेव ब्रह्मशब्देन भानमुपपन्नमिति वाच्यं, कल्पिताकारस्य प्रवृत्तिनिमित्तत्वोपगमे शङ्खादौ पीतादिशब्दप्रयोगस्यापि प्रामाणिकत्वापत्तेः । नलादिवेषधारिणि आत्मभेदवादे स्वरूपाभेदमात्रस्याप्य-भावेन नलादिशब्दप्रयोगस्यौपचारिकत्वोपगमावश्यंभावेन मुख्यत्वाभावाच्च ।

### ब्रह्मविदाप्नोतीत्यादावखण्डाकारवृत्तेरभिधानम्

नन्वेवमप्यप्रामाण्यशङ्कानास्कन्दितपटुतमसंस्कारसहित भ्रमव्याप्य-भुज्यमानादृष्टाभावसध्रीचीनमहावाक्यजन्याखण्डाकारवृत्तेरेव मोक्षसाधनतया

तस्याश्च पदजन्योपस्थितिमात्रेण दुस्संपादत्वात् कथं निर्विशेषलक्षकब्रह्म-पदादेव सर्वसिद्ध्यापत्त्या जिज्ञासाद्यनपेक्षा स्यादित्युच्यत इति चेन्न। मैवं, ब्रह्मविदाप्नोति परमित्यादौ विदिधातोः उक्तविशिष्टवेदनविशेषबोधने शक्त्यनभ्युपगमात् विदिधातोरुपासनार्थत्वं लक्षणयैव स्यात् न तु शक्त्येति वचनव्यक्त्या उपासनापरत्वं निरस्यतां लक्षणया स्वोक्तवेदनविशेषपरत्व-वर्णनस्य व्याहतत्वात्। समानप्रकरणस्थवाक्यान्तरघटकपदैककण्ठ्यसंपादक-न्यायविशेषानुग्रहेण सामान्यबोधकपदवाक्यार्थनिर्णयस्य दर्शनसमानाकारः प्रीतिरूपापन्नध्रुवानुस्मृतिसन्ततिपर्यवसानानुगुणतयाऽऽनुपास्यब्रह्मवादिनामनु-पादेयत्वाच्च। अतो मोक्षोपायतया भवदभिमाननीयस्य वेदनमात्रस्य पदमात्रेण सिद्ध्या वेदितव्याकारविशेषानङ्गीकाराच्च प्रयोजनान्तराभावात् जिज्ञासाद्यनपेक्षा स्यादित्युक्तं युक्तमेव।

अथ सिद्धेऽपि प्रयोजने विधिबलेन विलीन एव आज्ये विलापन विधानमिव विचार्यतया प्रतिज्ञानमुपपन्नमेवेति शङ्का निराक्रियते 'न च जिज्ञासादौ विधि'रित्यादिना। ततो ब्रह्मशब्दवृत्तिप्रतिबोधनमेव जिज्ञासायाः दृष्टं प्रयोजनमिति शङ्कां निराकर्तुं विकल्प्यते किं मुख्याममुख्यां वेति। तत्राद्ये दूषणं पूर्वत्र प्रस्तुतव्याघात इति। मुख्यवृत्तिश्चोपहित एव स्यात्, न त्वनुपहिते निमित्तशून्ये विशेष्यमात्रे। तदसंभवस्य प्रागुपपादितत्वात्। उपहितविवक्षया जिज्ञासाद्यपेक्षायां च शास्त्रस्योपहितविषयत्वावश्यम्भावेन निरुपाधिकप्रस्तावाप्रसक्त्या ब्रह्मपदलक्षिते तत्र सर्वं सार्थमिति प्रस्तुतवचनस्य विरोध इति भावस्स्फुटो भवत्यनन्तरवाक्येन।

एतेन निरुपाधिके ब्रह्मणि मुख्याया अमुख्याया वा यस्याः कस्या अपि वृत्तेस्सम्भवान्नात्र 'पूर्वत्र प्रस्तुतव्याघात' इत्युक्तमपास्तम्। अमुख्य-वृत्तिसम्भवोक्तेः प्रथमकल्पेऽसङ्गतेः।

**विशेष्यमात्रात्मन्युपहिते वृत्त्यनुपपत्तिः**

यत्तु उपहित एव वृत्तिस्वीकारेऽपि तज्ज्ञानादेव मोक्षस्य भामतीमते उपपादनान्न विरोध इति।

तन्न; निर्विशेषपर्यायतया परिभाषितभवदभिमतोपहितपदार्थे मुख्य-वृत्तेरिहानभ्युपगमात् तज्ज्ञानस्य मोक्षसाधनत्वानुपपत्तेर्वक्ष्यमाणत्वाच्च।

अथानुपहितेऽपि शास्त्रसार्थक्योपपादनाय स्वरूपातिरिक्तप्रवृत्तिनिमित्ताभावेऽपि यदृच्छाशब्दस्येव ब्रह्मशब्दस्य मुख्यवृत्तिरस्त्विति शङ्काऽपि अपसिद्धान्तदोषोद्भावनाभिप्रायेण परिह्रियते। अनुपहिते हि लक्षणामेव वदसीति 'यतो वाचो निवर्तन्ते' 'न शब्दगोचरो यस्ये'त्यादिश्रुतिस्मृतिवचनानां वा वाच्यत्वनिषेधपरताया भवदभिमतत्वादिति भावः।

एतेन निरुपाधिके ब्रह्मणि मुख्यवृत्तिपक्षोऽपि विष्णुपुराणानुरोधेन पूर्वत्वे निरूपित इति अनुपहिते हि लक्षणामेव वदसीत्यादिकं न विकल्पसहमित्युक्तं प्रत्युक्तम्।

पुराणस्यातत्परताया उक्तत्वात् ब्रह्मपरत्वेऽपि अगोचरं वचसामिति स्वघटकवाक्यार्थविरोधप्रसङ्गेन भवन्मते मुख्यवृत्तिपरत्वोपगमासंभवाच्च।

यदि सिद्धान्तमुल्लङ्घ्य मुख्यवृत्तिरुपगम्यते, तदा प्रमाणगणसमधिगत स्वाभाविक सर्वज्ञत्वादिविशिष्ट एव निर्मत्सरैरुपगम्यतां, नत्वप्रसिद्धे निर्निमित्त इत्युच्यते, अभिधानाङ्गीकारे वेत्यादिना।

यत्तु निर्विशेषमपि ब्रह्मशब्दार्थंस्सविशेपमपीत्यद्वैतिनो मन्यन्त इति विशिष्टाभिधाने नैषां द्वेष इति।

तन्न; 'यस्सर्वज्ञस्सर्ववित्' 'स्वाभाविकी ज्ञानबलक्रिया च' 'अपहतपाप्मा विजरस्सत्यकामस्सत्यसंकल्पः' इत्यादिपरश्शतप्रमाणगणसमधिगत स्वाभाविकसकलहेयप्रत्यनीककल्याणगुणगणविशिष्टत्वे दुरपह्नवे जाग्रति सविशेषं नाम काल्पनिकविशेषविशिष्टं न तु पारमार्थिकविशेषविशिष्टं, मायोपहितं, अविद्योपहितं, अन्तःकरणोपहितं वृत्त्युपहितं उपाधिकालीनविशेष्यमात्रं वा उपहितपदार्थः, न तु वस्तुतः प्रामाणिकेन सर्वज्ञत्वादिना केनचिदुपाधिना विशिष्टमित्याद्युच्छृङ्खलवचनानां ब्रह्मगुणद्वेषमन्तरेण हेतोर्दुर्वचत्वात्।

विकल्पितद्वितीयकल्पे दूषणमाविष्क्रियते—**उत्तरत्र अधो हीत्यादि वैघट्यमि**त्यादिना।

**लक्ष्यार्थजिज्ञासायास्सूत्रितत्वानुपपत्तिः**

यदुक्तं लक्ष्यार्थजिज्ञासैव 'अधीहि भगवो ब्रह्मे'त्यत्र विवक्ष्यते। लक्ष्यं तु नेदंतयोपदेष्टुं, शक्यत इति जगत्कारणत्वादितटस्थलक्षणाद्युपदेशो नात्र

विरुद्धयत इति ।

तदयुक्तं मुख्यार्थबाधादिकारणाभावात् लक्ष्यार्थमधीहीति तु निरुत्थानमिति शतदूषण्युक्तदूषणस्यासमाधेयत्वात् ।

नात्र प्रत्यक्षादिना प्रमाणेन केनापि मुख्यार्थविरोध इति शतदूषणी न विकल्पसहेति प्रतिज्ञामात्रस्याकिंचित्करत्वात् तदुक्तयुक्तीनामनुपपत्त्यप्रदर्शने कथं भवदीयप्रतिज्ञा जीवितुमुत्सहेत ? अत एव सत्यज्ञानादिवाक्यस्य लक्ष्यार्थपरत्वोक्तिरयुक्तैव । अखण्डार्थसिद्धिस्तु न कथंचिदपि स्यादिति प्रागेव प्रत्यपादि । अन्यथा सत्यज्ञानादिवाक्येनैव लक्ष्यार्थोपदेशसंभवे लक्ष्यस्वरूपासंबद्ध जगत्कारणत्वादितटस्थलक्षणोपदेशेन नातीव प्रयोजनं स्यात् । इदंतया निर्देष्टुमशक्यस्यापि लक्ष्यार्थस्य असत्यव्यावृत्तत्वादिना निर्देशसंभवात् । निरुपाधिकविपश्चित्त्व, सर्वान्तरात्मत्व, सर्वकारणत्वानन्दमयत्वाद्यनेकविशेषप्रतिपादनेन प्रकरणस्य वाच्यार्थपरत्वावधारणात् लक्ष्यार्थपरत्वानुपपत्तेः ।

### आनन्दवल्ल्यादेः परोक्ततात्पर्यानुपपत्तिः

यथाचास्य आनन्द-भृगुवल्लीप्रकरणस्य सविशेषोपास्यब्रह्मैकप्रधानकत्वं स यश्चायमित्यस्य विग्रहातिदेशपरतयैव सामञ्जस्यं च; तथा सम्यगुपपादितं प्रागेवेति नात्र पुनरुच्यते ।

यत्तु—पूर्वत्र गुहानिहितं स्वरूपमुपदिष्टं कार्यत्वोल्लेखनमुखेन; अत्र सत्यज्ञानादिरूपत्वं कारणत्वमुखेन विपरीतेनेति ।

तत्तु—विपरीतमेव । लोके उपादानकारणस्य विकारित्वदर्शनेन तत्त्वस्य सत्यत्वादिनिरूपणानौपयिकत्वात् । पूर्वत्रापि 'आत्मन आकाशस्संभूतः' 'सोऽकामयत बहु स्यां प्रजायेयेति' इदं सर्वमसृजत' इत्यादिना कारणत्वमुक्तं; 'यतो वा इमानि भूतानि जायन्ते' 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' इत्यादिनोत्तरत्रापीति उभयत्र कारणत्वोल्लेखस्य सत्यप्यविशेषे कार्यत्वकारणत्वोल्लेखनमुखेनेति पूर्वोत्तरवल्ल्योर्निरूप्यतावच्छेदकभेदकल्पनेनानर्थक्यपरिहारस्याप्यसंगतेः ।

स्थूलारुन्धतीन्यायेन सर्वान्तरात्मसुखप्रतिपत्तये अन्नमयाद्युपदेशोऽपि तस्याब्रह्मत्वेन वस्तुतो ब्रह्मभूतानन्दमयस्य मयडन्तपदनिर्देशेऽपि विकार-शब्दान्नेति चेन्न प्राचुर्यादिति सूत्रकृता विकारार्थप्रतिषेधेन ब्रह्मणः पूर्वत्रापि कार्यत्वोल्लेखाभावात् । अत एव भृगुवल्ल्यारम्भे वृत्तानुवादे 'तस्मात् सर्व-कार्यविलक्षणमदृश्यत्वादिधर्मकमेवानन्दं तदेवाहमिति विजानीयात् अनु-प्रवेशस्य तदर्थत्वादिति शङ्करभाष्यम् ।

पूर्वत्र धर्मगुहानिहितं परमव्योमप्रतिष्ठितं सर्वान्तरात्मत्वेनानन्दमय इति निरूपितम् । तदेव ह्युत्तरत्र आनन्दो ब्रह्मेति तद्गुणसारत्वेन आनन्द इति व्यपदिश्यते । स्थानक्रमेण 'परमे व्योमन् प्रतिष्ठिते'त्यनेन च यो वेद निहितं गुहायां परमे व्योम'न्निति पूर्वोक्तगुहानिहितादानन्दमयादभिन्नमिद-मिति प्रत्यभिज्ञापनात् ।

**आनन्दवल्ल्यामेव सत्यत्वादिनिरूपणम्**

पूर्वत्रैव सत्यज्ञानादिरूपस्य प्रतिपादनेन तदर्थमुत्तरत्रानुधावनस्य व्यर्थत्वाच्च । "तदनुप्रविश्य सच्च त्यच्चाभव"दित्यादिना सत्यत्वस्य 'ब्रह्मणा विपश्चिता 'सोऽकामयत' बहुस्यां प्रजायेयेति स तपोऽतप्यते'त्यादिना ज्ञानत्वस्य सर्वकारणत्वेन; सर्वान्तरात्मत्वेन चानन्त्यस्य च पूर्वत्रैव हि निरूपणम् ।

यत्तु—सविशेषं वा निर्विशेषं वेति विमर्शनबुद्ध्या प्रश्नोत्तरे इति । तत्तु—न च निर्विशेषं सविशेषं वेति विमृशतो जगत्कारणत्वोक्त्या निर्विशेषत्वनिश्चयस्सिद्ध्येत् । अपि तु सर्वकारणत्वाक्षिप्तं सर्वज्ञसर्वविदादि-शब्दकण्ठोक्तं च सर्वज्ञत्वादिकं बृहत्वमेव निर्धार्येतेति शतदूषण्यामेव इष्टासिद्ध्यनिष्टसिद्ध्यापत्त्या दूषितम् । दूषणान्यनुद्धृत्य दूषितपक्षपरिग्रहो ग्रन्थपूरणायैव स्यात् ।

अथ सविशेषनिर्विशेषविभागानभिज्ञस्यापि शिष्यस्य सामान्यतो मुमुक्षुजिज्ञास्यतया स्वेन श्रुतं ब्रह्म किं लक्षणकमिति प्रश्ने सर्वज्ञेनाचार्येण निर्विशेषब्रह्मलक्षणोपदेशः क्रियत इति शङ्कां परिहर्तुमनुवदति **नन्वविवितेति** ।

यदत्रोक्तं—अविदितलक्ष्यमुख्यविभागकस्य न हि सविशेषत्वे ज्ञेयस्य ब्रह्मणः तज्ज्ञानमात्रेण ब्रह्मप्राप्तिः; ब्रह्मविदाप्नोति परमिति प्रस्तुता स्यात् इत्यादिना पूर्ववल्लीवाक्यदौर्घटचम् ।

**आनन्दवल्ल्यादेः ज्ञेयब्रह्मपरत्वनिरासः**

तदसंबद्धम्—नह्यधीहि भगवो ब्रह्मेति प्रक्ष्यन्तमेव प्रति प्रागेव ब्रह्मविदाप्नोति परमित्युपदिष्टमिति सङ्गतं स्यात्; येन तस्य लक्ष्यब्रह्मानभिज्ञत्वे ज्ञानमात्रात् ब्रह्मप्राप्त्युपदेशो न घटेतेति शङ्क्येत ।

न च ज्ञानमात्रात् ब्रह्मविदाप्नोति परमिति ब्रह्मप्राप्तिरभिधीयते बाधितत्वात् । न ह्युपदेशश्रवणानन्तरं कश्चित् सद्यो मुच्यते किं तु पूर्ववत् संसरन्नेव हि दृश्यते । न च मननिदिध्यासनानन्तरभाविज्ञानमात्रं विवक्षितमिति वाच्यम् । तदपेक्षया निदिध्यासनात्मकज्ञानविवक्षाया एव न्याय्यत्वात् ।

न च तत्र लक्षणा; शक्त्यैव प्रकरणाद्यनुगृहीतया सामान्यरूपेण विशेषबोधसंभवात् । यथा गामानयेत्यादौ गोविशेषप्रतीतिश्शक्त्यैव भवति अन्यथा निदिध्यासनाद्यनन्तरभाविज्ञानात्मकविशेषस्यापि भवन्मते लक्षणयैव प्रतीतिस्स्यादित्युभयोस्समो दोषः । अत एव विशेषरूपावच्छिन्ने लक्षणोपगमेऽपि न क्षतिः ।

न च प्रमाणान्तरानुगुण्यादजहल्लक्षणाया उपगमेन वाच्यार्थपरित्यागेऽप्यस्ति महान् दोषः । आवश्यकं च समानप्रकरणवाक्यान्तरैककण्ठ्यं, अविशिष्टे च फले लघुगुरुविकल्पायोगात्, फलभेदकल्पनायाश्चाप्रामाणिकत्वात् । अतो वेदनमत्रोपासनमेव । उपास्याकाराश्च सत्यत्वादिब्रह्मधर्मा एव; न तु मनोमयत्वादयः; तेषामब्रह्मधर्मत्वात् । तस्मादुपास्यब्रह्मपरमेव प्रकरणं; न तु ज्ञेयब्रह्मपरं; तस्यावेद्यत्वात् शब्दवृत्त्यभावाच्चेति सिद्धम् । पूर्वोक्तशङ्कां परिहरति **तदपि न** इत्यादिना । न हि प्रमाणभूत आचार्यः अप्रामाणिकमर्थमुपदिशेदिति भावः ।

**सविशेषज्ञानस्यैव मुक्तिहेतुत्वम्**

न तावत् निर्विशेषज्ञानोपायत्वे मानाभाव इत्येतावन्मात्रं किं तु तद्विपरीते सविशेषज्ञानमेव मोक्षसाधनमित्यत्रैवास्ति प्रमाणगणस्वारस्य-

मित्याह—**प्रत्युतेति**। तमेवं विद्वानमृत इत्यत्र तच्छब्देन प्रक्रान्तविभूतिगुणविग्रहविशिष्टस्यैव परामर्शौचित्यादिति भावः।

एतेन सविशेषज्ञानं न मोक्षसाधनं; मोक्षसाधनं तु निर्विशेषज्ञानमेव विवरणमते। भामतीमते तु उपहितज्ञानमेवेत्युक्तमपास्तम्।

उपहितपदस्य स्वाभाविक सर्वज्ञत्वाद्युपहितत्वपरत्वोपगमे अपसिद्धान्तस्य; काल्पनिकतदुपहितपरत्वे अतत्त्वज्ञानस्यैव मोक्षोपायत्वप्रसङ्गस्य; विशेष्यमात्रपरत्वे विवरणमताद्विशेषाभावस्य; तत्साधकप्रमाणाभावस्य बाधकप्रमाणसद्भावस्य च प्रदर्शितत्वात्।

एवं च ब्रह्मशब्दस्वभावपर्यालोचनयेव जिज्ञास्यवस्तुस्वभावपर्यालोचनयाऽपि सविशेषमेव ब्रह्मशब्दार्थ इति सिद्धमित्याह—**अतो यथाश्रुत एवेति**। 'बृहति बृंहयति' तमेवं विद्वानमृत इत्यादिश्रुत्युक्तप्रकार एवेत्यर्थः। निर्वचनस्वारस्यमप्यत्रैवेति दर्शयति **निर्वक्ति चेति**। तत्र सर्वत्र इत्युक्त्या सर्वप्रकारेण स्वरूपतो गुणतो विभूतितो विग्रहतश्च बृहत्वमसंकुचितमेव ब्रह्मशब्दप्रवृत्तिनिमित्तमिति स्वरसतोऽवगम्यते। यच्च यावदेतावतोक्तं तत्सर्वं श्रीभाष्यएवाभिप्रेतमित्याह— **इदं सर्वमभिप्रेत्याभाष्यतेति**। **स्वभावतो निरस्तनिखिलदोष इति**। सदोषत्वे गुणहीनत्वे च ब्रह्मशब्द प्रवृत्तिनिमित्तवत्त्वं जिज्ञास्यत्वं च नोपपद्येतेति भावः।

यथाऽऽहुः—न हि कारागृहनिगलित एव तन्मोचनार्थमभ्यर्थनीय इति। एतेनाविद्योपहितस्य काल्पनिकविशेषोपहितस्य कर्मपरतन्त्रस्य निर्विशेषस्य च न ब्रह्मशब्दमुख्यार्थत्वं संभवतीति सूचितम्।

### देवतान्तरव्यावृत्तिः

एवंविधो व्यक्तिविशेषः क इत्यत्राह—**पुरुषोत्तम इति**। तत्रैवोक्तविशेषणद्वयसमन्वयादिति भावः। यस्मात् क्षरमतीतोऽहमिति सदोषदोषात्यन्तनिवृत्तिमदुभयविधचेतनवैलक्षण्याभिधानात् स्वभावतो निरस्तनिखिलदोषत्वस्य; उत्तम इत्यनेन 'मत्तः परतरं नान्यत् किंचिदस्ति धनंजय इत्यनेन च स्वाभाविकानन्तकल्याणगुणवत्वनिबन्धननिरतिशयोत्कर्षस्य च तत्रैवावधारणात्; रुद्रादेस्तु अनपहतपाप्मा वा अहमस्मि नाम मे धेहीत्यादौ

सदोषत्वावगमेन न स्वभावतो निरस्तदोषत्वसंभवः। अत एव हरिवंशे कैलासयात्रायां—

**ईशस्त्वं सर्वभूताना मीश्वरो हि ततो हरे।**
**बृहत्वात् बृंहणत्वाच्च तस्माद् ब्रह्मेति शब्दितः॥**

इति शिवस्यैव वचनेन बृहत्वात् बृंहणत्वाच्चेत्यथर्वशिरोवचनं श्रीकृष्णपरतयोपबृंहितम्।

**वसुदेवात्मजत्वावस्थायामेव वासुदेवत्वं पुरुषोत्तमत्वं च**

एतेन वसुदेवात्मजत्वावस्थायामपि पुरुषोत्तमत्वं परब्रह्मत्वं वासुदेवत्वं चास्त्येवेति व्यज्यते। व्यक्तं चेदं पौण्ड्रकोपाख्यानेनापि। कृष्णस्य वासुदेवत्वे सत्येवहि तदुपपद्यते। तेन स्पर्धमानः आत्मनि तत्सारूप्यमारोपयन् यदयं वासुदवोऽहमित्यमन्यत। न हि तत्र प्रबलप्रत्यक्षबाधितं वसुदेवात्मजत्वमप्यात्मनि संभावयितुं शक्यं, अतः परोक्षसर्वाधारत्वाद्यारोप एव कथंचित् संभवदुक्तिकः।

न चैवं 'उत्तमः पुरुषस्त्वन्यः' यस्मात् क्षरमतीतोऽहमिति वचनद्वयं वितथं, न केवलं वितथं, किं तु 'उत्तमः पुरुषस्त्वन्य' इत्यन्यस्य परमात्मत्वाम्नानविरोधोऽपीत्युक्तं युक्तम्।

प्रथमवचने प्रमाणान्तराप्रसिद्धपरमात्मसमाख्यया साधितस्य सर्वावस्थजीवात्मान्यत्वस्य पुरुषोत्तमसमाख्ययाऽपि स्थिरीकरणार्थत्वात् द्वितीयवचनस्य। तथोक्तं तात्पर्यचन्द्रिकायां द्वितीयवचनव्याख्यानारम्भे—"एवं प्रतिज्ञातमन्यत्वं, श्रुतिस्मृतिप्रसिद्धधात्वर्थया समाख्यया स्थापितं तदेव पुनस्तथा भूत समाख्यान्तरेण उत्तमः पुरुष इत्यनुवादस्मारितेन स्थिरीक्रियत इति"। तथाऽन्यत्वस्यापि क्षराक्षरप्रतियोगिकत्वेन तदनन्तर्गतस्य वसुदेवात्मजस्य कृष्णस्य परमात्मत्वे विरोधाभावाच्च।

अभिधीयत इत्यनेन पराभिमतलक्षणा व्यवच्छिद्यतइत्याह—**अभिधीयते—मुख्यवृत्त्या बोध्यत** इति। उक्तरीत्याऽर्थवर्णनेन शैवाद्वैतमतनिरासश्च अस्मिन् ब्रह्मशब्द एव सूत्रकृतो विवक्षित इत्यनुसंधेय इत्याह—

**अनेवं नामक**मिति । निरासप्रकारस्तु निरुक्तविशेषणद्वयशून्यत्वेनेति प्रागेव दिङ्मात्रेण निदर्शितः । विस्तरस्त्वन्यत्र ।

**ब्रह्म-पुरुषोत्तमशब्दयोरुभयोरपि निर्दोषत्वे गुणविशिष्टत्वे च तत्परत्वम्**

विशेषणद्वयनिर्देशस्य व्याख्यानव्याख्येयपदद्वयनिरुक्तिस्मारणमपि प्रयोजनमित्याह—**विशेषणद्वयेनेति** । अत्र न यथा संख्यं व्यञ्जकत्वं विवक्षितम् । ब्रह्मशब्दनिर्वचनस्य गुणबृहत्वेऽपीव पुरुषोत्तमपदनिर्वचनस्य निर्दोषतायामपि तात्पर्यस्य प्रागुपपादनात् । किं तु समुच्चयेन, अतएव पदद्वयस्य व्याख्यानव्याख्येयभाव उपपद्यते । निर्वचनस्य व्यवस्थितार्थ भेदपरत्वोपगमे तदनुपपत्तेः ।

एतेन परिबृढत्वं वा ब्रह्मणः किं निरस्तनिखिलदोषतया ? अनवधिकातिशयासंख्येयकल्याणगुणवत्तया वा ? आद्ये निर्विशेषमात्रपरत्वं, द्वितीये त्वपदार्थता । अतएव ब्रह्मशब्देन स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासंख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयत इति श्रीभाष्यस्य विशेषणद्वयेन च ब्रह्मपुरुषोत्तमयोर्निरुक्तिरपि व्यज्यत इति शतदूषण्युपपद्यत इत्युक्तं निरस्तम् ।

ब्रह्मशब्देनासंकोचात् गुणतो बृहत्वमपि विवक्षितमिति निर्वचनाशयस्य प्रागुपदर्शितत्वात् । अतएव सर्वज्ञं सर्वशक्तिसमन्वितमिति गुणवत्वेनापि शङ्करभाष्येऽपि बृहतेरर्थानुगमोऽनुमन्यते, अतो नापदार्थता ।

निर्विशेषस्याप्यद्वैतमतेऽविद्यातिरोधानादिदोषोपगमेन स्वभावतो निरस्तनिखिलदोषत्वमपि न संभवति तस्य विवर्तोपादानतया परिबृढत्ववचनं सर्वांशे भ्रान्तस्य महत्ववचनवदुपहास्यम् । यथाचाभिन्ननिमित्तपरिणाम्युपादानत्वं ब्रह्मणः श्रीभाष्यमते, तथोपपादितं प्रागेव ।

असंख्येयकल्याणगुणवत्वे विरोधादेव दोषस्पर्शासंभवात् दोषार्हाखिल चेतनाचेतनवैलक्षण्योक्त्या अव्यय इति निर्दोषत्वकण्ठोक्त्या च पुरुषोत्तमशब्दस्य दोषलेशासहत्वेन, निरवधिकसमस्तदोषत्व, निरवधिकनिरतियगुणवत्वोभयभाक्त्वमेव पुरुषोत्तमशब्दार्थ इति विवक्षायां का बाधेति प्रश्नस्य निरवधिदोषगुणान्योन्यविरोध-पुरुषोत्तमशब्द तन्निर्वचनविरोधादिकमेवात्यन्त बाधकमित्युत्तरमवधेयम् ।

तदेवमद्वैतमते ब्रह्मशब्दस्य अन्यत्र ह्युपचारत इति स्मृतिविरोधेन निरतिशयबृहत्वरूपप्रवृत्तिनिमित्तासंभवेन चान्यत्र मुख्यवृत्तेर्दुर्वचत्वात् उपहिते च ब्रह्मणि मिथ्यात्वेनामुमते अविद्यादिदोषस्पर्शोपगमेन निर्दोषगुणवत्तानिबन्धननिरतिशयबृहत्वायोगेन मुमुक्षुजिज्ञास्यत्वायोगेन च तदुपगमायोगात् । अत एव निर्विशेषतयाऽभिमते वस्तुन्यप्यवाच्यत्वसिद्धान्तविरोधेन च वाच्यत्वोपगमासंभवात् वाच्यार्थस्यैवानभ्युपगमे च तत्संबन्धरूपलक्षणायाः प्रसक्त्यभावेन अप्रसिद्धनिर्विशेषलक्षकत्वकथाया अप्यनवकाशाच्च वृत्त्यनुपपत्तिर्दुर्वारैवेति सिद्धम् ।

---

|| श्रीः ||

# जिज्ञासानुपपत्तिवादः

**स्वमात्रभास्यं जिज्ञास्यं निर्भेदं नित्यमिच्छताम् ।**
**शरश्रेणीव वाग्जालैः न वार्या शतदूषणी ॥**

यद्धि न वित्तिकर्म कथं तत्र जिज्ञासेति शतदूषणी ।

अवेद्यतयाऽभिमतस्य जिज्ञास्यत्ववचनं व्याहतं, सामान्यतो ज्ञाते विशेषतस्तज्ज्ञानायैव हि तज्जिज्ञासेति भावः ।

### इष्टसिद्धयुक्तप्रसङ्गस्य व्याप्तिशून्यता

वस्तुतस्तु अवेद्यत्वमेवासिद्धमौपनिषदस्य । अनुभाव्यत्वे घटादिवदननुभूतित्वप्रसङ्ग इत्यापादनमप्यापाततः । स्वगतातीतानुभवानां परगतानुभवानां चानुभाव्यत्वेनाननुभूतित्वस्य व्याप्त्भावात् । अव्याप्यत्वे चान्यप्रयुक्तापाद्यवत् दृष्टान्तनिदर्शनमात्रेणापादनस्यानुपादेयत्वात् । अन्यथाऽननुभाव्यत्वेऽपि गगनकुसुमादिवदननुभूतित्वप्रसङ्गस्य दुर्वारत्वापत्तेः । प्रपञ्चितमेवचेदं श्रीभाष्यादिषु । अत इह इष्टसिद्धि परित्यज्यानुभाव्यत्वाभ्युपगमेन व्याघातपरिहार मार्ग एव निष्कण्टकस्स्यात् ।

### वृत्तिव्याप्यत्वावेद्यत्वयोर्विरोधः

वेद्यत्वमनभ्युपगम्य वृत्तिव्याप्यत्वाङ्गीकारेण समाधानं तु न साधीयः । वृत्तिविषयत्वास्यानङ्गीकारे वृत्त्यानर्थक्यस्याङ्गीकारे चावेद्यत्ववचनव्याघातस्य च प्रागेव प्रदर्शितत्वात् । सर्वं ज्ञानं प्रमेयमित्यादावभेदेन विषयविषयिभावदर्शनात् ब्रह्मणः फलव्याप्यत्वमप्यवर्जनीयमित्यप्युक्तमेव ।

### घटादेः फलव्याप्यत्वे ज्ञानस्य मनोधर्मत्वे च मानाभावः

किं च फलाव्याप्यत्वेनावेद्यत्वं तु घटादेरप्यविशिष्टम् । घटमहं जानामीत्यात्मधर्मतया भासमानज्ञानविषयतयैवानुभवेन घटादेः फलतयाऽनुमतस्वरूपचैतन्यविषयत्वे मानाभावात् ।

न च जानामीत्यात्मधर्मतया भासमानाया जडान्तःकरणवृत्ते र्जड-त्वेनाप्रकाशकत्वात् घटादेर्जडस्य वृत्त्यवच्छिन्नचैतन्यविषयत्वमभ्युपेतव्यमिति वाच्यं, आत्मधर्मतया भासमानस्यानन्याधीनस्वप्रकाशव्यवहारस्य जडान्तः करणवृत्तित्वासंभवेन जडत्वाभावात् ।

न चान्तः करणवृत्तेरेवान्तः करणतादात्म्याध्यासादात्मनो धर्मतया प्रतीतिरिति वाच्यम् । जानामीति प्रतीयमानस्य अन्तःकरणवृत्तित्वे माना-भावात् स्वप्रकाशत्वानुपपत्तेश्च ।

न च कामस्संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भी-रित्येतत्सर्वं मन एवेति श्रुतिस्तत्र मानमिति वाच्यम् ।

मनस इन्द्रियत्वेन ज्ञानादिनिमित्तकारणतया आयुर्घृतमित्यादिव-दुपादानत्वाभावेऽपि कार्यकारणयोरभेदोपचारेण सामानाधिकरण्यनिर्देशस्यो-पपत्तेः ज्ञानादेर्मनोधर्मत्वगमकत्वायोगात् ।

**ज्ञानस्यात्मधर्मत्वे प्रमाणोपन्यासः**

तस्य च सर्वावस्थात्मधर्मत्वमेव हि अथ "यो वेदेदं जिघ्राणीति सक्रृत्" "मनसैवैतान् कामान् पश्यन् रमते", य एते ब्रह्मलोके सत्यकामस्स-त्यसङ्कल्पः, "सर्वं ह पश्यः पश्यति", "विज्ञातारमरे केन विजानीयात्" जानात्येवायं पुरुषः, "एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः", "एवमेवास्य परिद्रष्टु रिमाष्षोडशकलाः", "न हि विज्ञातुर्विज्ञाते र्विपरिलोपो विद्यते" "ब्रह्मविदाप्नोति परं" 'आनन्दं ब्रह्मणो विद्वान्'

**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ।**
**प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते ।।"**

'ज्ञोऽत' एवे'त्यादि प्रमाणशतसमधिगतम् । तस्य च ज्ञानत्वेन विषयप्रकाशन-वेलायां ज्ञातुरात्मनस्स्वयं प्रकाशत्वेन च न जडत्वप्रसक्तिः ।

इत्थं प्रामाणिकमप्यर्थमपहाय प्रमाणलेशमप्यन्तरेण अन्तःकरणस्य वृत्तिरूपः परिणामः, तस्य चेन्द्रियद्वारेण बहिःप्रसरणं, घटादिविषयाका-रेण परिणामः, तस्य चौपचारिकं ज्ञानत्वं, तत्र चैतन्यस्य प्रतिफलनं, तदा-

श्रयतयाऽभिमतेनान्तःकरणेनात्मनस्तादात्म्याध्यासः, तेन चायो दहतीति वदात्मनो ज्ञातृत्वभ्रमः, तत्त्वसाक्षात्कारदशायां आत्मविविक्ततयाऽवतिष्ठमानान्तःकरणमात्रधर्मतया भानमित्येवं परश्शतप्रमाणविरुद्धार्थकल्पनाजातं प्रामाणिका न बहुमन्वते ।

अतो जानामीत्यात्मधर्मतया प्रतीयमानस्य स्वाभाविकात्मधर्मस्य स्वयंप्रकाशत्वेनाजडस्य घटादिप्रकाशकत्वसंभवात् न घटादेस्स्वरूपचैतन्यात्मकफलव्याप्यत्वावश्यंभावः ।

**वृत्त्युपहितचित्तादात्म्यस्य मिथ्यात्वप्रयोजकत्वानुपपत्तिः**

एतेन यथाचोक्तप्रमाणजन्यवृत्तिमात्रविषयत्वेऽपि घटादिवत् वृत्त्यवच्छिन्नचिद्विषयत्वाभावात् न ब्रह्मणो मिथ्यात्वं, वृत्त्युपहितचित्तादात्म्यमात्रस्य मिथ्यात्वप्रयोजकत्वात्, शब्दाजन्यवृत्तिविषयत्वस्यैव वा तत्प्रोजकत्वादित्युक्तं निरस्तम् ।

उपहितचितो भवन्मते उपाधिकालीनविशेष्यमात्रतया मिथ्यावस्तुतादात्म्ये विशेष्यस्यापि चित्पदार्थस्य मिथ्यात्वापत्तेः । शब्दाजन्य-योगिप्रत्यक्षविषयत्वेन ब्रह्मणोऽपि मिथ्यात्वापत्तेश्च । तथा च घटादिव्यावृत्तमवेद्यत्वं ब्रह्मणः प्रतिष्ठापयितुं वृत्तिव्याप्यत्वस्यापि परिहर्तव्यत्वात् जिज्ञास्यत्वप्रतिज्ञाव्याहतिस्तदवस्थैव ।

**वृत्तिज्ञानस्य स्वरूपज्ञानावधिकानवगाहित्वे तु नाज्ञाननिवर्तकता**

अत एव वृत्तिरूपं ज्ञानं प्रत्यगभिन्नब्रह्मस्वरूपमात्रविषयतया अज्ञानसमानविषयकत्वादज्ञाननिवर्तकमित्युक्तमप्यपास्तम् । ब्रह्मस्वरूपमात्रप्रकाशस्याज्ञानविरोधित्वानुपगमाच्च । अन्यथा स्वरूपचैतन्यस्यापि अज्ञानविरोधित्वापत्त्या नित्यमुक्त्यापत्तेः । ज्ञानस्य विरोधाविरोधयोः विषयभेदप्रयुक्तत्वेन स्वरूपवृत्तिज्ञानभेदस्याप्रयोजकत्वात् । एतेन मतद्वयेऽपि धर्मिभूतं ज्ञानं स्वप्रकाशं नाज्ञानविरोधीति वस्तुस्थितिरित्युक्तमपि प्रत्युक्तम् ।

अस्मन्मते धर्मिज्ञानादधिकविषयकस्यैव धर्मभूतज्ञानस्य ध्यानोपासनादिशब्दविहितस्य वर्णाश्रमादिधर्मसहकृतस्य ध्येयप्रसादरूपादृष्टद्वारेण कर्मापरपर्यायाज्ञाननिवर्तकत्वोपगमेनोक्तप्रतिबन्धप्रसक्तेश्च ।

अतो वृत्तिज्ञानेन ब्रह्ममात्रविषयीकरणस्याज्ञाननिवृत्तावुपयोगाभावादवेद्यत्वसिद्धान्तविरोधः। वृत्तिव्याप्यत्वमपि परित्यक्तव्यमेव। तस्मादयुक्तमेव ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यत इति। एवमवेद्यत्वे जिज्ञास्यत्वं व्याहतमित्युक्तम्।

तथा केनचिदाकारेण विदित एवाकारान्तरेणाविदिते जिज्ञासोदयः, न त्वत्यन्तापरिज्ञाते सर्वथा विज्ञाते वा। यत्किंचिदाकारेण तज्ज्ञानं तत्र जिज्ञासाया हेतुः, आकारान्तरेण तज्ज्ञानं फलं, तदुभयस्य निर्विशेषे दुर्घटत्वादपि जिज्ञास्यत्वं व्याहतम्।

न च सच्चिदानन्दरूपस्य ब्रह्मणः सदादिरूपेण सामान्यतो ज्ञानं, आनन्दादिविशेषरूपेणाज्ञानं च जिज्ञासाहेतुः अखण्डरूपेणानावृतं ज्ञानं फलमिति जिज्ञासाया हेतुफले संभवत इति वाच्यम्।

**निर्विशेषे सामान्यविशेषासंभवः**

निर्विशेषे निरुक्तसामान्यविशेषरूपद्वयसंभवस्य दुर्वचत्वात्। न च स्वरूपातिरिक्तरूपद्वयसंभवेऽपि स्वरूप एव सद्रूपमानन्दरूपमिति द्वैविध्योपगमे न विरोध इति वाच्यम्। तयोस्स्वरूपत्वे सामान्यविशेषरूपत्वासंभवात्।

न चानन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्माः इत्युक्तरीत्या अखण्डब्रह्मणएवाज्ञानवशादंशविशेषेण धर्मधर्मिभावकल्पनमित्युक्तं युक्तम्। कल्पितविशेषधर्मत्वेनानन्दादिज्ञानस्य भ्रान्तित्वेनासंपाद्यत्वात् विशेषाकारगोचरत्वेनाखण्डार्थत्वानुपपत्तेश्च।

न च तज्ज्ञानादज्ञाननिवृत्तौ धर्मतया भानस्यापि निवृत्तेरज्ञाननिवृत्तिक्षणावच्छिन्नस्य तज्ज्ञानस्याभ्रान्तित्वमखण्डार्थगोचरत्वं च संपद्यत इत्युक्तमिति वाच्यम्। तथाविधावस्थायां तस्य विशेषाकारानवगाहित्वेन फलत्वासंभवात्। अज्ञाननिवृत्तिक्षण एवाखण्डाकारगोचरत्वसंभवे अखण्डाकारवृत्तेरज्ञाननिवृत्तिप्रयोजकत्वमिति स्वपूर्वोक्तिविरोधाच्च।

न चानन्दादेर्धर्मत्वाभावेऽपि सच्चिदानन्दब्रह्मांशत्वेन विशेषाकारत्वमुपपद्यत इति वाच्यम्। अखण्डार्थतयाऽभिमते वस्तुतस्तदसंभवात्, कल्पनायां च भ्रान्तिताया दुस्त्यजत्वात्।

**निरंशे विदिताविदितांशभेदानुपपत्तिः**

न चैकस्य निरंशस्य निर्धर्मकस्य सदानन्दादि विदिताविदितानेकात्मकत्वं संभवितुमर्हति। सामान्यविशेषयोरेकत्वायोगात्, अन्यथा विशेषज्ञानस्य व्यर्थत्वेन तदर्थं जिज्ञासानुपपत्तेः। यथोक्तमद्वैतिभिरेव—

**एकत्वमविरोधेन भेदसामान्ययोर्यदि।**
**न द्व्यात्मकता भवेदेकतरनिर्भक्तभागवत्।**
**ऐकात्म्यबुद्धेर्भागे चे देवं वस्तुनि तद्व्यंसौ।**
**न चेत्कुतस्त्यमेकत्व मस्ति चेत् द्व्यात्मता कथम्।**
**बुद्ध्यन्तरस्य वैयर्थ्यमेकांश इव चापतेत्।**
**नानात्वादर्थवत्ता चेदेकत्वाद् व्यर्थता न हि॥**

इति।

अत एवाखण्डब्रह्मणस्सदादिरूपेण सामान्यज्ञानं आनन्दादिविशेषांशेनाज्ञानं च जिज्ञासाहेतुः, अखण्डरूपेण ज्ञानं तत्फलं, निरंशेऽपि ब्रह्मणि उपादानत्वश्रुत्युपपत्त्यर्थमज्ञानवशात् सदादिस्वरूपभेदकल्पनं, यावदखण्डाकारवृत्ति तत्र भेदव्यवहारश्च न विरुद्ध्यत इत्युक्तं न युक्तम्।

अभिन्ननिमित्तोपादानत्वसिद्धान्ते उपादानस्य प्रमाणसिद्धसर्वज्ञत्वाभ्युपगमावश्यंभावेनाज्ञानस्याप्रसक्त्या भेदकल्पनाया असंभवात्, परिणामादिति सूत्रोक्तरीत्या परिणाम्युपादानत्वस्यैव मुख्यतया पूर्वं समर्थितत्वेन विवर्तकथागन्धानुपलम्भेन चाज्ञानकल्पनाया निष्फलत्वाच्च।

किं चानन्दादिविशेषाज्ञानेन सदादिसामान्ये कथं तद्भेदकल्पना? असत्यां च कल्पनायां कथं सदादिसामान्यज्ञाने तदनतिरिक्तानन्दादिविशेषाज्ञानं, असति च तदज्ञाने हेत्वभावात् कथं जिज्ञासेति दुस्तरो व्याघातः।

अखण्डाकारवृत्तौ च कः पुनरपूर्वाकारो भासते? येन सदादिस्वरूपभेदकल्पना निवर्तेत? स्वरूपमात्रप्रकाशस्तु पूर्वमेवास्ति। अतोऽखण्डाकारवृत्तेः पूर्वाधिगताधिकावगाहित्वासंभवेन न जिज्ञासाप्रयोजनत्वं संभवति, किमुत नित्यसिद्धस्य स्वरूपमात्रप्रकाशस्य।

**अनादेः सदादिसामान्यज्ञानस्य संशयद्वारा हेतुत्वासंभवः**

अत एव तस्य हेतुत्वमपि न संभवति । तथासति जिज्ञासाया हेतुफल सामानाधिकरण्यनियमदृष्टेरत्र भङ्गप्रसङ्गस्य शतदूषण्यामावेदितस्यानिस्तारात् । हेतुतयाऽभिमतस्य तस्यानादित्वेन जिज्ञासाया अप्यनादितापत्तेरुक्तत्वाच्च । तत्परिहाराय संशयोत्पादनद्वारैव जिज्ञासाहेतुरिति समाधानं तु स्वरूपज्ञानेनैव तस्य ज्ञातत्वेन संशयस्यैवानुपपत्तेरिति चण्डमारुतेन पूर्वमेव निर्धूतम् । अतो विवरणकृन्मतावलम्बने न हेतुः, न च फलं, न वा जिज्ञासाऽप्युपपादयितुं शक्येतेति जिज्ञास्यत्ववचनं निरवलम्बनमेव स्यात् ।

भामतीकारमते तु—अज्ञानोपहितस्य स्वरूपस्य हेतुत्वमुच्यमानं तस्यानादित्वेन तत्प्रयुक्तसंशयजिज्ञासाद्यनादितापत्त्या निरस्तप्रायम् ।

वृत्त्युपहितज्ञानस्य वृत्त्यनवगाहित्वोपगमेन भ्रान्तित्वपरिहारेऽपि नित्यसिद्धस्वरूपमात्रावगाहित्वेन न फलत्वसंभव इति प्रागेवोक्तम् ।

**उपहितज्ञानस्य घटादिज्ञानसाधारणेन व्यवहारदशायामबाधमात्रेण न जिज्ञासाफलत्वसंभवः**

तत्रोपहितत्वेनोपहितस्य भानोपगमे तस्य मिथ्यात्वाभ्युपगमेन तज्ज्ञानस्य भ्रान्तित्वं दुर्वारं, व्यवहारदशायामबाधेन भ्रान्तित्वपरिहारे तथाविधप्रामाण्यस्य घटादिज्ञानसाधारण्यात् तज्ज्ञानस्य न विशेषस्यात् । येन तत्संपिपादयिषया प्रेक्षावन्तः प्रवर्तेरन् ? उपहितविषयकत्वं तु सर्वत्राविशिष्टं, सर्वस्यापि ज्ञानस्य ब्रह्मविषयकत्वोपगमात् । अज्ञाननिवर्तकत्वप्रयोजक समानविषयकत्वशरीरे चानतिरिक्तविषयकत्वस्यानिवेश्यत्वात् । अन्यथा आत्रेयगोत्रोऽयं ब्राह्मण इति वाक्यजन्यज्ञानेन ब्राह्मणाद्यवगाहिना गोत्रमात्राज्ञानस्य, कारीषवह्निमानिति ज्ञानेन कारीषत्वावगाहिना वह्निसामान्यज्ञानस्य च निवृत्त्यनुपपत्तेः ।

तथा च घटादिज्ञानापेक्षया विशेषस्य दुर्वचत्वादुपहितज्ञानस्य न जिज्ञासाफलत्वं, संभवदुक्तिकं स्यात् । अतो ब्रह्मज्ञानानन्तरमप्यबाधितार्थकत्वरूपघटादिज्ञानव्यावृत्तप्रामाण्यभ्रमेणैव तज्ज्ञानस्य संपाद्यत्वं वक्तव्यम् ।

तत्रैव परीक्षकेभ्योऽपि प्राथमिकभ्रमप्रमात्वव्यवसायिनां प्रागल्भ्यं, स्वरूप-व्यतिरिक्तं कृत्स्नं मिथ्येति प्रयोजकशिक्षणविरोधश्च प्रसज्यत इति दूषणमुक्तं तत्तु तत्र दुरुद्धरमेव ।

### वैशद्यानावृतत्वादिविशिष्टतयाऽपि स्वरूपस्य फलत्वासंभवः

अत उपहितत्वेनोपहितविषयकज्ञानस्य फलत्वमनभ्युपगम्य स्वरूपस्यैव नित्यस्य प्रागसिद्धानावृतत्वादिरूपवैशद्ययोगेन फलत्वोपगमे च तादृशवैशद्यादेः स्वरूपानतिरिक्तत्वे, प्रागसिद्धिविरोधस्य, अतिरिक्तत्वे च सत्यत्वमिथ्यात्व विकल्पक्षोभस्य चोक्तस्य न कश्चित्परिहारस्स्यात् ।

न च तस्य स्वरूपात्मकत्वेऽपि तद्रूपेण प्रागसिद्धत्वात् फलत्वव्यपदेशोपपत्तिरिति वाच्यम् । तद्रूपस्यापि स्वरूपातिरेकानतिरेकविकल्पे पूर्वोक्तदोषतादवस्थ्यात् । एतेन नित्यसिद्धस्यापि स्वप्रकाशस्य चैतन्यस्यावृतस्यानावरणं, तत्प्रयोजकवृत्त्याकारत्वं वा वैशद्यमित्यप्यपास्तम् ।

नित्यसिद्धस्वप्रकाशप्रकाशैकरसस्यावरणासंभवात् अनावरणस्य स्वरूपात्मकत्वे पूर्वसिद्धत्वेन फलत्वायोगात्, अतिरेके सत्यत्वमिथ्यात्वविकल्पक्षोभस्य दुस्त्यजत्वात् । अभावरूपविशेषोपगमेऽप्यद्वैतहानेरवर्जनीयत्वात्, भावान्तरस्यैव च सर्वत्राभावत्वे भावाद्वैतसिद्धिप्रसक्तेरपि अभावात्, वृत्त्याकारतायाश्च निराकारस्वरूपवृत्तित्वायोगेन स्वरूपवैशद्यरूपत्वासंभवात्, यावद्वृत्त्यनुवर्तमानतया तस्यास्सत्यत्वे सद्वितीयत्वप्रसङ्गात्, वृत्त्युपरमे निवर्तमानत्वे मिथ्यात्वावश्यंभावेन प्रेक्षावतामसंपाद्यतया फलत्वानुपपत्तेश्च ।

एवमतिरिक्ताकारप्रकाशादिरूपत्वमप्यत्र वैशद्यस्य दुर्वचमिति शतदूषण्यामेव स्फुटम् ।

### जिज्ञासायास्सदानन्दादिभेदभ्रमनिवृत्त्यर्थत्वे दूषणम्

न चैवमपि सदानन्दादिरूपसामान्यविशेषभेदभ्रमनिवर्तनार्था जिज्ञासा स्यादिति वाच्यम् । 'तद्ब्रह्मेति' 'विजिज्ञासस्व' 'ब्रह्मजिज्ञासा' 'अविद्यानिवृत्तिपरत्वाच्छास्त्रस्य' आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता

आरभ्यन्त' इत्यादि श्रुतिसूत्रभाष्याद्यक्षरस्वारस्यभङ्गात् तत्र क्वचिदपि सदानन्दादिभेदाभेदगोचराक्षरानुपलम्भात् ।

## शास्त्रस्य प्रणाड्या ब्रह्मविषयकत्वानुपपत्तिः

न चेषां शास्त्रजन्यज्ञानेनाविद्यातत्कृतभेदनिवृत्तौ स्वतश्शुद्धब्रह्मसिद्धेरुपपत्तिरिति वाच्यम् । स्वत एव सिद्धे शास्त्रतात्पर्यकथनस्यास्वरसत्वात् । न च भामतीमते शास्त्रमुपहितविषयं न तु शुद्धविषयमपीति वाच्यं; उपाध्यविषयीकरणे उपहितविषयं शुद्धविषयमित्यनयोरर्थभेदस्य दुर्वचत्वात् । उपाधिकाले तत्कालीनत्वरूपतयाऽभिमतस्य तदुपधानस्य शुद्धेऽप्युपहित इवावर्जनीयत्वात् । अतश्शास्त्रस्य साक्षात् ब्रह्मविषयकतया तत्परत्वे संभवति तद्विषयकत्वानुपगमेन प्रणाड्या तत्परत्वकल्पनं न स्वारस्यानुसारि ।

## कल्पिताकारनिवृत्तेः ब्रह्मात्मैक्यरूपत्वे दूषणम्

अथ यदि शास्त्रतात्पर्यविषयतयाऽभिमतायाः अविद्यातत्कल्पिताकारनिवृत्तेरेव ब्रह्मात्मैक्यरूपतामुपगम्य सूत्रभाष्यादिस्वारस्यं निरुह्यते; तदा माध्यमिकमतेऽपि कल्पिताकारनिवृत्तेरुपगमात् तदभिन्नतयाऽभिमतब्रह्मात्मैक्येऽपि विवादायोगेन माध्यमिकेन भवतां ब्रह्मात्मैक्यविवादविलयापात इत्युक्तम् । अत्र चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिकमते अद्वैतमते तु सद्रूपं न चतुष्कोटिविनिर्मुक्तं इत्यादिना किं भेदवर्णनेन ? ।

आत्मैक्यसिद्धौ परं संनह्यतां भवतामन्यत्र सिद्धस्य वैविध्योपगमवदत्रापि नानाविधसरण्यनुसरणेऽपि आत्मैक्यांशेऽविवादापत्तेः ।

अतो यदि कल्पिताकारभेदशून्यत्वं न ब्रह्मात्मैक्यरूपमित्युच्यते तदा कल्पिताकारभेदशून्यत्वज्ञानार्थं ब्रह्मजिज्ञासेति तु नोपपन्नं स्यात् । तदप्युक्तं—**न तर्हि ब्रह्म जिज्ञास्यं; अपि त्वयमाकारः सत्यो मिथ्या वेतीति ।**

### अद्वैतिभिरनुक्तोपालम्भइति वक्तुं न शक्यं

तथा सर्वज्ञं सर्वशक्तिसमन्वितमित्यत्राविद्योपाधिकं रूपमाहेति भामत्याऽपि अज्ञानोपहितं ब्रह्म जिज्ञास्यमिति प्रत्याय्यते। अत अज्ञानोपहितं जिज्ञास्यमित्यभिप्रेत्य दूषणान्यनुक्तोपालम्भनानीत्युक्तापलापेन दूषणान्तरमेव संपाद्यते; न तु तथावचनमात्रेण प्रागुक्तदूषणपरिहारः। प्रत्युत तान्यपरिहार्याणीत्येव मुखभेदेन अनुमतमित्युक्तं भवति।

इदं तु बोध्यं—अद्वैतमते पदवाक्यार्थवर्णने प्रबन्धॄणां नैकरूपं वचनं; किं तु तत्तन्मत्यनुसारेण परस्परविरुद्धं भिन्नभिन्नमेवेति कतिपयग्रन्थदर्शिनामपि विशदमेव। तत्रापि न द्वित्राः पञ्चषा वा परिमिताः प्रकारभेदाः, किं तु परस्सहस्रम्। अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधेति हि तैरुच्यते। न च तत्सर्वं तदीयैरप्याधुनिकैरधिगतमिति वक्तुं शक्यं; कतिचित् सिद्धान्तभेदा एव हि संगृह्यैकत्र संकलिता दृश्यन्ते; अन्ये तु विशकलिता एव स्युः। तत्र सर्वमपि दूष्यं शतदूषण्याः क्रमेणैव हि वाक्प्रवृत्तिः स्यात् न तु युगपत्; अत एकतरदूषणावसरे अन्यदवलम्ब्य नैवमस्माभिरुक्तं; अनुक्तोपालम्भनमिदमित्येवमद्वैतिभिर्न वक्तुं युक्तमिति।

### ज्ञानेतरनिवर्त्यत्वे सत्यत्वप्रसङ्गः

वृत्त्युपहितमित्युक्त्याऽपि वृत्तेराविद्यकत्वेनाज्ञानोपहितं जिज्ञास्यमित्येवोक्तं भवति। तथा चाज्ञानोपहितं जिज्ञास्यमिति पक्षे तस्य मिथ्यात्वात् तज्ज्ञानस्य भ्रमत्वेन पूर्वभ्रमनिवर्तकत्वोपगमेऽपि तन्नाशकज्ञानान्तरासंभवेनाहेतुकविनाशायोगेन च तस्यानुवृत्त्यवश्यंभावे मुक्तिदशायामप्यात्यन्तिकभ्रमनिवृत्त्यनुपपत्तिरनिवार्यैव।

न च तस्याप्यविद्याप्रयुक्तत्वात् अविद्यानिवृत्त्यैव घटादीनामिव तस्यापि निवृत्तिर्भवतीति वाच्यम्।

तस्याविद्यानिवृत्त्यैव निवर्त्यत्वोपगमे ज्ञाननिवर्त्यत्वाभावेन मिथ्यात्वानुपपत्त्या सत्यत्वप्रसङ्गात्। अखण्डाकारवृत्तिनिवृत्तावपि समानमेतत्।

शुक्तिरूप्यादिषु मिथ्यात्वेन संप्रतिपन्नेषु साक्षादेव विरोधिज्ञाननिवर्त्यत्वं दृष्टं न तु परम्परया नापि ज्ञानमात्रेण। अतस्तदेव मिथ्यात्वव्याप्तं

वैनेतेयादिप्रसादद्वारा तद्ध्याननिवर्त्ये विषादौ, उत्तरोत्तरज्ञाननिवर्त्ये पूर्व-ज्ञानादौ च मिथ्यात्वासंप्रतिपत्तेः। तेन स्वजन्याविद्याविनाशनिवर्त्यत्वेऽप्यखण्डाकारवृत्तेः परम्परया स्वात्मकज्ञाननिवर्त्यत्वेन मिथ्यात्वोपपादन-मप्ययुक्तमेव। विरोध्यविषयक तया स्वस्य स्वनाशकत्वाभावाच्च। अत एव न स्वात्मकवृत्त्युपारूढचैतन्यनिवर्त्यत्वमपि।

## अखण्डाकारवृत्तेस्स्वतो निवृत्त्यनुपपत्तिः

एतेनाखण्डाकारवृत्तेः स्वत एव निवृत्तौ कतकक्षोददश्वलोहपीताम्बुदश्वतृणकूटदहनाद्युदाहरणवचनान्यपि निरस्तानि। तत्र तत्र स्वेतर-स्वनाशहेतो निरूपयितुं शक्यत्वात् प्रतियोगिमात्रस्य विनाशहेतुत्वोपगमे सर्वस्यापि क्षणिकत्वप्रसङ्गाच्च। न चाखण्डाकारवृत्तेः ज्ञाननिवर्त्यत्वाभावेऽपि ज्ञाननिवर्त्यत्वेन मिथ्याभूताविद्याधीनत्वान्मिथ्यात्वमिति वाच्यम्।

असत्यात् सत्यसिद्धिमभिमन्यमानानां मिथ्याधीनस्य मिथ्यात्वनि-यमोपगमानुपपत्तेः। तस्मादशुद्धं जिज्ञास्यमिति पक्षे तज्ज्ञानस्य मुक्त्युपाय-त्वायोगेन जिज्ञासावैफल्यं दुर्वारमेव।

शुद्धं तु न युष्मन्मते जिज्ञास्यमेव भवितुमर्हतीत्युच्यते 'जिज्ञास्य-मपि न ते स्यादि'ति। तत्र हेतुः ज्ञप्त्या तत्स्वरूपस्पर्शानभ्युपगमादिति।

घटादिव्यावृत्तावेद्यत्वेनाभिमतस्य वृत्तिव्याप्यत्वमपि दुर्निरूपमिति पूर्वमेव निरूपितम्।

तथा जडरूपवृत्तिकल्पनं; तदवच्छिन्नचैतन्येन घटादिप्रकाशकल्पनं चाप्रामाणिकमित्यपि।

अतः परस्सहस्रप्रमाणसमधिगतस्वप्रकाश-धर्मभूतज्ञानस्यैव वृत्ति-रिति नामकरणं कथंचिद्युज्येत; तद्विषयत्वोपगमे च दृश्यत्वजडत्वादिकम-निवार्यं, यदि तद्विषयत्वस्य मिथ्यात्वोपगमादवेद्यत्वाद्यविरोध इति मन्यते तदा विशेषणत्वेऽप्यविरोधात् शाखाचन्द्रन्यायादुपलक्ष्योपलक्षकभावावलम्बनं निष्फलमेव स्यात्।

**कथंचिदपि सम्बन्धरहितस्योपलक्षणत्वानुपपत्तिः**

न च वस्तुतः कस्यापि संबन्धस्याभावेऽपि उपलक्षणत्वं संभवति। अन्यथा दृष्टान्ते शाखाया इव मूलस्याप्युपलक्षणत्वापत्तेः।

ब्रह्मावगमकवाक्यस्य भ्रमजनकत्वोपगमे च तत्त्वावेदकवाक्यत्वेन भवतां प्रवादोऽपि व्याहन्येत।

एवं शुद्धस्यैव जिज्ञास्यत्वोपगमे शुद्धेः पूर्वसिद्ध्या जिज्ञासावैयर्थ्यं; शुद्ध्यर्थमेव तदुपगमात्।

न च नित्यशुद्धत्वेऽप्यशुद्धिभ्रमनिरासार्था जिज्ञासेति वाच्यं; आरोपसंभवे नित्यशुद्ध्ययोगादित्युक्तत्वात्।

ननु ब्रह्मण्यशुद्ध्यारोपो जीवकल्पित एव। तं प्रत्येवाधिष्ठानस्य ब्रह्मणोऽज्ञानेनावरणात्। अद्वैतमते अविद्याश्रयत्वं, तद्विषयत्वं च यद्यपि शुद्धब्रह्मणस्स्वीक्रियते तथाऽपि न भ्रान्तत्वमभ्युपगम्यते। तच्च व्यवहार कालबाध्यतूलाविद्याश्रयस्यान्तःकरणतादात्म्यापन्नस्याविद्याप्रतिबिम्बस्य वा जीवस्यैव, न तु बिम्बप्रतिबिम्बभावोभयशून्यस्य शुद्धब्रह्मणो बिम्बरूपस्य वेश्वरस्य। एकस्याप्यात्मनः स्वोपाधिदोषभाक्त्वतदभावाभ्यां किंचिज्ज्ञत्व सर्वज्ञत्वे न विरुद्धे, उपाधेः प्रतिबिम्बपक्षपातित्वनियमात्।

अतः स्फटिकस्योपरक्तत्वेऽपि श्वैत्यानपहारवत् ब्रह्मण्यशुद्ध्यारोपेऽपि न नित्यशुद्धेरपहार इति।

**अद्वैतमते ब्रह्मण एव भ्रान्तता**

मैवं; व्याधकुलसंवर्धितराजकुमारदृष्टान्तेन ब्रह्मैव स्वाविद्यया संसरति; स्वविद्यया मुच्यत इति बृहदारण्यकभाष्ये प्रतिपादनात्।

**राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते।**
**यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः॥**

इति वार्तिकोक्तेश्च।

कौन्तेयस्यैव राधेयत्ववदविकृतस्यैव ब्रह्मणः अविद्ययाऽद्वैतमते जीवभावोपगमेन भ्रान्तब्रह्मवादस्यावर्जनीयत्वात्। अन्तःकरणावच्छिन्न-

चैतन्यजीववादेऽपि ब्रह्मणो भ्रान्तत्वं दुरपह्नवं; तस्य भ्रान्त्यभावे जीवभावाप्रसक्तेः; अविद्याख्याशुद्ध्युपगमवैफल्याच्च ।

प्रतिबिम्बजीववादे च ब्रह्मणो भ्रान्तिरपरिहार्या । प्रतिबिम्बस्य मिथ्यात्वेन प्रतिभासाधीनसत्ताकत्वात् जीवस्य स्वाध्यासहेतुत्वायोगेन ब्रह्मण एव तदध्यासवत्त्वोपगमावश्यंभावात् । भ्रान्तेरन्तःकरणादिवृत्तिरूपत्वेन जडत्वेन विषयप्रकाशत्वायोगात्; तदवच्छिन्नचैतन्यरूपत्वे च तत्र वस्तुतः प्रतिबिम्बतदुपाध्यन्यतरधर्मत्वस्य तत्स्वरूपस्य वा दुर्वचत्वेन बिम्बधर्मत्वस्य तद्रूपत्वस्यैव वाऽभ्युपगन्तव्यत्वाच्च ।

एवमद्वैतमते ब्रह्मण एव भ्रमावश्यंभावे सति न कारणतयाऽभिमत तूलाविद्याद्यभावमात्रेण तदपह्नवश्शक्यक्रियः । फलबलकल्प्यत्वाद्धेतोः ।

## उपाधिभेदेनाप्येकत्र युगपत् सर्वज्ञत्वाज्ञत्वयोर्विरोधः

एवमेकदा सर्वज्ञत्व किंचिज्ज्ञत्वादिकमेकत्र विरुद्धमेव । न च नभसि अल्पत्वमहत्ववदुपाधिभेदादविरुद्धमिति वाच्यम् । उपाधिगतयोर्विरुद्धधर्मयोरुपाधिभेदेन तद्द्वारा कथंचिदेकत्रोपहिते समावेशसंभवेऽपि विशेष्यमात्रगत सर्वज्ञत्वाज्ञत्वयोरुपाधिभेदेनाप्येकत्र युगपद्विरोधेन समावेशासंभवात् । अत एकस्यैवात्मनः शुद्धब्रह्मजीवेश्वरभावेन युगपत् त्रेधाऽवस्थानं विगेयमेवेत्यन्यदेतत् । सर्वथा ब्रह्मण एवारोपवत्त्वस्यावश्यकत्वे नित्यशुद्ध्ययोगात् अनित्यशुद्धिपक्ष एवावशिष्यते ।

तत्र चोभयावधिमत्त्वमित्यादिनोक्तविकल्पतद्दूषणान्यनिवार्याणि । तत्पक्षे गत्यन्तराभावात् ।

## अद्वैतविशिष्टाद्वैतमतयोः न तत्त्वहितपुरुषार्थैकरूप्यम्

नित्यशुद्धत्वश्रुतिविरोधश्च जीवनित्यत्वश्रुतिवत् दशाविशेषे नित्यत्वपरतया संकोचेन कथंचित्परिहरणीयः, न त्वस्मन्मत इव परमार्थतः सर्वदा नित्यशुद्धत्वं परमात्मनो, नित्यत्वं च जीवात्मन इत्यसंकोचेन शक्यमुपगन्तुम् । यतः कालविशेषेण संकुचितं तदाऽपि न पारमार्थिको ब्रह्मधर्मः; किं तु धर्मिस्वरूपमेव । नित्यशुद्धत्वमिति ह्यद्वैतमते वक्तव्यमापतति, कथं पुनरिदमुभयसंमतं स्यात् ? कथं वाऽयमसौ सत्यो धर्म इत्यत्राद्वैतिनो न विप्रति-

४

पद्येरन् । न हि श्रीभाष्यकृदादिभिः व्यावहारिकसत्योऽयं धर्म इत्युपेयते । न वा धर्मिरूपमिति । नापि उपासनं निर्गुणविद्योपकारकतया मोक्षसाधनमिति । न वा निर्गुणविद्याया उपायत्वं, निर्गुणभावप्राप्तेरुपेयत्वं च ।

परं तु नित्यशुद्धत्वनिरतिशयानन्दत्वादयः परमार्थसत्या एव परमात्मनो नित्या धर्माः । तथाविधयथोक्तधर्मविशिष्टतया तदुपासनमेव स्वतो दासभूतानां जीवात्मनां मुक्त्युपायः ।

## परमसाम्याधिकमुक्त्यसिद्धिः

सर्वावस्थोचितसर्वविधशेषिवृत्तिपर्यन्तपरिपूर्णब्रह्मानुभवनिबन्धनजगद्व्यापारवर्जभोगमात्रब्रह्मसाम्यमेव तेषां परममुक्तिः । तदतिरिक्तपरममुक्तितदुपायकल्पनं त्वप्रामाणिकमेवेति ।

एवं सत्यपि भूयस्यवान्तरविवादे सामान्यत उभयसंमतत्वाभिधानं बाह्याद्वैतिनामपि शक्यमेवेति न किंचिदेतत् ।

एतेनोदारगुणसागरः परमपुरुषः स्वाराधनात्मकशास्त्रार्थसंप्रीतस्त्रिवर्गमपवर्गं च प्रयच्छतीति प्राची मर्यादेत्यद्वैतिनोऽपि मन्यन्ते । परं तु प्राचीमर्यादेयमवान्तरमुक्तिसाधनत्वात् जगद्व्यापारवर्जभोगमात्रसाम्यमात्रफलकत्वाच्च पूर्वावधिः । पराकाष्ठा तु ब्रह्मभाव एव जगद्व्यापारेण साकं सर्वात्मनेश्वरभावाख्योऽनेकजीववादे यावत्सर्वमुक्तिरिति तु विशेषः । तत्रैव वेदान्तानां महातात्पर्यादित्युक्तमप्यपास्तम् ।

अपुनरावृत्तिमतामवश्यंभाविन्याः, अत एव नित्यतयाऽनेकश्रुतिस्मृति-सूत्रसमधिगताया भोगमात्रपरमसाम्यमुक्तेरुत्तरावध्यसिद्ध्या ततः परभूतकाष्ठाया दुर्वचत्वात् ।

भवन्मते ब्रह्मभावस्येश्वरभावाद्भेदोपगमेन तदाख्यत्वानुपपत्तेः, 'भेदव्यपदेशाच्चान्यः', 'उभयेऽपि हि भेदेनैनमधीयते' 'अधिकोपदेशा' दित्यादावीश्वरभिन्नतया वर्णितानां जीवात्मनां तद्भावस्यासंभवदुक्तिकत्वात् ।

ब्रह्मणस्तटस्थलक्षणतया तत एव तदवृत्तितयाऽभिमतस्य जगद्व्यापारस्य मुक्तात्मनां ब्रह्मभावोपगमेऽपि प्रसक्त्यभावात् मुक्त्यवस्थायां साम्यसाधर्म्यसाहित्यादिश्रवणेन ब्रह्मात्मैक्यस्यानेकश्रुत्यादिप्रमाणवाक्यबाधितत्वेन

तत्र वेदान्तप्रान्ततात्पर्यगन्धारोपस्यापि दौष्कर्याच्च महातात्पर्यवर्णनसाहस-स्योपहास्यत्वात् ।

अतो भोगमात्रपरमसाम्यमेव परमा मुक्तिः न तु ततः परा । तत्साधनं चोपासनमेव, न तु वेदनमात्रं, तद्विषयश्च गुणविग्रहविभूतिविशिष्टो महापुरुष एव । स एव जिज्ञास्यः, न तु गुणादिहीनो निर्विशेषोऽपि । विदिताविदिताकारभेददुर्गतत्वेन तस्य जिज्ञास्यत्वानुपपत्तेरित्येतावदुक्तमर्थ-जातमप्रकम्प्यमेव ।

## आनन्दाज्ञाने तत्र सदादिभेदकल्पनानुपपत्तिः

यत्तु—ज्ञानरूपस्यापि ब्रह्मणोऽज्ञानाविरोधित्वेन प्रकाशात्मना सामान्यतो ज्ञानेऽपि ब्रह्माश्रिताज्ञानवशात् भिन्नतया कल्पितानन्दरूपविशेषां-शाज्ञानात् वृत्त्युपहितत्वेन नित्यसिद्धस्यापि ब्रह्मणः फलत्वाविरोधान्न जिज्ञासानुपपत्तिरिति पुनरप्युक्तं,तत् पूर्वमेवैकस्मिन्निरंशे निर्विशेषे धर्मिस्व-रूपे सामान्यविशेषात्मकांशद्वयायोगादनुपपन्नमिति प्रतिपादनात् प्रत्युक्तम् ।

आनन्दरूपविशेषांशस्याज्ञाने तस्य सामान्यांशभिन्नतया कल्पना-वाचोयुक्तेरनुपपत्तेश्च । ज्ञातमेव हि कल्पितमित्युक्तिमर्हति ।

न चानन्दरूपविशेषांशे सामान्यरूपप्रकाशांशभेदमात्रकल्पनात् आनन्दांशाज्ञानेऽपि न विरोध इति वाच्यम् ।

भवन्मते भेदग्रहणसामान्यस्य (स्वरूपग्रहणरूप) प्रतियोगिस्मरण सव्यपेक्षत्वोपगमेनानन्दस्वरूपग्रहणाभावे भेदग्रहणस्य दुर्निर्वहत्वात् । तत्सिद्धमद्वैतमते हेतुफलादेर्दुर्निरूपत्वात् ब्रह्मजिज्ञासानुपपत्तिरपरिहार्येति ।

अथ यान्यत्र स्वोक्तपरिहारप्रकारेषु स्वस्याप्यपरितोषादिव अन्ते प्रतिबन्दिवचनानि, तानि प्रत्यस्यन्ते ।

तत्र यदुक्तं—श्रीभाष्यमते कारणरूपेण ब्रह्मणो विशदमवगमात् यतो वेत्यादिवेदान्तवाक्यानां ब्रह्मपरत्वेऽविवादात् तस्य स्वरूपलक्षणत्वस्या बाधितस्य स्वीकारात् यतोवेत्यादि विचारार्थं जन्माद्यधिकरणं वितथमिति ।

## जन्माधिकरणस्य श्रीभाष्मकृन्मत एवार्थवत्त्वं

तदसंबद्धं—जिज्ञासानुपपत्तिवादेऽप्रस्तुतजन्माद्यधिकरणवैयर्थ्यापाद-नस्य संगत्यभावात् । उपलक्षणतया वा विशेषणतयाऽपि वा बहूनां जन्मादि-

कारणत्वानामेकब्रह्मलक्षणत्वासंभवाक्षेपप्रकारविशेषपरिहारतया भाषितत्वेन जन्माद्यधिकरणस्यार्थवत्तरत्वाच्च । प्रत्युत तटस्थलक्षणत्वपक्षस्यैव सूत्राक्षर-स्वारस्यप्रतिपक्षत्वेन प्रागेव प्रतिक्षिप्ततया तदुपपादनेन सार्थक्यायोगात् ।

निर्विशेषस्वरूपलक्षणत्वानुपगमात्, यतो वेत्यादि प्रकरणस्य सवि-भूतिकसगुणब्रह्मपरत्वेनाद्वैतब्रह्मप्रतिपत्त्यध्यारोपापवादन्यायारोपाद्यप्रसक्तेश्च । परमत एव जन्माद्यधिकरणवैतथ्यमापद्यते ।

श्रीभाष्यकृन्मते च विशिष्टब्रह्मणः परिणाम्युपादानत्वं मुख्यमेव संपद्यत इति पूर्वमेव सनिदर्शनं सम्यगुपपादितम् ।

तत्र प्रकृतिनियामकत्वमात्रं द्वैतमत इव केवलनिमित्तकारणत्वमेव च स्वीकृतं भवतीति पौनःपुन्येन वचनं शरीरात्मभावसंबन्धविशेषानव-धारणनिबन्धनम् ।

शरीरपरिणामेऽपि शरीरिण उपादानत्वव्यवहारदर्शनात् तथा च मुण्डकोपनिषदि परविद्यावेद्यस्याक्षरब्रह्मणः विशेषणतया निर्विशेषत्वशङ्का—व्यावर्तकतया समाम्नातस्य भूतयोनित्वस्योपपादनाय दृष्टान्तप्रदर्शनावसरे यथोर्णनाभिस्सृजते गृह्णते चेति हि समाम्नायते । तत्रोर्णनाभिरूपश्चेतनो न साक्षात् परिणमते, किं तु शरीरद्वारेण तथाप्युपादानत्वं परं शरीरिण एवेति च संप्रतिपन्नम् ।

### विशिष्टस्वरूपान्तर्गतविशेषणपरिणामस्य विशिष्टपरिणामरूपतायाः शङ्करभाष्येऽप्यनुमतिः

एवमेव हि तत्र शङ्करभाष्यमपि । यथा लोके प्रसिद्ध ऊर्णनाभिः लूताकीटः, किंचित्कारणान्तरमनपेक्ष्य स्वयमेव सृजते स्वशरीराव्यतिरिक्तान् तन्तून् बहिः प्रसारयति पुनस्तानेव गृह्णते च । गृह्णाति स्वात्मभावमेवा-पादयतीति विशिष्टस्वरूपान्तर्गतापृथक्सिद्धविशेषणपरिणामस्यापि विशिष्ट-स्वरूपपरिणामत्वमभिप्रेति । स्वशरीराव्यतिरिक्तान् तन्तूनिति हि निर्दि-श्यते न तु स्वाव्यतिरिक्तानिति; येन विवर्तोपादानतात्पर्यवचनस्यापि कथं-चिदवकाशस्स्यात् । उपादानोपादेययोरनन्यत्वं तु कार्यकारणावस्थविशेष्यै-क्येनेत्युक्तमन्यत्र । अतश्शरीरद्वारा परिणाम्युपादानत्वमेव मुण्डकवाक्ये विवक्षितमित्यवगम्यते ।

## कारणवाक्यसामान्यस्य परिणामिकारणपरत्वम्

तच्च पारमार्थिकमेव । अत एव मुख्यतात्पर्यविषयः । भूतयोनिमित्युपक्रम्य तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत इत्युपसंहारेण कारणत्व एव मुख्यतात्पर्यावगमात् । अत एव चात्राजगत्कारणमेव जगत्कारणमवगम्यत इत्युक्तमपि न युक्तम् । परविद्याया दृष्टिविधित्वानभ्युपगमाच्च ।

नचैवमद्रेश्यमग्राह्यमित्याद्युपक्रमविरोधश्शंकनीयः । इन्द्रियाद्यगोचरत्वादिना चिदचिद्वैलक्षण्ये प्रतिपादिते सत्यपि अतीन्द्रियकारणत्वसर्वज्ञत्वादिपारमार्थिकधर्मयोगोपगमे विरोधाभावात् । कार्यपारमर्थ्य एव 'एकविज्ञानेन सर्वविज्ञानप्रतिज्ञान तदनन्यत्वाधिकरणाद्युपपत्तेः प्रागुपवर्णितत्वेन ब्रह्मव्यतिरिक्तसर्वापलापस्यान्याय्यत्वात् प्रमाणशतविरुद्धत्वाच्च । तदिहाध्यारोपापवादन्यायप्रसक्तेरेवाभावात् सविशेषपरिणामविशेषणविशिष्टकारणपरत्वं दुरपह्नवम् । तथैव यतो वेत्यादावपीति न कुत्रापि विवर्तोपादानगन्धः । न वा वेदे क्वचिदप्यपवादार्थमध्यारोपः । नाप्ययं जन्मादि सूत्रेण निर्णेतुं शक्यते; पारमार्थिकजन्मादावेव तत्स्वारस्येन तत्रारोपसिद्धेरनवकाशात् । एवमप्यधिकरणप्रयोजनं तु पूर्वमेव प्रदर्शितम् । अतो नास्याधिकरणस्य वैतथ्यं प्रसञ्जयितुं शक्यम् ।

## वियदाद्यधिकरणसार्थक्यम्

नापि वियदधिकरणात्माधिकरणादीनां वैयर्थ्यवचनमुपपन्नम् । उत्पत्त्यसंभवाधिकरणे जीवनित्यत्वश्रुत्यनुरोधेन जीवोत्पत्तिवचनानामान्यपर्यसाधने सङ्गतिविशेषेण आकाशाद्युत्पत्तिश्रवणस्यापि तन्नित्यत्ववचनानुरोधेन तुल्यन्यायादान्यपर्ये शङ्किते तेषां कार्यत्वायोगेन सकलजगन्निरूपितकारणत्वं ब्रह्मणो न संभवतीत्याक्षेपे सति तत्परिहाराय यथासंभवं तत्तत्कार्यत्वप्रकारविशेषनिरूपणपराणाममीषामधिकरणानामर्थवत्तरत्वात् ।

प्रकृतेश्च स्वरूपनित्यत्वेऽपि आगन्तुकगुणत्रयाभिव्यक्त्याद्यवस्थावत्त्वेन कार्यत्वमप्यनुमन्यत एव । अतस्साक्षाद्वा परम्परया वा यथाप्रमाणं जगतः कार्यत्वप्रकारनिर्धारणार्थत्वात् श्रीभाष्यकृन्मते द्वितीयोत्तरद्विपाद्यां न कस्यचिदप्यधिकरणस्यानर्थक्यशङ्कावकाशः ।

## ब्रह्मजिज्ञासायास्सङ्कर्षणेनागतार्थता

यत्तु—सङ्कर्षकाण्डेन स विष्णुराह हि तं ब्रह्मेत्याचक्षत इत्युपक्षेपमात्रेण सगुणस्य ब्रह्मणो निर्णीतत्वात् ब्रह्मजिज्ञासानुपपत्तिरिति ।

तत्तु जगत्कारणत्वाद्यनन्तविशेषविशिष्टतया प्रमाणसिद्धस्य सगुणब्रह्मणः सङ्कर्षकाण्डानधिगतानेकविशेषाधिगमाय जिज्ञासासंभवे न काचिदनुपपत्तिरिति प्रागेव प्रत्युक्तम् । अतो निर्विशेषब्रह्मवादिनामेव जिज्ञासानुपपत्तिरनिवार्येति सिद्धम् ।

# ऐकशास्त्र्यसमर्थनवादः

धर्मब्रह्मविचारैक्यं यस्सयुक्तिभिरुक्तिभिः ।
अतिष्ठिपत् सतामिष्टं तमीडे देशिकोत्तमम् ॥

## शास्त्रैक्यप्रतिज्ञा

इह तावदेकैकस्यापि द्विजस्य साङ्गसशिरस्ककृत्स्नस्वाध्यायाध्ययन विधानसद्भावेन क्रमेण वेदोक्तसकलपुरुषार्थानुभवयोग्यत्वसंभवेन च विधितो रागतो वा मुख्यक्रमेण प्रवर्तमानस्य अधीतस्वाध्यायार्थविचारात्मकस्य अथातो धर्मजिज्ञासेत्याद्यनावृत्तिश्शब्दादित्यन्तस्य विंशतिलक्षणस्यापि मीमांसाशास्त्रस्य षट्काध्यायपादादिष्विवावान्तरविषयादिभेदेऽपि स्वाध्यायात्मकैकव्याख्येयव्याख्यानरूपत्वेन सामान्यतोऽर्थप्रयोजनाधिकारैक्यस्य वक्तुं शक्यत्वात्, संप्रतिपन्नैक्येऽपि प्रबन्धे क्वचित् कर्तृभेदस्यापि दर्शनेन तस्यैक्यविरोधित्वाभावात्, भारतादिप्रमाणसमधिगतशिष्याचार्यभावाभ्यां जैमिनिबादरायणाभ्यां सौकर्यविशेषादिप्रतिसंधाननिबन्धनपरस्परसंमत्याऽन्यतरसंमत्या वाऽन्यकर्तृकभागान्तरेण सह स्वप्रणीतभागविशेषसंघटनेनैकप्रबन्धपूरणे तत्र च परस्परसंवादोदाहरणे क्वचित् शिष्योक्तस्य परिष्करणे निगूढाशयाविष्करणेऽनुक्तांशविशदीकरणे च विरोधाभावात्, भाष्यवार्तिकादिष्विव क्वचिदप्रधानार्थविरोधसद्भावस्योपगमेऽपि तस्य शास्त्रैक्यबाधकत्वाभावात् संप्रतिपन्नैक्येऽपि भेदप्रसञ्जकानां परोक्तैक्यबाधकोपन्यासानां निस्सारत्वेन सुपरिहरत्वाच्च शास्त्रैक्यमप्रकम्प्यमित्याचक्षते । अत एव

याज्ञवाल्क्यस्तथाऽन्ये च प्राज्ञा बोधायनादयः ।
श्रुतेरुपकृते रैक्यात् मीमांसैक्यममंस्यत ॥

## याज्ञवल्क्यस्मृत्याशयः

यथाऽऽह-याज्ञवल्क्यः—

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदास्स्थानानि विद्याया धर्मस्य च चतुर्दश ॥

इति । अत्र सर्वेषां पुराणानामिव सर्वासां मीमांसानामैकशास्त्र्यापरपर्याय-मेकविद्यास्थानत्वं विवक्षितमिति स्फुटं, अन्यथा चतुर्दशत्वानुपपत्तेः । अत एवात्र धर्मस्य विद्यानां च स्थानानीति धर्मविद्यास्थानयोः पृथक्करणमपि धर्मब्रह्ममीमांसयोर्भेदं गमयतीत्युक्तमप्ययुक्तम् । धर्ममीमांसाया अपि विद्यास्थानत्वेन ततः पृथक्करणत्वायोगाच्च ।

नचात्र मुक्तिसाधनविद्यापरत्वात् विद्यापदस्य तत्स्थानत्वं न धर्म-मीमांसाया युज्यत इति वाच्यम् । कर्माधिगमस्यापि परम्परया मुक्तिसाधन-त्वात् । वस्तुतः अत्र विद्यापदेन चतुर्विधपुरुषार्थसाधारणज्ञानसामान्यस्यैव विवक्षौचित्याच्च । अन्यथा चतुर्दशानां विद्यास्थानत्ववचनानुपपत्तेः; स्थानानि विद्याया धर्मस्य च चतुर्दशेति ह्युच्यते ।

## विज्ञानेश्वरव्याख्यानसंवादः

अत एवात्र मीमांसा वेदवाक्यविचारः, विद्याः धर्मार्थकाममोक्ष-पुरुषार्थसाधनज्ञानानि । तासां स्थानानि चतुर्दश धर्मस्य च चतुर्दश स्थानानि हेतव इति विज्ञानेश्वरेण चतुर्दशानामेकैकस्यापि धर्मस्थानत्वं, विद्यास्थानत्वं चाविभागेनोपपादितम् । तस्मादुक्तयाज्ञवल्क्यस्मृतौ धर्मब्रह्ममीमांसयोस्संज्ञा भेदोपपादनवचनं वाक्यव्युत्पत्तिवैकल्यविलसितम् । प्रपञ्चितं चेदमत्र प्रथमत एव ।

## तामसपुराणानां विद्यास्थानान्तर्भावः

यत्तु—पुराणानामेकविद्यास्थानत्वे सात्त्विक-राजस तामस भेदेन पुराणानां पृथक्करणं, तत्रापि शैवपुराणानां कूर्मादिपुराणानां च तामसत्वेना प्रामाण्यव्यवस्थापनं नोपपद्येतेति ।

तन्न; सामान्यतः पुराणत्वादिरूपेण विद्यास्थानैक्योपगमेऽपि भाष्यवृत्त्यादिवदवान्तरप्रबन्धभेदस्यापरित्यागात्, प्रमाणतया संप्रतिपन्ना-नामेव पुराणानां विद्यास्थानान्तर्भावोपगमाच्च ।

न हि पुराणमिति नाममात्रेण धर्मविद्यास्थानमित्युपगम्यते, किं तु अनाघ्रातभ्रमविप्रलम्भादिदोषगन्धस्त्वयोगमहिमसाक्षात्कृतसकलवेदार्थतत्त्व - जायमानदशासंजातमधुसूदनकटाक्षलक्ष्यवक्तृविशेषवेदाविरुद्धविषयविशेषादि -

संप्रतिपन्नहेतुवैलक्षण्येन । अतस्तामसानां न धर्मविद्यास्थानकोटिनिवेशप्रसक्तिः । येषां च तत्र निवेशस्संप्रतिपद्यते तेषां पुराणानामवान्तरोपकारादिभेदेऽपि सर्गप्रतिसर्गाद्यावेदनोपकारैक्यदृष्ट्या महर्षिभिरेकविद्यास्थानतया परिगणनमविगीतमित्युच्यते ।

एतेनाष्टादशपुराणानामुपकारभेदात् पृथक् धर्मविद्यास्थानत्वापत्तौ चतुर्दशधा धर्मविद्यास्थानविभागायोग इत्युक्तं निरस्तम् । अवान्तरोपकारादिभेदस्य संप्रतिपन्नैक्येऽपि अध्यायादिभेदेन दुरपह्नवत्वेन तस्यैक्यविरोधित्वाभ्युपगमायोगात् ।

**अनुगतोपकारविरहादेव विद्यास्थानभेदः**

तत्तद्विद्यास्थानासाधारणतया विवक्षितोपकारविशेषानुगमासंभव एव विद्यास्थानभेदव्यवस्थापकः । अत एव हि इतिहासपुराणयोरदूरविप्रकर्षादेकविद्यास्थानत्वनियम इत्युपदिश्यते ।

**याज्ञवल्क्यस्मृतेश्शास्त्रैक्ये मानता; प्रबन्धैक्ये तु बोधायनवृत्त्यादेः**

न चैवं सति इतिहासपुराणयोस्संज्ञाभेदेन भिन्नग्रन्थत्वव्यपदेशानुपपत्तिः । शास्त्रैक्यापरपर्यायविद्यास्थानैक्यात् प्रबन्धैक्यस्यान्यत्वेनानुपपत्त्यभावात् । एतद्विवेकाभावनिबन्धनमेव पुराणेतिहासयोरिव भिन्नत्वेऽपि मीमांसात्वेन मीमांसापदेन मीमांसाद्वयविवक्षणसंभवात् न शास्त्रभेदपक्षविरोध इति प्रत्यवस्थानम् ।

विद्यास्थानैक्यरूपैकशास्त्र्यमात्र एव हि संप्रत्युक्तस्मृतिवचनं प्रमाणतया प्रदर्श्यते । प्रबन्धैक्ये तु बोधायनवृत्तितदभिप्रेत संगतिविशेषादिक मनुपदमुपपादयिष्यते ।

**शतदूषणोनिरस्तानामेव युक्तीनां पुनर्वचनानुपपत्तिः ।**

यत्तु अधिकारिभेदात् तत्तज्जिज्ञासाप्रतिज्ञातविषयभेदात्, तत्तज्जिज्ञासाजन्यज्ञानप्रयोजनभेदात् तत्तच्छास्त्राध्यायादिसंगतिभेदाच्च शास्त्रभेदः पूर्वोत्तरमीमांसयोर्लोकप्रसिद्ध इति ।

तत्तु शतदूषणीयथाश्रुतांशाधिगमेनापि दुर्विध एव वक्तु मर्हति । तत्र स्थितं तावदित्यारभ्य अत एकस्यैव पुरुषस्य वेदोदितसर्वपुरुषार्थयोग्यता-

माश्रित्यैकव्याख्येयव्याख्यानात्मना विंशतिलक्षणमेकं शास्त्रमित्यन्तेन महता ग्रन्थेनाधिकारैक्यनिर्धारणात् ।

एतेनार्थप्रयोजनाधिकारिभेदात् शास्त्रभेद इति निरस्तम् । सामान्यतो वेदार्थं पुरुषार्थं तदर्थित्वरूपेण तेषां भेदासिद्धेः । अवान्तरार्थभेदादेरशास्त्रैक्येऽप्यविरोधात् । अन्यथा षट्काध्यायादिभेदेऽपि भिन्नशास्त्रत्व प्रसङ्गादित्यनन्तरवाक्यसंदर्भेणार्थप्रयोजनाद्यैक्यस्यापि स्फुटमुपपादितत्वाच्च ।

न च तावताऽप्यपरिहार्या काचिदधिका शास्त्रभेदे अधिकार्यादि भेदरूपा युक्तिरत्रोच्यते । न हि निरस्तपूर्वस्याधिकयुक्तिबलमन्तरा पुनरुत्थानमभिज्ञः कश्चिदनुमन्यते ।

### विषयाद्यैक्यबोधकशतदूषण्याशयः

एतदुक्तं भवति—धर्मनिर्णयोपकारकत्वं ब्रह्मविद्योपकारकत्वमित्येवमवान्तरविषयोपकारभेदेन शास्त्रभेदवर्णने तथाविधभेदस्य प्रतिषट्कं प्रतिद्विकं प्रत्यध्यायं प्रतिपादं प्रत्यधिकरणं च सत्त्वेनाधिकरणगणस्य पादसमुदायस्य अध्यायचतुष्टयादेः द्विकषट्कादेरपि शास्त्र्यैक्यं न स्यात् ।

तथा एकैकभागाध्याय्यलसाधिकारिभेदेन शास्त्रभेदोपपादने पाठशालाभेदेन विभिन्नभागप्रवचनपरीक्षावितरणाद्यर्थमेकैकांशमात्राध्येतृविद्यार्थिभेदेन संप्रतिपन्नैक्येऽपिं शास्त्रभेदप्रसङ्गो दुर्वारस्स्यात् । अतस्तत्र तत्रा वान्तरविषयादिभेदे सत्यपि तदविरुद्धमनुगतविषयाद्यैक्यमवलम्ब्य शास्त्रैक्यवर्णनं तु प्रकृतेऽपि तुल्यमिति । एतेन फलजिज्ञास्यभेदाच्चेति यदाकरोपादानं तदपि निष्फलीकृतम् ।

### परोदाहृतवाक्यार्थानाञ्जस्यम्

यदपि चोदनाप्रवृत्तिभेदाच्चेत्युक्त्वा या हि चोदना धर्मं चोदयति सा पुरुषं नियुञ्जानैव चोदयति । ब्रह्मचोदना तु पुरुषमवबोधयत्येव केवलं, न च पुरुषावबोधे नियुज्यते इत्यनूक्तं, तत्रापि नियुञ्जानैव चोदयतीति पुनरुक्तम् । प्रमाणाधीनवाक्यार्थबोधे चोदनाया वैफल्यात् ब्रह्मचोदना तु पुरुषमवबोधयत्येवेत्यनुपपन्नम् । चोदनेति क्रियायाः प्रवर्तकं वचनमाहुरितिहि शाबरं भाषितम् ।

'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' 'तस्मिन् यदन्तस्तदुपासितव्यं' 'आत्मा वाऽरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादावुपासनात्मकेऽवबोधे पुरुषस्य नियोजनात् न च पुरुषोऽवबोधे नियुज्यतइत्यप्यनृतं वचनम् । सिद्धपरवाक्यप्रवृत्तिभेदस्तु सन्नप्यवान्तरप्रवृत्तिभेदरूपत्वात् न शास्त्रैक्यबाधक इत्युक्तप्रायम् ।

## मीमांसा-वेदाङ्गादीनामुपकारभेदवर्णनम्

यच्चैवं सत्येकवेदव्याख्यानत्वेन वेदभाष्यवेदाङ्गादीनां मीमांसयैक्यप्रसङ्गेन विद्यास्थानचतुर्दशत्वानुपपत्तिरित्युक्तं; तच्चोपकारभेदेन तद्भेदव्यवस्थापनादिति शतदूषण्यैव प्रत्युक्तम् ।

अयं भावः—न्यायविशेषव्युत्पादनद्वारनिष्पाद्यार्थनिर्णयात्मकवेदोपकारस्य मीमांसाऽसाधारणस्य पूर्वोत्तरभागयोरनुगतत्वात् तयोरैकशास्त्र्यं । वेदाङ्गाद्यधीनोपकारस्य तु अतादृशत्वात् तेषां भिन्नशास्त्रत्वमपि महर्षिभिरभिप्रेत्य चतुर्दशेति व्यवस्थापितमिति ।

एतेन पाशुपतादितन्त्रेणापि विरोधस्याल्पीयस्त्वेन सुपरिहरत्वात् मीमांसया एकत्वमापादितमपि प्रत्युक्तं; उपकारभेदात् । विद्यास्थानव्याख्यानग्रन्थानां तु मूलाविरोधे सति तत्तद्विद्यास्थानेष्वन्तर्भावो यद्यपीष्यते, तथाऽपि मूलविरुद्धानां कपिलादिस्मृतिन्यायेन बहिर्भाव एवानुमन्यते ।

## द्वैताद्वैतादिभाष्याणामेकत्वापत्तिवारणम्

एतेन द्वैताद्वैतादिभाष्याणामेकविद्यास्थानत्वापादनमपास्तम् । एकार्थे परस्परापेक्षाभावात् । भेदविशेषैकपरतया निगदव्याख्यातसूत्रस्तोमविरुद्धत्वादद्वैतभाष्यादेः विद्यास्थानप्रवेशस्यैवासिद्धेः, शास्त्रैक्यप्रसक्तेरेवासंभवाच्च ।

यत्त्वनेन न्यायेन जैमिनिबादरायणनिबन्धयोरपि विरुद्धसिद्धान्तपरयोरैकशास्त्र्यं न युज्यते । अपि च शबरस्वामिकुमारिलभट्टादयः अर्थवादाधिकरणे पुरुषार्थाधिकरणपूर्वपक्षन्यायेन उपनिषदर्थवादत्वमेव समर्थयन्तः ब्रह्ममीमांसाशास्त्रमपरमसत्कल्पमेव जैमिन्यभिमतं मन्यन्ते । अतो जैमिन्यादिमीमांसकदृष्ट्या न पूर्वोत्तरमीमांसयोरेकत्वं गोश्रृङ्गशश-

शृङ्गयोरिवेति । तन्न—जैमिनिबादरायणनिबन्धयोरर्थविरोधाभावस्य शतदूषण्यादिषु प्रदर्शितत्वात् अर्वाचीनव्याख्यातृ संमत्यभावस्याकिंचित्कर-त्वात् ब्रह्ममीमांसाशास्त्रस्यासत्कल्पत्वाभिमाने—

'दृढत्वमेतद्विषयःप्रबोधः प्रयाति वेदान्तनिषेवणेन'

इति भट्टवचनानुपपत्तेश्च ।

## शारीरकस्य पूर्वमीमांसावृत्ति—वार्तिकसंमतत्वम्

मीमांसावृत्तिकारोऽपि हि भगवानुपवर्षः आत्माऽस्तित्वप्रसक्तौ शारीरके वक्ष्याम इत्याह स्म । एतेन 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्ध इति पूर्वमीमांसासूत्रभाष्ये वृत्तिकारतयाऽभिमतानां भगवदुपवर्षाचार्याणा-मात्मविभुत्वज्ञानकर्मसमुच्चयादिवादाः श्रीभाष्यसिद्धान्तविरुद्धा इत्युक्तमपि प्रत्युक्तम् । औत्पत्तिकसूत्रे वृत्तिकृता आत्मविषये वक्ष्यत इति प्रतीक्षाविधानेन तत्र न किंचिदप्युक्तमित्यवगमात् ।

तत्रात्माऽस्तित्वादिकं भाष्यकृतैवोच्यते । अत एव सत्यमुक्तं भाष्यकृतेति शङ्करभाष्यं, न तु वृत्तिकृतेति । तत्र विभुत्वादिकं तु भाष्यकृता न वृत्तिकृन्मतत्वेनोक्तं, अपि तु स्वातन्त्र्येण । ऊर्णनाभिवत् विशिष्टपरिणाम-वादः, अङ्गाङ्गिभावेन ज्ञानकर्मसमुच्चयवादश्च श्रीभाष्यकृतामप्यविरुद्ध एव । एतद्विरुद्धो वृत्तिग्रन्थो न क्वचिदपि दृश्यते । अत इह तद्विरोधो-द्भावनं विरोधाभिमाननिबन्धनमेव । तेन वृत्तिकारोपवर्षबोधायनाभेदो-पगमेऽपि न तावदुपजीव्यविरोधः श्रीभाष्यसिद्धान्तस्य ।

## शास्त्रैक्येऽपि श्रीभाष्यकृतां बोधायनवृत्तेरेवानुसरणम्

वस्तुतो बोधायनमतमेवोपजीव्यते शास्त्रैक्यवादेऽपि श्रीभाष्य-कृद्भिरितीति स्फुटमेव तद्ग्रन्थदर्शिनाम् । अतस्तत्र भास्कराचार्योपजीवन-मिति वचनं दर्शनवैकल्यविलसितमेव । न हि संत्यज्य सन्तमसं तमर्थं कोऽपि चक्षुष्मानुपदर्शयेत् ।

यदि भास्कराचार्या अपि वृत्तिग्रन्थानुरोधेनाध्ययनविधिगृहीतस्वा-ध्यायरूपैकव्याख्येयव्याख्यानभावौचित्यप्रतिसन्धानेन वा शास्त्रैक्यमङ्गी-कुर्वन्ति; न तावता ते शास्त्रैक्यवादस्य पितरो भवितुमर्हन्ति । येन शास्त्रै-

क्यवादिनां तन्मतखण्डनं पितृहत्येति तावकं वचनमर्थवत् स्यात् । स्वोपजीव्यवृत्तिकारमतं तु श्रीभाष्यकारैर्न कुत्रापि खण्डितमित्यभ्यधाम ।

## शङ्करभाष्यतदनुयायिग्रन्थेषु वृत्तिखण्डनम्

शङ्करभाष्ये तदनुयायिग्रन्थेष्वेव हि वृत्तिकारमतखण्डनमनेकत्र दृश्यते । तत्र भाष्ये खण्डितं मतं वृत्तिकारीयमित्यनुक्तमपि ग्रन्थान्तरतस्तथा स्फुटीभवति । यथा अथशब्दार्थविवरणावसरे शङ्करशारीरकभाष्ये—नन्विह कर्मावबोधानन्तर्यं विशेष इति वृत्तिकारमतमुपक्षिप्य नेत्यादिना तत्खण्डनं क्रियते । व्यक्तं चेदं वृत्तिखण्डनमिति श्रीभाष्ये—**तदाह वृत्तिकारः वृत्तात् कर्माधिगमादनन्तरमिति** वृत्तिवाक्यानुवाददर्शनात् ।

तथा आनन्दमयाधिकरणे प्रथमतः आनन्दमयपरमात्मत्वपरतया सूत्रवृत्तिकारमतानुसारेण व्याख्यायानुपदमिदं त्विहवक्तव्यमित्यादिना तन्मतखण्डनं कृतम् । तत्र च इदं वृत्तिकारमतं दूषयति—इदं त्विति रत्नप्रभाव्याख्यानम् ।

उपनिषद्भाष्ये च शाङ्करे आनन्दमय इति कार्यात्मप्रतीतिरित्यादिवाक्यस्य आनन्दगिरिटीकायां आनन्दमयः परमात्मेति वृत्तिकारैरुक्तं, तन्निषेधेन व्याचष्टे कार्यात्मप्रतीतिरित्यादिनेत्यवतारितत्वात् वृत्तिखण्डनपरत्वं स्फुटम् ।

तथा 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादि'ति सूत्रव्याख्यानभाष्ये 'अथवा नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' इत्यस्यायमन्योऽर्थ इत्यादिना प्रदर्शितस्य वृत्तिकृदुक्तार्थस्य व्याख्यासु खण्डनं क्रियते ।

तत्र हि भामत्यामेवमुक्तं तदेवं स्वमतेन व्याख्याय प्राचां वृत्तिकृतां मतेन व्याचष्टे **अथवेति** पूर्वं प्राणस्य एकमुपासनमपरं जीवस्य, अपरं ब्रह्मण इत्युपासनात्रैविध्येन वाक्यभेदप्रसङ्गे दूषणमुक्तम् । इह तु ब्रह्मण एकस्यैवोपासात्रयविशिष्टस्य विधानात् न वाक्यभेद इत्यभिमानः प्राचां वृत्तिकृताम् । तदेतदालोचनीयं कथं न वाक्यभेद इतीत्यादि ।

कल्पतरावप्यत्र ब्रह्मानुवादेनानेकोपासनप्राणादित्रितयधर्मविशिष्टैकोपासनस्वधर्मविशिष्टजीवप्राणविशिष्टब्रह्मोपासनादिविधिविकल्पेन सर्वासंभवोपपादनात् वृत्त्युक्तोऽर्थः खण्डित एव ।

रत्नप्रभायां च स्वमतेन सूत्रं व्याख्याय वृत्तिकृन्मतेन व्याचष्टे अथवेत्यारभ्य अन्तत इयमसङ्गता व्याख्या तथा हीत्यादिना वृत्तिव्याख्यानं प्रत्याख्यातम् ।

एवं दहराधिकरणेऽपि "उत्तराच्चेदाविर्भूतस्वरूपस्त्वि'ति सूत्र भाष्ये अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्ते। अस्मदीयाश्च केचिदिति वृत्तिकारमतमनूद्य तेषां प्रतिषेधकं शारीरकमित्याह—तेषां सर्वेषा-मित्यादिना ।

एतेन तत्त्वचन्द्रिकायामुमामहेश्वरशास्त्रिणा बोधायनवृत्तिरपि यदि स्वपक्षविरोधिनी स्यात् भामत्यादिषु वा कथं न दूष्येत, 'प्राणस्तथाऽ-नुगमादित्यादिषु क्वचित् क्वचिदर्थान्तरविषय एव वृत्तिर्भाष्यादिषु दूष्यते न तु द्वैतविषय इत्युक्तमप्यपास्तम्। पारमार्थिकद्वैतदूषणस्यापि दर्शितत्वात्। तदेवमनेकत्र प्राचीनशारीरकवृत्तिकारमतं खण्डयन्तः प्रायेणान्यत्र तदुक्त-सूत्रार्थविषयवाक्यान्युदाहरन्तश्शङ्कराचार्या एव पितृहत्यया पैतृकधनजीविन इति भवदीयवचनस्य पात्रभूता भवेयुः ।

## बोधायनोपवर्षयोर्भेदाभेदयोरनैर्भर्यम्

अत्र च भगवद्बोधायनोपवर्षभेदाभेदविचारस्त्वकिंचित्करः । नापि तत्रास्मादृशामधिकारः । ऐक्याभ्युपगमेऽपि श्रीभाष्यकृन्मते न कश्चिद्विरोधः इति प्रागेवोक्तम् । मन्दमतिव्यामोहशान्तये क्वचिदन्वारुह्यवादानां व्युदस-नेऽपि न तावतोपजीव्यविरोधस्स्यात् । भेदोपगमेऽपि वा न किंचिदसाम-ञ्जस्यं, तत्त्वटीकागतवाक्येनापि नैक्यमवधार्यते । स्यान्नामेति संभावनामात्र-मेव हि गम्यते । तेन तत्रानैर्भर्यमेवाभिव्यज्यते । तस्मादुपवर्षादभिन्नो वा भवतु भिन्नो वा भगवान् बोधायनः । तदीयवृत्त्यनुसारः प्रतिज्ञातः श्रीभाष्ये । उदाहृतानि चानेकत्र प्रमाणतया तद्वाक्यानि । अतः श्रीभाष्यसमानविषय-यिण्यैव वृत्त्या बोधायनीयया भवितव्यम् ।

## शङ्करादिखण्डितस्य वृत्तिकारस्य बोधायनत्वोन्नयनम्

तादृशी च वृत्तिः, आनन्दमयाधिकरणेन्द्रप्राणाधिकरणादिषु शंकर-भाष्यतद्व्याख्यासु अनूद्य दूष्यत इति प्रागुपादर्शि । तत्प्रणेतारश्च प्राचां-

वृत्तिकृतामित्येवं भामत्यादिषु प्राचीनवृत्तिकारत्वेन निर्दिश्यन्ते । तेषां च वृत्तिकृतां तत्र नामान्तरानिर्देशात् प्राचामिति विशेषणदानस्वारस्यात् उपदर्शितद्वित्रस्थलेष्वपि श्रीभाष्यदर्शितसिद्धान्तसंवाददार्ढ्यावगमाच्च श्रीभाष्यादिषु विस्तीर्णब्रह्मसूत्रवृत्तिकृत्वेन सादरं समुद्घोषितेन भगवद्बोधायनेनैक्योन्नयने न किंचिदपि बाधकं वक्तुं शक्यम् ।

एवं चानन्दमयाधिकरणेषु शङ्करभाष्ये बोधायनवृत्तिकारमतमेव खण्डितमिति भामत्यादिव्याख्यानस्वारस्यविदां निर्मत्सराणां न तिरोहितम् ।

देशान्तरस्थवृत्तिग्रन्थादर्शनेऽपि तदनुयायिवाक्यभाष्यादिकतिपय वाक्यश्रवणादपि तन्मतमवधार्य क्वचित् खण्डनं शक्यमेव स्यात् ।

## शङ्करभाष्ये भेदखण्डनेनैव विशिष्टाद्वैतखण्डनसिद्धिः

एतेन शङ्करभाष्ये बोधायनवृत्तेरखण्डितत्वेन तदुत्तरकालीनत्वम प्रसिद्धत्वं वेति कस्यचिदुक्तमप्यपास्तम् । पूर्वमेव सत्वेप्यदर्शनादप्यखण्डनोपपत्तेः । क्वचिच्च तदीययोजनाविशेषखण्डनस्य दर्शितत्वात् अद्वैतिनां विशिष्टाद्वैते वैशिष्ट्यांशस्यैव खण्डनीयतया तस्याप्यनेकत्र भेदखण्डनेन प्रच्छन्नखण्डनात् । अन्यथा अस्मदीयाश्च केचिदिति पूर्वोपदर्शितशङ्करभाष्ये पारमार्थिकजीवपरभेदवादितया के विवक्षिताः स्युः । वक्त्रवैलक्षण्येनानेकत्र स्वोपजीव्यतया च प्रस्फुटं तन्नामनिर्देशपूर्वकं तद्वृत्तिखण्डने भयात् शङ्कराचार्यस्य न प्रवृत्तिरभूदिति वक्तुं युक्तत्वाच्च ।

## शङ्करभाष्यस्य स्वमतिविजृम्भितत्वं वार्तिकसिद्धम्

शङ्करभाष्ये चानेकत्र प्रथमतस्सूत्राणि भेदपरतया व्याख्याय पश्चादुद्बुध्य शङ्कामुत्थाप्य मुखभेदेन भेदापलापकारणस्य दर्शनात् साक्षाद्वा परम्परया वा भेदपरवृत्त्युपजीवनेनैव प्रवर्तमानत्वं मतान्तरवासनानिबन्धन बहुतरविपर्यासपर्यवसायित्वं च स्फुटमेव ह्यवगम्यते । तदेतच्छारीरकमीमांसाभाष्यवार्तिकजन्माद्यधिकरणस्थतया परोदाहृतश्लोकाभ्यामपि व्यक्तं भवति धीमताम् । ताविमौ श्लोकौ—

**इदं सूत्रं प्राचा परिकलितवृत्त्या प्रथमतः**
**स्वतन्त्रं व्याख्याय श्रुति विवृतिता मुक्तवपुषा ।**

**पवाहृत्या रीत्याऽक्षचरणमतं नेति यतिराड्**
**स्फुटं प्रत्याख्याय श्रुतिविवरणात्मेत्यकथयत् ।।**
**यतीन्द्राणां सम्राट् सरसवचनैर्वर्णकमथो**
**पुराणानां पूर्वं स्वमतिविभवेनापरमपि ।**

अत्र प्राचीनवृत्त्यनुरोधेन प्रथमयोजना । द्वितीया तु स्वातन्त्र्येण स्वमतिविभवेनेति स्फुटं प्रतीयते । आनन्दमयाद्यधिकरणेष्वप्येषैव रीति दृश्यते ।

## वार्तिकोक्तवृत्तिग्रन्थस्य बोधायनीयत्वौचित्यम्

तत्र प्रथमयोजनैव सांप्रदायिकीति ख्याप्यत इत्यवचनसिद्धम् । अत्र प्राचां, पुराणानामिति पदद्वयात् प्राचां वृत्तिकृतामित्यधिकरणान्तरे पूर्वोपदर्शितभामतिवाक्यप्रत्यभिज्ञयाऽर्थैक्यमवगम्यते, तत्र च भगवद्बोधायन-एव विवक्षित इत्युचितमुपगन्तुमित्यवोचाम ।

न च तदतिरिक्त उपवर्ष एव तत्रापि विवक्षित इति सांप्रतं, तथा-प्युपजीव्यतयाऽभिमतवृत्तिखण्डनस्यायुक्तत्वात् ।

वस्तुतस्तु शङ्करभाष्ये उपवर्षवृत्त्यनुसारस्य विशिष्याप्रतिज्ञातत्वात् क्वचिदपि प्रमाणतयाऽपि शारीरके वक्ष्याम इति पूर्वमीमांसावृत्तिवाक्यवत् शारीरकवृत्तिवाक्यस्य भगवदुपवर्षनामग्रहणपूर्वकमनुदाहरणात् वक्ष्याम इति भविष्यत्वेन निर्देशमात्रेणानुपलब्धतदीयशारीरकवृत्तिसद्भावस्य निर्णेतुम-शक्यत्वात् । श्रीभाष्यसंवादप्रदर्शनेन श्रीभाष्योपजीव्यवृत्तिकृत्वौचित्यस्य समर्थितत्वाच्च ।

यद्यपि पूर्वोक्तश्लोकविवरणे च परोदाहृते प्राचेति पदं उपवर्षादिना प्राचीनेन व्याख्यात्रा इति विवृतं तथाऽपि पुराणानामिति पदमपि उपवर्षा-दीनामिति उपवर्षवृत्तिमात्रं शङ्करभाष्यमूलमिति नोक्तम् । तत्रादिशब्देन वृत्त्यन्तरकृतोऽपि हि संगृह्यन्ते । ते च श्रीभाष्योपजीव्यवृत्तिकृत एव स्युः, ऋषिप्रायेऽनृषीणां निर्देशानौचित्यात्, तथा च क्वचिदुपवर्ष-वृत्त्यनुसारेण क्वचिच्च बोधायनवृत्त्यनुरोधेन क्वचित्तूभयविरोधेन स्वमतिविभवेनैव प्रवृत्तमिति शङ्करभाष्यस्याविर्भावरहस्यमेवानेन विवरणेन

प्रकटीकृतं भवति । तथा च बोधायनवृत्त्युपजीवनं शङ्करभाष्येऽपि संप्रतिपत्तव्यम् । अत एव श्रीभाष्यशङ्करभाष्ययोरनेकत्र विषयवाक्योदाहरणाद्यैकरूप्यमपि घटते । अन्यथा मध्वभाष्य इव विरुद्धमतग्रन्थयोः तत्प्रसक्तिरेव न स्यात् । एवं च मतद्वयभाष्योपजीव्यभूतैकवृत्तिग्रन्थसिद्धौ तस्य श्रीभाष्यादिसूक्त्यनुरोधेन बोधायनीयत्वाभ्युपगमे बाधकं न किमपीत्युक्तम् ।

### बोधायनोपवर्षशारीरकवृत्त्योरनुपलब्धौ विशेषः

यत्तु—बोधायनवृत्तिश्च संप्रति कुत्रापि नोपलभ्यत इति, तत् उपवर्षशारीरकवृत्तेरपि समानं, इयाँस्तु विशेषः बोधायनवृत्तिवाक्यानि कानिचिद्भाष्यादावुपलभ्यन्ते, उपवर्षवृत्तिवाक्यं तु न कुत्रापीति । शारीरके वक्ष्याम इति तदुक्तिमात्रेण न तच्छारीरकवृत्तिसिद्धिरिति चोक्तम् । तत्सिद्धौ 'शरीरे भावाधिकरणे भगवतोपवर्षेण अत्रैवात्माऽस्तित्वमेवं निरूपितमिति तद्वाक्यमपि भाष्यकृतोदाहृतं स्यात्, न चोदाहृतम् । प्रपञ्चहृदयादिग्रन्थेन पुरातनेन तु वृत्तिद्वयमपि पूर्वमासीदित्येव प्रतीयते । तस्य परनिबन्धनत्वेऽपि तदुक्तमसंभावितमिति न वक्तुं युक्तम् । इदानीमनुपलब्धिमात्रेण पूर्वमपि नासीदिति न परीक्षका निश्चिनुयुः । समानार्थकलघुग्रन्थलाभादशक्त्यालस्यादिनोपलब्धचरस्यापि गुरुतरग्रन्थस्य प्रचारविरहे इदानीं कालक्रमेण समुच्छेदादप्यनुपलब्ध्युपपत्तेः । अतोऽन्धपरम्परापत्तिचोद्यस्यापि नावकाशः, श्रीभाष्यकृतां तद्दर्शनस्य प्रसिद्ध्यतिशयात् ।

यच्च पृच्छ्यते श्रीभाष्यकारैः विस्तीर्णायां वृत्तौ सप्तभ्योऽधिकानि वाक्यानि कुतो नोदाहृतानीति । तत्राद्वैतग्रन्थेषु षडेव द्रमिडाचार्यवाक्यानि, अष्टावेव वाक्यकारवाक्यान्युदाहृतानीति यत् त्वयोच्यते तत् कुतः इति प्रति प्रश्न एव समाहृति र्भवितु मर्हति । किं वाक्यग्रन्थादौ तदधिकानि वाक्यानि न सन्ति ? किं वा तावतैव परमतनिरासः स्वमतस्थापनं चासीदित्यभिमानोऽद्वैतिनाम् । अस्यार्जवेन समाधाने कथिते पूर्वप्रश्नोऽपि तत एव समाहितस्स्यात् इत्येवं प्रतिबन्द्युपन्यासः ।

### बोधायनस्याद्वैतित्वनिरासः

यदपि प्रसिद्धबोधायनमहर्षेः धर्मगृह्यादिनिबन्धनेषु देवतान्तरतर्पणार्चन भस्म त्रिपुण्ड्रधारणाद्युपदेशस्य स्मृतिमुक्ताफलादितोऽवगमेन परमा-

द्वैतित्वावगमात् विशिष्टाद्वैतवृत्तिकृत्वं न भवितुमर्हति बोधायनमहर्षिद्वित्वं चा प्रामाणिकमिति ।

तन्न; भगवद्बोधायनमहर्षेरेकत्वोपगमेऽपि मुमुक्ष्वधिकारिकशारीरकविषये विशिष्टाद्वैतवृत्तिकृतोऽपि तस्य सर्वाधिकार्यनुजिघृक्षया प्रणीतेषु धर्मगृह्यादिनिबन्धनेषु तत्तदधिकारभेदेन परावरदेवतार्चनाद्युपदेशोपपत्तेः । स्मृतिरत्नाकरादिप्राचीननिबन्धनेषु बोधायनीयत्वेनोदाहृतानां देवतान्तरार्चनादिवचनानामबोधायनीयत्वे विश्वसनीयत्वाभावाच्च ।

न च तेनोर्ध्वपुण्ड्राद्यविधानादवैष्णवेनैव भाव्यमिति वाच्यम् । होमपूजादिसमये सायंप्रातस्समाहितः ऊर्द्ध्वपुण्ड्रधरो विप्रो भवेच्छुद्धो न चान्यथा' इति बोधायनवचनस्य सच्चरित्ररक्षा-स्मृतिरत्नाकरस्मृतिमुक्ताफलादौ चानेकत्रोदाहृतत्त्वात् । अत एवास्य कल्पितत्वादिकं न तावच्छङ्कितुमपि शक्यम् ।

प्राचीनानेकस्वपरमतस्थनिबन्धनोदाहृतविषये (कल्पितमदः) भ्रान्तिमूलमिदमुद्वपनीयमेतदन्यदेवावपनीयमित्येवमुच्छृङ्खलविमर्शने तुल्यन्यायेन स्वीयमतमूलतयाऽभिमतस्याप्युन्मूलनापत्तेः ।

स्मृतिरत्नाकर-स्मृतिमुक्ताफलादिनिखिलनिबन्धनोदाहृतकठाथर्वण—महोपनिषदादिश्रुतिशतसिद्धमूर्ध्वगतिहेतुमूर्ध्वपुण्ड्रं वेदविदग्रसरो भगवान् बोधायनः कथं नाम न विदध्यात् । अतस्स परमाद्वैतीतिनिर्णयो निर्मूलः ।

## यामुनाचार्यग्रन्थे बोधायननामग्रहणाभावे हेतुः

यत्पुनर्यामुनाचार्येणात्मसिद्धौ आत्मनिरूपकप्राचीनानेकप्रबन्धृनामग्रहणप्रसङ्गे भगवतो बोधायनस्याकीर्तनात् तत्काले बोधायनवृत्तिर्नैवाभूदिति प्रतीयत इति ।

तन्न; उत्तरप्रदेशैकदेशविश्रान्तवृत्तिकस्य वृत्तिग्रन्थस्य श्रीभगवद्यामुनमुनिदृष्ट्यविषयतया तदकीर्तनोपपत्तेः । एवमदर्शनमेव तदानींतनानामन्येषामपि तदकीर्तने हेतुस्संभाव्यते । प्रायेण परपक्षप्रतिक्षेपाद्यनादरेण संक्षेपेण प्रवृत्तेषु टङ्क-द्रमिडाचार्यादिप्रबन्धेषु क्वचिदनेकपक्षोपक्षेपेण तत्रायमेव सांप्रदायिकोऽर्थं इत्यस्य किंचिदस्फुटतया तन्मूलतया पूर्वाचार्यपरंपरया श्रुतस्य विप्रकृष्टदेशरक्षितस्य वृत्तिग्रन्थस्य भगवद्बोधायनीयस्य दिदृक्षया भाष्यकरणे विलम्बितवतां रङ्गमधिवसतां वर्षीयसां श्रीयामुनाचार्याणामन्तिमदशायाम-

निष्पन्नमेव सन्तं तन्मनोरथमवधार्य स्वयमेव तत्पूरणमीजानानास्तत्संमति मुपलभ्य श्रीभगवद्रामानुजाचार्यपादा अनुपदमुत्तरदेशमधिगम्य तद्वृत्तिग्रन्थ-मवलोक्य श्रीभाष्यं प्राणैषुरिति पुरातनतदीयदिव्यचरित्रग्रन्थसुप्रसिद्धम् ।

**श्रीभाष्यस्य श्रीकण्ठभाष्यमूलकत्वशङ्काव्युदासः**

एतेन श्रीकण्ठाचार्यदर्शितमेव विशिष्टाद्वैतं रामानुजादयः स्वीकुर्व-न्तीति केनचिदुक्तमप्यपास्तम् ।

भगवद्बोधायनादिम(तन्म)तानुसारेण व्याख्यास्यन्ते इति प्रतिज्ञाय तत्र तत्र तदीयवृत्तिवाक्यादिसंवादप्रदर्शनपूर्वकं भाषमाणानां न ह्यर्वाचीनो-क्तिमात्रात् श्रीकण्ठभाष्यस्य भिक्षणं प्रेक्षावतामपि श्रद्धेयं भवितुमर्हति ।

पूर्वाचार्यसुरक्षितामित्यत्र च श्रीभाष्यप्रमेयप्रदर्शकप्रबन्धृत्वेन भगवद्बोधायनादय एव खलु पूर्वाचार्याः पुरस्क्रियन्ते ।

यानेवोद्दिश्य श्रीकण्ठभाष्योपक्रमे—

**व्याससूत्रमिदं नेत्रं विदुषां ब्रह्मदर्शने ।**
**पूर्वाचार्यैः कलुषितं श्रीकण्ठेन प्रसाद्यते ॥**

इत्यत्र सूत्रकालुष्यापवादकत्वेन पूर्वाचार्यैरित्युक्तिरिति शिवार्क मणिदीपिकाया मन्ततो निगमितम् । तेन च श्रीभाष्यमूलभूतानि प्राचां वाक्यान्यधिगतवतैव श्रीकण्ठाचार्येण तत्र कलुषितांशशोधनायावापोद्वापाभ्यां स्वयमेव किंचिदंशे विपर्यस्तमिदं भाष्यं प्रणीतमित्युक्तप्रायम् । ततश्च श्रीकण्ठभाष्यस्यैव विशिष्टा-द्वैतांशे श्रीभाष्यमूलग्रन्थोपजीवित्वमङ्गीकृतमिति सिद्ध्यति ।

न चात्र मूलोपजीवने मूल्युपजीवने वा कश्चिदस्तिविशेषः, उपजीव्य-ग्रन्थविरोधस्य दुरुद्धरत्वात् अन्यस्य च मूलग्रन्थस्य तत्राकीर्तनात् ।

**श्रीकण्ठभाष्यस्य अत्यन्तनवीनत्वसाधनम्**

वस्तुतस्तु शिवार्कमणिदीपिकायां प्रथमतः श्रीभाष्ययोजनाभिरेव कलुषितत्वोपादानात् पूर्वाचार्यपदं श्रीभाष्यकृदादिपरमेवेति स्वहृदयमवशा-दुद्घाटितमेव सहृदयेभ्यः । तत्रैव प्रथमतस्तथासति 'केषां चिदाग्रहप्रवृत्तानां भाष्यादिग्रन्थवदिदमपि भाष्यं पौरोभाग्यमात्रावलम्बनं स्यात् । न च तदस्मत्कृतेर्युक्तमिति स्वशैलीख्यापनाय श्रीकण्ठेनेति स्वनामकीर्तनमिति

वचनेन श्रीभाष्यवेदार्थसंग्रहादिद्रष्टैव श्रीकण्ठपदेन व्यपदिष्ट इत्यभिव्यज्यते। श्रीकण्ठभाष्यकृतोऽतिनवीनत्वेन श्रीभाष्यमूलदर्शनायोग्यत्वात्। न च यद्यप्येषां प्राक्तनस्य श्रीमच्छ्रीकण्ठयोगिनः इति सूत्रार्थचन्द्रिकोक्तं शङ्कराचार्यादिभ्योऽप्यस्य प्राक्तनत्वमुपपन्नं, शङ्करभास्कररामानुजभाष्यादिषु क्वचिदपि परमतनिरसनावसरे तत्तदभिमतात्यन्तविरुद्ध श्रीकण्ठोक्तिलेशस्यापि स्पर्शादर्शनेन तस्यार्वाचीनत्वप्रसिद्धेः दुरपह्नवत्वात्।

न च प्राचां वृत्तिमपि निश्शङ्कमेव खण्डयन् शङ्कराचार्यः श्री कण्ठार्थं विरुद्धं भाषमाणे सत्यपि स परं प्राक्तन इत्यत्राभिमेन इति वक्तुं शक्यं, नापि शैवेऽभिनिविष्ट इति।

न वा भास्कराचार्यः प्राक्तनपरिवादेऽतिभीत इतिः येन पुनश्शङ्कर भाष्यनिरसनायैव हि स्वभाष्यमवतारितं, सूत्राभिप्रायसंवृत्या स्वाभिप्रायनिवेशनात्। "व्याख्यातं यैरिदं सूत्रं व्याख्येयं तन्निवृत्तये" इति।

श्रीकण्ठभाष्ये शाङ्करशास्त्रयोनित्व प्रथमवर्णकस्य केचिदाहुरित्यनुवादादप्यस्य शङ्कराचार्यादर्वाचीनत्वं व्यक्तम्। एवमन्यत्रापि शाङ्करयोजनानुवादोऽस्ति।

न च तथाऽपि 'अत एव च तद्ब्रह्म' इति सूत्रमन्ये पठन्तोति भास्करभाष्यवचनमेवास्य तत्सूत्रपाठक श्रीकण्ठभाष्यानन्तरकालीनत्वं गमयितुमलमिति युज्यते। तदानीमपि श्रीभाष्यैककण्ठद्रमिडभाष्याद्यनेकसंग्रहविस्तारसूत्रव्याख्यानसंप्रदायसद्भावावगमेनास्यान्यथासिद्धत्वात्।

### वेदार्थसङ्ग्रहादिनिरस्तशैवमतानां श्रीकण्ठमताद्विशेषः

न चैवमपि श्रीभाष्यपूर्वभावित्वमस्याव्याहतमेव, तत्समानकर्तृक वेदार्थसंग्रह तद्व्याख्यानादिषु शैवमतनिरसनदर्शनादिति वाच्यम्। तत्र निरस्तेषु शैवमतेषु श्रीकण्ठमतस्यान्तर्भावायोगात् निमित्तोपादान-मुक्तप्राप्य भेदवाद्यवैदिकशैवमतभेदनिरासस्यैव तत्र दर्शनात्। दर्शितं चेदं तात्पर्यदीपिकायां प्रकृतिरुपादानं रुद्रो निमित्तं; नारायणःउपादानं रुद्रो निमित्तं; कारणं मुक्तिदं मुक्तप्राप्यमन्यदिति अवैदिकप्रतिपत्तेः पर्वत्रयमिति।

न चात्र मध्यमं श्रीकण्ठमतमेवेति वाच्यम्। श्रीकण्ठाचार्येण विष्णुशिवयोस्स्वरूपभेदानभ्युपगमात् तथा चोक्तमीक्षितिकर्माधिकरणान्ते—

विष्णुशिवयोः उपादाननिमित्तयोरवस्थाभेदमन्तरेण स्वरूपभेदानभ्युपगमादिति, प्रकृत्यधिकरणसिद्धान्ते च जगतो निमित्तमुपादानं च ब्रह्मैवेति । न च निमित्तोपादानैक्याभ्युपगमपक्षे तदैक्यबोधकवेदसूत्रविरोधेन वेदबाह्यत्वप्रसङ्गश्शक्य उपपादयितुम् । तथैव हि दूष्यन्ते वेदार्थसंग्रहे निमित्तोपादनयोस्तु भेदं वदन्तो वेदबाह्या एव स्युरित्यादिना । अतः श्रीकण्ठभाष्यस्थमन्यत् वेदार्थसङ्ग्रहादिनिरस्तमन्यत्; तथैव व्योमातीतवादोऽपीति, न श्रीकण्ठभाष्यस्य श्रीभाष्यात्पूर्वभावित्वगमकं किंचिदपि, किं तु तत् अत्यन्तनवीनमेवेत्यस्यैव गमकं पूर्वमुक्तम् । अत एव शैवमतभेदान् संगृह्णताऽपि विद्यारण्येन न संगृहीतमेतत् । मध्वभाष्ये प्रत्यधिकरणं विष्णुरिति निर्देशवत् प्रत्यधिकरणमत्र शिव ईश्वर इत्येवं प्रतिनिर्देशात् तदनन्तरभावित्वमुन्नीयते । पूर्वाचार्यैः कलुषितमित्यत्र मध्वपरतयाऽपीति व्याख्यातमत्रोत्तम्भकं भवति । एवं स्थितेऽपि शैवस्तु रामानुजमतस्यैव चोर इति मध्यस्थपरीक्षकसार्थरूढमूलविश्वविश्वसनीयव्यवहारप्रचयमसहमानेन शैवाभिनिवेशवता दीक्षितेनैव रामानुजमतसारग्राहिणाऽत्र पामरप्रतारणाय मूलव्याख्योभयविधआनन्दलहर्यादिग्रन्थमुखेनापि बहुधा स्ववचनव्याहतो विपर्यासः प्रकाशितः । येनाधुनाऽऽप्यापातग्राहिणो व्यामुह्यन्ति ।

मनीषिणस्तु तद्ग्रन्थशैलीविमर्शनात् तदभिनिवेशस्वारस्यं जानन्त्येव अत एवात्रापि व्याख्यात्रैव मूलमादौ परिकल्प्य श्रीकण्ठशिरसि निक्षिप्तमित्यभियुक्तानामभ्यूहः । श्रीकण्ठेनेति पदस्यावयवार्थपरतया व्याख्यानादप्ययमूह उत्तभ्यते । रूढ्यर्थाभावादेव चात्र सर्वेऽपि प्रबन्धचरित्रविमर्शकाः मुह्यन्तीत्यलं प्रसक्तानुप्रसक्तेन । श्रीभाष्योदाहृतेन संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति बोधायनवृत्तिवाक्येन च धर्मब्रह्मविचारयोरेकग्रन्थत्वमवगम्यते ।

### व्याख्येयभेद-पौनरुक्त्य-विरोधादिनिबन्धनशास्त्रभेदाक्षेपः

यत्तु धर्मब्रह्मविचारयोर्न तावदेकव्याख्येयव्याख्यानत्वादेकग्रन्थत्वं, धर्मब्रह्मविचारव्याख्येयवेदवाक्यानां भिन्नत्वेनैकत्वाभावात् । न च तेषां प्रत्येकं भिन्नत्वेऽपि एकविधिप्रयुक्ताध्ययनविषयत्वेन वेदत्वेन वा एकत्वं विवक्षितमिति वाच्यम् । स्वाध्यायोऽध्येतव्य इति विधिवाक्ये स्वशब्दप्रयोगेण

संप्रदायागतशाखाविशेषमात्रविषयत्वावगमेन मीमांस्यमानशाखान्तराध्ययनस्य तदप्रयुक्तत्वात्—ब्रह्मविचारविषयाणामीशाद्युपनिषदामध्ययनस्य उपनिषदमावर्तयेदिति विध्यन्तरेणैव प्रयुक्तत्वाच्च ।

वेदत्वेनैकत्वविवक्षायां सर्वेषामपि वेदभाष्याणामेकग्रन्थत्वापत्तेः । कर्म-ब्रह्मविषयाणामेकविषयत्वेनैकत्वं तु बाधितमेवेति पूर्वमुक्तम् । एवं कर्मब्रह्मविचारयोरैक्ये उभयत्रापशूद्राधिकरणं, गुणोपसंहारसूत्राणि, अत एव च नित्यत्वं इति वेदनित्यत्वस्थापनं चेत्येतानि वितथानि स्युः ।

तथा पूर्वत्र वेदापौरुषेयत्ववचनं परत्र शास्त्रयोनित्वादिति वेदपौरुषेयत्वसाधनं, पूर्वत्र देवतानामनधिकारस्थापनं उत्तरत्राधिकार साधनं, पूर्वत्र कर्मण एव फलसाधनत्वसमर्थनं, परत्र तन्निरासेन ब्रह्मण एव तत्, पूर्वत्र वेदान्तानामर्थवादत्वाभ्युपगमः, उत्तरत्र तन्निरासः, पूर्वत्र संन्यासाधर्मत्वं, अपरत्र तद्धर्मत्वस्थापनं, पूर्वत्र संयोगपृथक्त्वन्यायस्य गोदोहनादि द्रव्यमात्रविषयकत्वं, उत्तरत्र विद्योपकारककर्मविषयकत्वोपपादनमित्यादिकं परस्परविरुद्धमैकशास्त्र्यं विहन्ति सर्वमिदं कल्पतरुपरिमल-सिद्धान्तसिद्धाञ्जनादौ व्यक्तमिति ।

## मीमांसयोः व्याख्येयैक्यसमर्थनम्

तन्न; स्वाध्यायोऽध्येतव्य इत्यत्र स्वशब्दस्य तद्व्यक्तिपरत्वेन तत्पुरुषस्य तत्पूर्वपुरुषपरंपरागतशाखेतरशाखाध्ययनस्य विधानासंभवेऽपि व्यक्तिविशेषमात्रपरत्वे नियामकाभावेन तत्तत्पूर्वपुरुषपरंपरागतशाखात्वेन सर्वासामेव शाखानां पुरुषभेदेनाध्ययनविधानोपगमे विरोधाभावेन सर्वेषां वेदानां तदन्तर्गतोपनिषदां च सर्वासामेकविधिप्रयुक्ताध्ययननिबन्धनस्यैकत्वस्य विवक्षायां बाधकाभावात्

उपनिषदमावर्तयेदिति विध्यन्तरस्य सत्त्वेऽपि तेनावृत्तिमात्रविधानेऽपि आचार्योच्चारणानूच्चारणरूपस्य अध्ययनस्यानभिधानेन तत्र स्वाध्यायविधेरेव प्रयोजकत्वोपगमावश्यंभावात् । तदुक्तमद्वैतसिद्धौ-आवृत्तिगुणयोगस्यैव विधेयत्वात् उपनिषदमावर्तयेदित्यत्रैवेति ।

निष्कारणष्षडङ्गो वेदो ध्येय इत्यादिस्मृतेरध्ययनानुवादेन नित्यत्वादिविधाने तात्पर्यात् नाङ्गानां वेदेनैक्यापत्तिः ।

## मीमांसयोरनेकवेदभाष्यव्यावृत्तमेकग्रन्थत्वम्

वेदभाष्याणामेकवेदव्याख्यानत्वेऽपि कृत्स्नवेदार्थावगमे पूर्वोत्तर-मीमांसयोरिव परस्परसाकांक्षताया अभावेन ग्रन्थैक्यस्याप्रसक्तेः वेदार्थत्वे-नालौकिकश्रेयस्साधनत्वादिना वाऽनुगतैकविषयकत्वस्याप्येकत्वप्रयोजकस्या-बाधितस्यैव प्राचीनैरुपदर्शितत्वाच्च । एकव्याख्येयव्याख्यानत्वेन कर्मब्रह्म-विचारयोरेकत्वसिद्धेर्निष्प्रत्यूहत्वात् । अङ्गानां तूपकारभेदेन भेद इत्युक्त-मेव ।

## ग्रन्थैक्ये क्वाचित्कपुनरुक्तिसार्थक्यप्रकारः

न चैवं सत्यपशूद्राधिकरणादिपुनरुक्त्या आनर्थक्यम् । अधिका-शङ्कापरिहारादिना तत्सार्थक्यात् । न च तदसंभवः, अनग्निविद्यशूद्रादेरग्नि विद्यासाध्यकर्मस्वधिकारासंभवेऽपि मनोवृत्तिमात्ररूपोपासनाधिकारे न विरोध इत्याधिकाशङ्कायाः स्वाध्यायाधीनज्ञानरूपहेतोरसंभवेन नास्योपास-नात्मकविद्याधिकार इति तत्परिहारस्य च श्रीभाष्यादिषु दर्शितत्वात् ।

## शङ्करभाष्यादावपि तत्र तत्र पूर्वतन्त्रेण पौनरुक्त्यपरिहारदर्शनम्

एवमेव हि शङ्करभाष्यादिष्वपि 'यच्च कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वं, न तद्विद्यास्वधिकारस्यापवादकं लिङ्गं, न ह्याहवनीयादि-रहितेन विद्या वेदितुं न शक्यत इत्यादिना 'अवैद्यत्वादभावः कर्मणी'त्यधि-कारलक्षणसूत्रेण गतार्थतामाशङ्क्य परिहारः प्रदर्शितः ।

गुणोपसंहारसूत्राणि च शाखान्तराधिकरणाक्षेपेण अधिकाशङ्कया वा प्रवृत्तानीति श्रीभाष्यश्रुतप्रकाशिकादिषु स्फुटम् ।

कल्पतरावपि शाखान्तराधिकरणेनास्यापौनरुक्त्यं सूत्रभाष्याभ्यामु-पपादयति । युक्तमितीति भाष्यावतरणभामतीवाक्यावतारिकयाऽपि स्पष्ट-मेतत् ।

मन्त्रकृतो वृणीते इति मन्त्रकरणोक्त्या वेदानित्यत्वमित्यधिका-शङ्कायाः परिहारपरतया 'अत एव च नित्यत्वं' इति सूत्रं श्रीभाष्यादिषु सार्थकीकृतम् । तदिदं शङ्करभाष्यादिष्वपि स्वतन्त्रस्य कर्तुरस्मरणादिभिः स्थित इत्यादिना प्राच्यामेव मीमांसायां वेदस्य नित्यत्वं सिद्धं, तत्किं पुनस्साध्यत इत्याशङ्क्य तदेव वेदनित्यत्वं स्थितं दृढयतीति व्याख्यातम् ।

इत्थं शङ्करभाष्यादिववाक्यैरेव पौनरुक्त्यशङ्का—तत्परिहारपरैः भिन्नग्रन्थत्वे पौनरुक्त्यशङ्कानुपपत्त्या स्वाभिप्रेततया ज्ञापितस्य ग्रन्थैक्यस्याङ्गीकारे श्रीभाष्यकृतां मते न कस्यापि सूत्रस्य वैतथ्यप्रसक्तिः।

नापि, परस्परविरोधस्य; तथा हि शास्त्रयोनित्वादित्यत्र बहुव्रीहि समास एव श्रीभाष्यकारैराद्रियते—न तु तत्पुरुषः। अतो न तन्मते अपौरुषेयत्वविरुद्धपौरुषेयत्ववचनावकाशः।

तत्पुरुषोपगमेऽपि स्वतन्त्रकर्तृकत्वरूपपौरुषेयत्वस्यापि विवक्षणात् न विरोधगन्धः।

तथा चोक्तं-कल्पतरौ-शास्त्रयोनित्वाविरोधायाह स्वतन्त्रस्येति। स्वतन्त्रस्य कर्तुरस्मरणादिति भाष्यस्थस्वतन्त्रपदप्रयोजनप्रदर्शनपरमिदम्।

## देवतायाः स्वोद्देश्यककर्मण्येवानधिकारः

कर्मविचारे स्वोद्देश्यककर्मसु स्वत्वत्यागासंभवात् देवताया अनधिकार उक्तः, तेनात्र ब्रह्मोपसनाधिकारवचने को विरोधः।

तदुक्तं कल्पतरुपरिमलेऽपि जैमिनिना तिर्यंगधिकरणे 'न देवता देवतान्तराभावादिति सूत्रेण देवताः कर्मसु नाधिक्रियन्ते, इन्द्रादीनां हविस्त्यागोद्देशस्थ इन्द्रान्तरादेरभावात् स्वात्मने संकल्प्यमानस्य द्रव्यस्य स्वत्व त्यागासंभवेन यागाद्यनिवृत्तेः इत्येवमुपपादयता देवताभ्युपगम एव स्पष्टीकृत इति।

विद्याङ्गकर्मानुष्ठानं तु परमात्मोद्देशेन चतुर्मुखाद्यश्वमेधाद्यनुष्ठानवत् देवानामपि संभवत्येव।

प्रसिद्धं हि भगवतस्सर्वकर्मसमाराध्यत्वं तथा च भगवता गीयते—'अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति।

## जैमिनेः कर्मणः फलवचने हार्दाभिप्रायः

एवं भगवतो जैमिनेः कर्मणः फलोपन्यासश्च कर्मश्रद्धासंवर्धनायेत्युक्तमागमप्रामाण्ये। तेन जैमिनेरपि स्ववाक्येनापाततः प्रतीयमानेऽर्थे न तात्पर्यमित्यवगम्यते।

युक्तं चैतत् ब्रह्म-तद्गुण-तदुपासन-तत्फलाद्यभ्युपगन्तृतया शारीरकादिसंप्रतिपन्नस्य वेदविदग्रेसरस्य भगवतो जैमिनेः ब्रह्मणः फलप्रदत्वे विवादायोगात् ।

तर्हि 'धर्मं जैमिनिरत एवेत्यस्य कोऽभिप्राय इति चेत् स इत्थं प्रपञ्चितस्सेश्वरमीमांसायां-क्षणिकक्रियायाः कालान्तरभाविस्वर्गसाधनत्वमनुपपन्नमिति वदतो नास्तिकस्य गूढाभिप्रायेण जैमिनिना मुखमपिहितं न तावत्कर्मणामव्यवधानेन फलप्रदत्वनियमः, लोके मर्दनादिषु कृष्यादिषु च साक्षाद्वा परम्परया वा स्वयमेव फलप्रदत्वदर्शनात्, एवं च वेदेऽपि यागादीनां साक्षात्फलसाधनत्वाभावेऽपि यत्किंचिदपूर्वं द्वारीकृत्य परंपरया फलसाधनत्वमुपपद्यते । तथा सति यजेत स्वर्गकाम इत्यादिशास्त्रं स्वर्गकामस्य कर्तव्यतया यागाद्यभिदधत् तदन्यथाऽनुपपत्त्याऽपूर्वद्वारेण फलसाधनत्वमवगमयति । तच्चापूर्वमतोन्द्रियत्वान्नाध्यक्षयोग्यमतो न शास्त्रप्रामाण्यविरोध इति ।

तदेतदनूद्य तस्यापि हृद्गतं स्वमतमवसरे दर्शयन् भगवान् बादरायणः तदुक्तमपूर्वं देवतानुग्रहरूपं प्राचीकशत् अतो न विरोध इति । ब्रह्मणो वैषम्यनैर्घृण्यपरिजिहीर्षया फलवैषम्यांशे कर्मणः प्राधान्याभिप्रायेण कर्मणः फलप्रदत्ववचनमित्यन्ये । प्रदर्शितं च तत्र ।

### जैमिनेरप्यनेकत्र ब्रह्मतद्गुणाभ्युपगमः

दर्शयति च भगवान् बादरायणः जैमिनेरपि ब्रह्म-तद्गुणाभ्युपगमं, 'साक्षादप्यविरोधं जैमिनिः' 'संपत्तेरिति जैमिनिस्तथा हि दर्शयति' 'मध्वादिष्वसंभवादनधिकारं जैमिनिः' 'अन्यार्थं तु जैमिनिः' 'प्रश्नव्याख्यानाभ्यामपि चैवमेके' 'परं जैमिनिर्मुख्यत्वात्' 'ब्राह्मेण जैमिनिरुपन्यासादिभ्यः' इत्यादिष्विति ।

'धर्मं जैमिनिरत एव' शेषत्वात्पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः इत्यादिषु क्वाचित्कविसंवादानुवादस्तु अन्यपरोक्तिमूलकमन्दमतिमोहशान्त्यर्थम् । अथवा परकलितसौधादिशेषपूरणवत् विरुद्धैकदेशोद्धारेण संहितत्वपक्षेऽपि नार्थैक्यविरोधः इत्युक्तम् ।

अन्यपरत्वं चात्राश्रुतवेदान्तानामिन्द्रादिदेवतालयानुसंधाननिबन्धन कर्मवैफल्यशङ्कानिवृत्त्यादिपरतया वेदितव्यम् ।

शतदूषण्यामपि 'परामर्शं जैमिनिरचोदनाच्च पदवती'त्यादिषु कतिपयसूत्रेषु जैमिनिमतस्य पूर्वपक्षत्वेनोपपादनात् विरोधमाशङ्क्य अत्यल्पतराप्रधानार्थविरोधस्य प्रधानभेदकत्वाभावात् । अत एव हि शास्त्रेषु वार्तिकावतारः । किं पूर्वकृतप्रासादखण्डनिषमांशापनयनेन शेषनिर्माणे तदैक्यं नास्ति ? अतः प्रतिसंस्कारेणात्रापि संधानम् ।

यद्वा वैभवोक्तेषु तत्त्वभ्रमो मन्दधियां मा भूदिति तदनुवादप्रतिक्षेपौ इति समाहितम् ।

अनेन वैभवोक्तत्वमत्र सकामानां गृहस्थधर्मवैमुख्यनिवृत्त्यादि तात्पर्येणोक्तत्वं, न तु यथाश्रुतार्थतात्पर्येण । आश्रमविशेषानुपगमे 'तद्भूतस्य तु नातद्भाव' इनि ततः प्रच्युतिप्रतिषेधानुपपत्तेः । वैभवोक्तिष्विति वाक्येन शतदूषण्यपि तत्त्वविशेषे जैमिनेः भ्रमं च स्वीकरोतीति लिखन्नाधुनिकः सर्वथा स्फुटमान्ध्यमेव स्वीयमाविष्करोतीत्यास्तामेतत्, एतेन संन्यासादिविषयविवादो न शास्त्रैक्यवादपरिपन्थीति स्फुटीकृतम् ।

## क्रियाया अपि पूर्वतन्त्रे विनियोगान्तरप्रदर्शनम्

कर्मविचारे संयोगपृथक्त्वन्यायस्य गोदोहनविषयकत्ववचनं न केनापि मीमांसकेनानुमन्येत, गोदोहनस्य विनियोगभेदादर्शनात्, अत एव कस्मिँश्चिदपि ग्रन्थे तदनुपादानाच्च ।

यद्यपि दध्यादिद्रव्योदाहारणं तदधिकरणभाष्यादिषु दृश्यते, तथापि तत्रानुक्तिमात्रात् क्रियाविषयकत्वव्यवच्छेदो न परिच्छेत्तुं शक्यते, न्यायस्य संकोचकाभावेन क्रियायामपि प्रवृत्तिसंभवात्, अत एव यावज्जीवाधिकरणे अग्निहोत्रादेः क्रियात्मकस्यैव जीवननिमित्तत्वानुरोधेन 'यावज्जीवमग्निहोत्रं जुहोतीत्यादौ पापक्षयार्थं विनियोगान्तरमेवेति सिद्धान्तितम् । तथा सर्वेभ्यो ज्योतिष्टोम इत्यादौ ज्योतिष्टोमादेः क्रियात्मकस्यैव विनियोगपृथक्त्वन्यायेन सर्वफलार्थत्वमुक्तं चतुर्थे । अतस्तमेव विनियोगपृथक्त्वन्यायमवलम्ब्य उत्तरत्र विनियोगान्तरविधिप्रदर्शनेन मुमुक्षुकर्मणां विद्योपकारकत्वप्रतिष्ठापनेऽपि न कश्चिद्विरोधः । न हि पूर्वत्रानुक्तस्य कस्यचिदुत्तरत्रोक्तिमात्रेण पर-

स्परविरोधस्स्यात् । अन्यथा पूर्वषट्कानुक्तस्यातिदेशस्योत्तरषट्के वचनात् तयोरपि मिथो विरोधेन प्रबन्धैक्यं न स्यात् । क्वचिद्विरोधेऽपि विषय-भेदात् परिहारो वक्तव्यः । अन्यथा अर्थवादाधिकरणे स्वार्थतात्पर्यविधुर-त्वेनार्थवादव्यवस्थापनेन, रात्रिसत्राधिकरणे आर्थवादिकफलोपादानवचन-स्यापि विरुद्धत्वापत्त्या तदधिकरणयोरपि भिन्नशास्त्रग्रन्थत्वप्रसङ्गः ।

एतेन ब्रह्मविचारे सिद्धपरवाक्यानां स्वार्थपरत्वसमर्थननिबन्धन-शास्त्रैक्यविरोधाभिधानमपि समाहितम् । विषयभेदेन विरोधपरिहारात् । अप्राप्तांशबोधनादेव हि शास्त्रमर्थवत्तरं स्यात्, न तूक्तस्यैव पुनर्वचनात् ।

अत एव वस्तुतस्तु कर्मब्रह्ममीमांसयोः न स्वल्पतरो विरोधः, किं तु महत्तरो विरोधस्तमःप्रकाशयोरिवेत्यारभ्य उत्तरमीमांसायामभिन्न-निमित्तोपादानब्रह्मवादः, अचेतनकारणत्वपर्युदासः, उपास्यब्रह्मसत्यत्ववादः, ईश्वरप्रसादपरिग्रहः, आकाशाद्यनित्यत्वादिसिद्धान्तः, जीवेश्वरमुक्त्यादि-विचारः, श्रुतिलिङ्गादिवैरूप्याङ्गीकारः, इत्येवं पूर्वमीमांसकसिद्धान्तविरुद्ध-संख्यानसंभ्रमोऽपि महत्तरभ्रमविजृम्भितः ।

## पूर्वतन्त्रे ब्रह्मकारणत्वाप्रतिषेधः

पूर्वमीमांसायां जैमिनिना अभिन्ननिमित्तोपादानवादस्य क्वचिदप्य-प्रतिषेधात् 'अन्यार्थं तु जैमिनि'रित्यादावुत्तरमीमांसासूत्रे तदभिमतेरेव सूचनात् । अर्वाचीनमीमांसकासंमतेश्चाकिंचित्करत्वात् । उक्तं हि अर्वा-चीनव्याख्यातृजल्पितानां तु अनादरणीयत्वादिति ।

## अपूर्वकारणत्वस्य ब्रह्मकारणत्व एव पर्यवसानम्

न हि शारीरकप्रतिक्षिप्तमानुमानिकं कारणकत्वं क्वचित् जैमिनिना ऽनुमन्यते, येन न विलक्षणत्वाद्यधिकरणविरुद्धवादित्वमस्य शङ्क्येत । अचेतनापूर्वकारणवादस्तु प्रपञ्चे संचारितोऽपि निगूढतात्पर्यपरामर्शे तदाचा-र्यदर्शितदिशा देवताप्रसादपर्यवसायी सन् अन्ततः परदेवताकारणता मुपादायैव विश्राम्यतीत्युक्तप्रायम् ।

असत्यत्वं तु ब्रह्मणः कर्मविचारे क्वचिदपि जैमिनिर्जगाद । मुक्तिसाधनोपासनप्रधानत्वेऽपि वाक्यस्य यथा चोपास्यब्रह्मसत्यत्वेऽपि वाक्य-

तात्पर्यं तथोपपादितं श्रीभाष्यादिषु। क्वचिदर्वाचीनमीमांसकवादानादरस्तु समीचीने गत्यन्तरे संभवत्यन्वारुह्यवादानौचित्यप्रतिसंधानेन, नत्वसत्यत्वावश्यंभावभयेन।

"परं जैमिनिरिति शारीरकसूत्रे तु मुख्यत्वोक्त्या परमिति निर्देशेन च ब्रह्मसत्यत्वमेव जैमिनिसंमतमिति स्फुटम्।

## आकाशाद्यनित्यत्वेऽपि वाचकशब्दप्रवाहनित्यत्वोपपत्तिः

आकाशनित्यत्वादिविषये जैमिनिना न किंचिदुक्तम्। न च शब्दनित्यत्वाधिकरणे शब्दनित्यत्वोक्त्या आकाशनित्यत्वमप्युक्तप्रायमिति वाच्यम्। तदधिकरणस्य वैदिकवाचकशब्दप्रवाहनित्यत्वपरत्वेन सेश्वरमीमांसायां व्याख्यातत्वेन तस्य चाकाशादिलयोपगमेऽपि ईश्वरबुद्धिस्थाकारपूर्वसजातीयपुनस्सृष्ट्याऽप्युपपत्तेराकाशनित्यत्वगमकत्वाभावात्। जीवेश्वरमुक्त्यादेः पूर्वत्र प्रसक्त्यभावादनुक्तावपि उत्तरत्र परं जैमिनिरित्यादौ तत्संमतत्वं स्फुटीकृतम्। "कैश्चिन्मुक्तानामपी"ति प्रत्यक्षसूत्रवार्तिके मुक्तप्रस्तावोऽपि।

## विरोधाविरोधयोरुक्तार्थसंग्रहः

श्रुतिलिङ्गादिकं च पूर्वमीमांसायामपि नैकरूपमभिहितं, किं तु कारकश्रुतिः, समानाभिधानश्रुतिः, समानपदश्रुतिः, अर्थसामर्थ्यं, शब्दसामर्थ्यमित्येव बहुधैव व्यवहृतमस्ति। तत्र केचित् निरपेक्षो रवः श्रुतिः, सामर्थ्यं लिङ्गमिति सर्वसाधारणं लक्षणमाहुः। प्रायशो विनियोगे कारकश्रुतेरुपयोगः। वस्तुतत्त्वनिर्णये तु पदश्रुतेः। पूर्वत्र क्रियाप्रधानत्वात् कारकश्रुतेः बहुलमुपादानमस्ति। उत्तरत्र तु सिद्धप्रधाने पदश्रुतेरिति तावन्मात्रेण तयोर्विरोधस्समुद्भावयितुं न शक्य एव। अनयैव दिशा कल्पतरुपरिमल सिद्धान्तसिद्धाञ्जनादिदर्शिता अन्येऽपि विरोधाभासाश्च निरस्ता वेदितव्याः। अन्यथा कारणत्वस्य क्वचित् ज्ञेयब्रह्मलक्षणत्वं, क्वचित् ईश्वरलक्षणत्वमित्यादिविरुद्धवचनात् शङ्करशारीरकभाष्यस्याप्येकग्रन्थत्वानुपपत्तेरवार्यत्वात्।

द्वैताद्वैतनिरीश्वरत्वसेश्वरत्वादिप्रतिपादननिबन्धनविरोधशङ्कास्तु शत-दूषण्यामेव परिहृताः ।

पूर्वोत्तरमीमांसयोः प्रायेण विरोध एव नास्ति । क्वचिदापाततः विरोधप्रत्ययेऽप्यविरुद्धं शिष्याचार्ययोस्तात्पर्यमन्वेषणीयं, तथाचान्विष्य प्रदर्शितं । क्वचित् स्फुटतराचार्यबादरायणवचनानुरोधेन शिष्यस्य जैमिने र्निगूढं तात्पर्यं, क्वचिदुत्सर्गापवादतोऽपि विरोधश्शमयितव्यः ।

क्वचिदनयोरैककण्ठ्यं दुर्घटमित्यभिनिवेशेऽपि पूर्वकृतप्रासादखण्ड विषमांशापनयनेन शेषनिर्माणवत् पूर्वमीमांसायामनभिमतांशं निरस्य तया सहैकग्रन्थतया शारीरकप्रणयनोपगमे न बाधकं किंचिदपि वक्तुं शक्यम् ।

एतेन यदि जैमिनिमतनिरसनेनैव ब्रह्ममीमांसा तर्हि तदीयमीमांसया कथमैक्यमित्युक्तमपास्तम् । तथोक्तं-तत्त्वटीकायां—

**"ब्रह्मसंवाददार्ढ्येन प्रधानार्थाविरोधतः ।**
**अप्रधानविरोधस्तु तात्पर्यादपनोद्यते ॥**
**परिकल्पित सूत्रार्थ विरुद्धांशव्यपोहतः ।**
**शेषपूरणवद्वाऽत्र संहितत्वोक्तिसंभवः" ॥ इति ।**

उक्तं च कल्पतरुपरिमलेऽपि "परस्परविरुद्धमताभिमान्यनेक कविकृतरामायणादिवदेकप्रबन्धत्वोपपत्ते"रिति ।

अनेन परिमलेन विरोधाभासानुद्भाव्य शास्त्रैक्यमाक्षिपतां मुखम-पिहितम् । वस्तुतस्त्वविरुद्धमेव जैमिनीयेन बादरायणीयमिति निष्कण्टकोऽयं घण्टापथः ।

## विषयभेदाच्छास्त्रभेदशङ्का-तन्निरासश्च

यत्तु—विषयभेदोऽपि कर्मब्रह्मविचारयोरेकतां विरुणद्धि । अथातो धर्मजिज्ञासेति धर्मपदात् साध्यं कर्म जिज्ञासाविषयः प्रतीयते, ब्रह्मजिज्ञासेति सूत्रे तु सिद्धं ब्रह्म ।

न च धर्मजिज्ञासासूत्रे धर्मशब्दस्सिद्धसाध्यसाधारणालौकिकश्रेय-स्साधनैकशक्तिकः 'अन्यत्र धर्मादिति श्रुतौ ब्रह्मणो धर्मान्यत्वश्रवणात्

बादरायणेनैव' धर्मं जैमिनिरत एवेति ब्रह्मप्रतिद्वन्दितया धर्मशब्दप्रयोगात् । आपस्तम्बेनापि यत्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्म इति क्रियायामेव धर्मशब्दप्रयोगात् 'चोदनालक्षणोऽर्थो धर्मः' इति जैमिनिना च धर्मं लक्षयता क्रियाया एव लक्षणाभिधानात्; क्वचित् 'कृष्णं धर्मं सनातनमित्यस्य धर्माराध्यत्वादिना स्तुतितयाऽप्युपपत्तेश्चालौकिकश्रेयस्साधनक्रियामात्र एव धर्मपदशक्तेः सिद्धान्तसिद्धाञ्जनादौ सिद्धान्तितत्वेन तन्त्रेण उभयाभिधानासंभवात् वृत्तिद्वयपरिग्रहस्य सकृदुच्चरित इति व्युत्पत्तिविरुद्धत्वात्, आवृत्तिकल्पने च तस्यैव च वाक्यदोषत्वात् आवृत्तेनापि धर्मपदेन लक्षणसूत्रसमभिव्याहृतेन क्रियामात्रस्यैव बोधयितुं शक्यत्वात् ब्रह्मजिज्ञासेति सूत्रवैयर्थ्यापाताच्च विषयभेदो दुस्त्यज इति ।

## धर्मशब्दस्य क्रियामात्रपरत्वेऽपि भागद्वयसाधारण्यम्

तन्न; अवान्तरविषयादिभेदेऽपि अनुगतरूपेण विषयाद्यैक्यस्य दर्शितत्वात् । धर्मशब्दस्य चोदनालक्षणश्रेयस्करभावार्थमात्रवाचित्वोपगमेऽपि उत्तरमीमांसावसेयब्रह्मोपासनस्यापि तेन संग्रहसंभवात् विषयैक्यं सुवचमेव ।

तज्जिज्ञासासामर्थ्यादेव तदनुबन्धिसाध्याराध्यस्वरूपाधिकारादिजिज्ञासासिद्धिः यथा पूर्वत्र द्रव्यदेवताधिकारादेः ।

न च ब्रह्मज्ञानस्य पुरुषतन्त्रोपासनात्मकत्वे सङ्कर्षकाण्डार्थस्येव धर्म इत्येव समाख्या स्यात् न तु विद्येत्युक्तं युक्तम् ।

कर्माङ्गदेवतोपासनवैषम्यस्य स्वतन्त्रब्रह्मोपासने स्फुटत्वात् वेदार्थपरधर्मसंज्ञापादनस्येष्टत्वाच्च याज्ञवल्क्यादीनां पूर्वमीमांसासाधारणमेव विद्यास्थानत्वमभिमतमित्यपि प्रागेवोक्तम् । असाधारणसंज्ञान्तरसत्त्वेऽप्यविरोधात् । न हि सामान्यसंज्ञा विशेषसंज्ञामुपरुन्ध्यात् ।

## धर्मशब्दस्य वेदार्थमात्रपरत्वम्; तत्र भामतीसंवादश्च

यद्वा साध्यधर्मवाचिनाऽपि धर्मशब्देनाजहत्स्वार्थेन कृत्स्नवेदार्थलक्षणाद्विषयैक्यसिद्धिः ।

न च शक्यार्थमात्रपरिग्रहेण वाक्यार्थोपपत्तौ लक्षणानुधावनं निष्प्रयोजनमिति वाच्यम् । धर्मशब्देन कर्ममात्रविवक्षायामत इति हेत्वनन्वयात् ।

तदुक्तं सेश्वरमीमांसायां 'न हि वेदैकदेशार्थजिज्ञासायां कृत्स्नवेदाध्ययनं हेतुतयोपादीयेत। नचैकदेशाध्ययनं वृत्तं साङ्गसशिरस्कस्वाध्यायाध्ययनस्य विहितत्वादिति।

सिद्धपरवाक्याध्ययनस्य सिद्धप्रधानविचारस्यापि तत्र प्रतिज्ञायामेव हेतुत्वोक्तिसंगतेः। उक्तं च स्वाध्यायानन्तर्यं तु समानमिति भाष्यविवरण भामत्याम्। अथातो धर्मजिज्ञासेत्यनेनैवावगतमिति नेदं सूत्रमारब्धव्यं। धर्मशब्दस्य वेदार्थमात्रोपलक्षणतया धर्मवत् ब्रह्मणोऽपि वेदार्थत्वाविशेषेण वेदाध्ययनानन्तर्योपदेशसाम्यादित्यर्थ इति।

ननु धर्मजिज्ञासासूत्रे ब्रह्मानुपादानात् कथं तेन गतार्थता तत्राह— धर्मशब्दस्येति कल्पतरुः।

## परिमलोक्तटीकायोजनान्तरानुपपत्तिः

यच्चात्र धर्मशब्दस्येत्यादिटीकाग्रन्थेन जिज्ञास्यसमर्पणार्थस्य धर्मशब्दस्य वेदार्थमात्रोपलक्षणत्वं नोक्तं, किं त्वतश्शब्दोक्ते वेदस्य विवक्षितार्थत्वरूपे धर्मविचारप्रतिज्ञाहेतौ धर्मरूपस्यैवार्थस्य विवक्षितत्वं न विशेषणं किं तर्हि कृत्स्नवेदार्थस्य। अतो धर्मविचारप्रतिज्ञायां यागादिकार्यसमर्पकोऽपि धर्मशब्दः हेतुशरीरगतमर्थशब्दं समभिव्याहारवशात् तावन्मात्रपरं न कुर्यात् अपि तु वेदार्थसामान्यपरमेव कुर्यादित्येतावदुक्तमिति कल्पतरुपरिमले कल्पान्तरमुक्तं, तदेतदतिस्थवीयः।

धर्मजिज्ञासासूत्रे जिज्ञास्यसमर्पणार्थस्य धर्मशब्दस्य यागादिकार्यमात्रसमर्पकत्वोपगमे 'धर्मशब्दस्य वेदार्थमात्रोपलक्षणतया धर्मवत् ब्रह्मणोऽपि वेदार्थत्वाविशेषेण वेदाध्ययनानन्तर्योपदेशसाम्या'दिति भामयीवाक्यदुर्घटताया स्स्फुटत्वात्। तत्र धर्मशब्दस्येत्यस्य धर्मग्राहकहेतुघटकार्थशब्दपरतामाश्रित्य क्लेशेन योजनेऽपि धर्मवत् ब्रह्मणोऽपि वेदाध्ययनानन्तर्योपदेशसाम्यादित्यस्य संगमयितुमशक्यत्वात्। धर्मशब्दविवक्षितार्थजिज्ञासायामेव ह्यथशब्देनानन्तर्योपदेशः संभवति न त्वतश्शब्दविवक्षितार्थेऽपीति धर्मजिज्ञासासूत्रेण गतार्थत्वोक्तिरसंगतैव स्यादिति प्राथमिकव्याख्यैव तत्र व्याख्येयानुगुणेत्यास्तामेतत्।

वस्तुतस्तु धर्मशब्देन सिद्धसाध्यपरावरकृत्स्नधृतिहेतुसंग्रहात् अवयवशक्त्यैव कृत्स्नवेदार्थजिज्ञासाप्रतिज्ञा धर्मजिज्ञासासूत्रेण सूच्यत इति श्रुतप्रकाशिकातत्त्वटीकासरणिः पूर्वमेव सूत्रस्वारस्यप्रकाशनावसरे, दर्शिता। तथा सति 'कृष्णं धर्मं सनातन' मिति महाभारतप्रयोगस्य द्रव्यक्रिया गुणादीनां धर्मत्वं स्थापयिष्यत' इत्याद्यभियुक्तप्रयोगानां च मुख्यतयैव निर्वाहस्संभवति। सिद्धसाध्यसाधारण्योपगमात् क्वचित् साध्यधर्ममात्रपरतया प्रयोगेऽपि न विरोधः। प्रकरणादिसहकृतेन सामान्यशब्देनापि विवक्षितविशेषः प्रतिपत्तुं शक्यते। साधारणस्यापि धर्मशब्दस्य पार्थशब्दस्यार्जुन इव साध्यधर्मे प्रसिद्धिप्राचुर्योपगमेऽपि पञ्चशब्दसमभिव्याहृतपार्थशब्दस्येवातश्शब्दसमभिव्याहृतस्य धर्मशब्दस्याप्यत्र साधारण्यविवक्षैवाभ्युपगन्तव्या।

अन्यत्र धर्मादिति प्रश्नवाक्ये च प्रष्टृबुद्धिविषयो यागादिरेव धर्मशब्दार्थः। तत्रापि न क्रियामात्रं, धर्मादित्यस्य शास्त्रीयात् धर्मानुष्ठानात् तत्फलात् तत्कारकेभ्यश्चेति शङ्करभाष्ये क्रियातिरिक्तपरतयाऽपि विवरणात्। अतस्तदानीं नचिकेतस उपस्थितात् सिद्धसाध्योभयविधादपि यागतत्फलतद्द्रव्यादिरूपात् धर्माद्विलक्षणमेव तत्र पृच्छ्यते। तत्त्वं च सिद्धसाध्यरूप ब्रह्मतदुपासनयोः धर्मशब्दवाच्यत्वेऽपि न विरुद्धम्। अधिकं 'त्रयाणामेव चैवमिति सूत्रभाष्यव्याख्यायामनुसन्धेयम्।

## पुनः प्रतिज्ञासार्थक्यम्

स्याद्वा वृत्तिद्वयेनात्र धर्मशब्दस्य सिद्धसाध्योभयपरतया साधारणप्रतिज्ञासूचनम्। एवं सति ब्रह्मविचारस्यापि साधारणप्रतिज्ञयैवार्थतः प्रतिज्ञातत्वेऽपि बहुग्रन्थव्यवधानात्, शब्दाबोध्यत्वशङ्कापरिजिहीर्षया च पुनः प्रतिज्ञा 'अथातो ब्रह्मजिज्ञासेति इति न तद्वैयर्थ्यम्। प्राथमिकसाधारणप्रतिज्ञयैव व्यवधानाभावात् तन्त्रेणार्थत आवृत्त्या वा कर्मविचारासाधारणप्रतिज्ञालाभात् न तदर्थं पृथक् सूत्रमित्यादिकं सर्वमपि पूर्वमेव प्रपञ्चितम्।

## सूत्रे आवृत्त्यादिकल्पनस्यादोषता

न च सूत्रस्यावृत्त्यादिकल्पनैव दोषः। तत्र वाक्यभेदस्यैव प्रसञ्जनीयतया तस्य वाक्यदोषत्वेऽपि सूत्रदोषत्वाभावात्। तथोक्तं शबर-

स्वामिना—'यत्र वाक्यादर्थोऽवगम्यते तत्रैवं, तत्तु वैदिकेषु न सूत्रेषु इति।
उक्तं च वार्तिककृता—**द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते।**

अन्यत्र च—'तस्मादावर्तते सूत्रं तन्त्रं वा शक्तिभेदतः' इति। अत एवाथातः शेषलक्षणमित्यत्र

**द्विलक्षण्याः परं शिष्टं यावत्किंचन लक्षणम्।**
**तत्सर्वं वक्तुमारब्धमथातश्शेषलक्षणम्॥**

यत्तु शेषः परार्थत्वादित्यनन्तरलक्षणं, तत् अङ्गत्वस्य वाच्यत्वादादौ तन्मात्रगोचरं, समासश्च द्वेधा विगृह्य द्वयोर्वाक्यार्थयोः प्रदर्शनीयः। शेषं च तत् लक्षणं च शेषस्य वाऽर्थस्य लक्षणमितीति तन्त्रवार्तिकोक्तिरपि संगच्छते।

भामत्यां च सूत्रं च बह्वर्थसूचनात् भवतीत्युक्तम्। कल्पतरुपरिमले च धर्मजिज्ञासासूत्रे ब्रह्ममीमांसासाधारणी वेदार्थविचारप्रतिज्ञा धर्ममीमांसामात्रासाधारणी धर्मविचारप्रतिज्ञा चेति द्विविधा प्रतिज्ञा विवक्षिता। सूत्राणामावृत्त्याऽनेकार्थप्रतिपादनस्यालङ्कारत्वात् इत्युक्तम्।

किं बहुना पूर्वत्र सूत्रेष्वेकस्य पदस्यानेकार्थत्वं भूषणम्। धर्माधर्मसाधारणी जिज्ञासाप्रतिज्ञा आवृत्त्या वाक्यभेदस्य सूत्रेषु भूषणत्वात्। ब्रह्मपदेन परब्रह्मणस्सविशेषस्य च विवक्षया वाक्यभेदेनावृत्त्या योजनमपि भूषणमित्येव बहुकृत्त्वः स्वोक्तेरेवास्य व्याहतमत्र सूत्रावृत्तिदोषत्वकीर्तनमिति कृतं ग्रन्थान्तरवचनव्याघातप्रदर्शनेन। अत एवावृत्तावपि स एवायं धर्मशब्द इति कथमर्थविशेषलाभ इति चोद्यस्य परिहारभरो नास्माकमेव।

## आवृत्तस्यार्थान्तरपरत्वोपपत्तिः

वस्तुतस्सकृच्छ्रुतेन पदेनाधिगतादधिकस्यार्थस्य लाभायैव ह्यस्यैव पदस्य पुनरावृत्तिः कल्प्यते। यद्यावृत्तमपि तत्पदमधिगतपूर्वमेवाभिदध्यात् तदा अस्य किंस्वित्प्रयोजनं स्यादित्यानर्थक्यपरिहाराय तदेवावृत्तं सत् मुख्येन गौणेन वा वृत्त्यन्तरेणार्थान्तरमेवाभिधत्त इति संप्रतिपत्तव्ये किमत्र परिचोदनेन।

एतेन तन्त्रताऽपि निरस्ता। अलौकिकश्रेयस्साधनतासामान्यशक्तस्य क्रियारूपविशेषे लक्षणाऽवश्यंभावेन वृत्तिद्वयविरोधस्य तन्त्रतोक्तिमात्रेणापरिहरणीयत्वात् इति यदुक्तं, तदप्यनेन प्रत्युक्तम्। उक्तरीत्या सूत्रे वृत्तिद्वय-

स्याप्यदोषत्वात् । एकयैव वृत्त्या प्रवृत्तिनिमित्तानुगमेन सामान्यस्य, प्रसिद्धिप्राचुर्येण विशेषस्य च बोधने बाधकाभावाच्च । न चैवमपि जैमिनिना षोडशलक्षणान्ते सूत्राभ्यासेन शास्त्रपरिसमाप्तिं सूचयता शास्त्रैक्ये स्वासंमति प्रदर्शनात् तदीये धर्मजिज्ञासासूत्रे ब्रह्मभागसाधारणवेदार्थमात्रविचारप्रतिज्ञानं न विवक्षितमिति वाच्यम् । वेदैकदेशार्थविचारे अतश्शब्दोक्तहेत्वनन्वयस्यानिवार्यत्वात् ।

### षोडशान्ते सूत्रावृत्त्या शास्त्रभेदाक्षेपस्य निरासः

सङ्कर्षसूत्राणां क्वचित् प्रतीकदर्शनेऽपि कात्स्न्र्येनेदानीमुपलब्ध्यभावात्, अन्तिमसूत्रस्य च भिन्नभिन्नानुपूर्व्यास्तत्र तत्रोदाहरणाच्च सूत्राभ्यासस्सूत्रैकदेशाभ्यासो वा षोडशान्ते जैमिनिना कृत इति निश्चेतुमशक्यत्वेन तत्र शास्त्रसमाप्तितात्पर्यस्य दुरवधारणत्वात् । शास्त्रसमाप्त्यभावेऽपि अनेकाध्यायसंघातात्मकपूर्वभागपरिसमाप्तिद्योतनार्थमपि सूत्राभ्यासोपपत्तेः ।

जैमिनेरैकशास्त्र्यविवक्षानभ्युपगमेऽपि जैमिनीयेनैकशास्त्रतामङ्गीकृत्य बादरायणेन शारीरकं प्रणीतमित्युपगमे बाधकाभावेन बादरायणविवक्षावशेन धर्मपदस्य वेदार्थमात्रोपलक्षणत्वोपपत्तेश्च । तथोक्तं श्रुतप्रकाशिकायां 'अतदर्थतया क्लृप्तमपि योग्यमपेक्षितं तादर्थ्यमर्हति' ग्रामे कल्प्ये पूर्वतटाकवदिति तत्रैव च धर्मजिज्ञासासूत्रस्य पूर्वभागासाधारणार्थप्रतिज्ञापरत्वेऽपि साधारणप्रतिज्ञाया ब्रह्मजिज्ञासासूत्रादर्थतो वा लाभ इति पक्षान्तरोपपादनप्रकारस्तत एवावसेयः ।

एतेन न चाधिकारिकस्य जैमिनेः स्वसंकल्पितविचारैकदेशो विघ्नवशाद्विहत इति कल्पना संभवतीत्युक्तमप्यपास्तम् । विघ्नाभावेऽपि उभयसंमत्याऽन्यतरसंमत्या वा भागद्वयघटितग्रन्थैक्यस्योपपादितत्वात् । तत्सिद्धमथातः शेषलक्षणं, अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा' इत्यादिवदवान्तरविषयतत्प्रतिज्ञाभेदेऽपि उक्तरीत्या अनुगतविषयैक्यस्य, तत्प्रतिज्ञायाश्च सुवचत्वेन प्रबन्धैक्यमप्रकम्प्यमिति ।

मीमांसापादुकायामपीदं प्रपञ्चितम् । तथा च भगवता भाषितं 'मीमांसाशास्त्रं चाथातो धर्मजिज्ञासेत्यारभ्य अनावृत्तिश्शब्दादनावृत्तिश्शब्दादित्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रममिति ।

## कर्मविचारस्य ब्रह्मविचारपूर्वत्वे संप्रतिपत्तिः

एतेन प्रबन्धैक्ये सत्यपि ब्रह्मजिज्ञासासूत्रे अथशब्दस्य कर्मविचारानन्तर्यपरत्वं न वक्तुं शक्यं, भाष्योक्तरीत्या ब्रह्मविचारे कर्मानुष्ठानस्य तद्विचारस्य वाऽपेक्षानियमाभावेन तदप्रसक्तेरित्युक्तमप्यपास्तम् । भाष्योक्तरीतेः विकल्पासहत्वेनानुपादेयत्वात् । तत्र हि कर्मब्रह्मविचारयोः पूर्वोत्तरभावस्य संप्रतिपन्नतया ब्रह्मविचारस्य वस्तुतः कर्मविचारानन्तर्यनिषेधस्तावत् न संभवति ।

तथा हि शंकरभाष्येऽपि शरीरे भावाधिकरणे 'ननु शास्त्रप्रमुख एव प्रथमे पाद' इत्यादिना धर्मविचारप्रथमपादश्शास्त्रमुखमित्युच्यते । तत्र भामत्यां अधस्तनतन्त्रोक्तेन पौनरुक्त्यं चोदयति नन्विति । परिहरति उक्तं भाष्यकृतेति न सूत्रकारेण तत्रोक्तं येन पुनरुक्तं भवेत्, अपितु भाष्यकृतेत्याद्युक्तम् । तत्राधस्तनेत्युक्त्या कर्मविचारस्य पूर्वत्वं, तेन पौनरुक्त्यस्य परिहारात्तदेकग्रन्थतयोपगतस्य शारीरकस्य तदनन्तरभावित्वं चानुमतमित्यवगम्यते । तथाऽन्यत्रापि प्राच्यामेव मीमांसायामित्याद्युक्तं पूर्वमेव दर्शितम् । एवमेव तत्र तत्र कल्पतरावपि पूर्वोत्तरभावस्संप्रतिपद्यते । अतः कर्मविचारस्य पूर्ववृत्तत्वेऽपि तदपेक्षानियमाभावात् तदानन्तर्यमिह न वक्तव्यम् । नियमेन यदपेक्षितं तद्वचनस्यैवार्थवत्वादिति वाच्यम् । तथासति साधनचतुष्टयसंपत्तिहीनानामप्यधुना प्रवचनादिरागेण ब्रह्मविचारदर्शनात् साधनचतुष्टयानन्तर्यवचनमेव व्याहन्येत न तु कर्मविचारानन्तर्यवचनम् । कर्मविचाराभावे ब्रह्मविचारे 'सर्वापेक्षा चे'त्यादिसूत्रेण कर्मविनियोगप्रदर्शनायोगात् । न हि कर्मस्वरूपादिकं तत्र निरूप्यते, न वा कर्मस्वरूपादिकमनधिगम्य तस्य विनियोगमात्रमधिगन्तुं शक्यम् । तथोक्तं कर्मस्वरूपादिविचारमन्तरेण विविदिषार्थविनियोगायोगात् वेदनार्थविचारपक्षेऽपि किं पुनः ? नह्यविदितपदार्थविशेषो वाक्यार्थावसायी स्यादिति ।

## गृहस्थेतराश्रमिणां देवानामपि ब्रह्मविचारे कर्मविचारापेक्षा

न च 'तमेतं वेदानुवचनेनेति विनियोगवाक्येनैव यज्ञादिकर्मस्वरूपावगमात् किं कर्मविचारेणेति वाच्यम् । विनियोगवाक्यमात्रात् यज्ञस्वरूपा-

दिविशेषाग्रहे सामान्यतो ज्ञानमात्रेणानुष्ठानस्याशक्यत्वात् तत्र विविदषार्थं वेदानार्थं वा यज्ञाद्यनुष्ठानार्थो हि विनियोगविधिः। आदित एव कर्मफल-विरक्तानामपि ब्रह्मचारिणां ब्रह्मचर्यादेव संन्यस्तानां जन्मान्तरानुष्ठितकर्म-परिपक्वचित्तानां वा अग्नीन्धनाद्याश्रमान्तरधर्मानपेक्षायामपि भावनया तन्निरसनाय प्रत्यवायानुत्पादाय च प्रायणान्तं ब्रह्मचर्यतपःप्रभृतिस्व स्वाश्रमधर्मानुष्ठानापेक्षाऽस्त्येवेति तेषामपि अनुष्ठेयनिर्णयाय विचारसापेक्ष-त्वात् धर्ममीमांसापेक्षा नास्तीति न वक्तुं शक्यम्। अतो विचारस्य वैधत्वे रागप्राप्तत्वेऽपि वा कर्मविचारसापेक्षत्वं ब्रह्मविचारस्य तुल्यम्। स्वर्गादौ विरक्तस्यापि प्रत्यवायानुत्पादे रागावश्यंभावात् नित्यकर्मस्वरूपादिनिर्णयाय रागत एव कर्मविचारोपपत्तेः। तदुक्तं 'तिष्ठतु पुरुषार्थरागः कृत्स्नप्रवचना-दिरागादपि कृत्स्नविचारस्समस्तीति।

तर्हि कर्मविचारानधिकारिणां देवानां कथं ब्रह्मविचाराधिकार इति चेत्, मास्तु तत्राप्यधिकारः। देवताधिकरणसिद्ध इति चेत् न; तत्र तत्र विद्याधिकारस्यैव साधितत्वात् विचारमन्तरा तेषां स्वतस्सिद्धज्ञाने-नैव विद्याधिकारसंभवात् तेषामपि ब्रह्मविचारः क्वचित् श्रूयत इति चेत् स कर्मविचारपूर्वक एवेत्युपगमे किं बाधकं? स किमर्थ इति चेत् अनुष्ठानार्थ एव। देवानामपि हि तपस्सत्राद्यनुष्ठानमनेकत्र श्रूयते। तर्हि तिर्यगधिकरणविरोध इति चेत् न; स्वोद्देशेन देवतानामनुष्ठानासंभव एव तदधिकरणतात्पर्येण परमात्मोद्देशेनानुष्ठाने विरोधाभावस्य दर्शितत्वात् स्वर्गादिकमनुभवतामनभिसंहितफलकर्मानुष्ठानमन्तरेण उत्कटवैराग्यविविदि-षाद्यसिद्धेश्च विद्यायामप्यधिकारासंभवात्।

## जीवन्मुक्तानामपि धर्मानुष्ठानावश्यकता

एतेन वर्णाश्रम-देहात्माभिमाननिवृत्त्या जीवन्मुक्तानां न धर्मेष्व-धिकार इत्युक्तमप्यपास्तम्। देहात्माभिमाननिवृत्तेरलौकिकश्रेयस्साधन-धर्मानुष्ठानं प्रत्यपेक्षितत्वेन विरोधित्वाभावात् देहसंबन्धे स्थिते तन्निबन्धन धर्मानुष्ठानस्य दुस्त्यजत्वात्। परित्यागे चाधर्मवशेन विविदिषानाशे विद्याविच्छेदप्रसङ्गेन पुरुषार्थहानेरनिवार्यत्वाच्च। तदिदं 'यदा च यावज्जी-वमनुष्ठेयं ज्ञानमपवर्गोपाय इति सेत्स्यती'त्यादिना शतदूषण्यामेव सम्यक्

प्रपञ्चितम् । वेदान्तानामविधेयज्ञानमात्रविश्रान्ततात्पर्यकत्वं न वक्तुं युक्त-मिति वक्ष्यते ।

## देहात्माभिमाननिवृत्तेः कर्मत्यागं प्रत्यप्रयोजकता

यत्तु देहात्माभिमाननिवृत्तिर्नाम आत्यन्तिकदेहात्मतादात्म्यसत्य-त्वबुद्धिनिवृत्तिरिति परिष्करणं, ततोऽपि नेष्टासिद्धिः । तादृशबुद्धिनिवृत्तेर्दे-हातिरिक्तात्मसद्भावावधारणानुगुणत्वेनामुष्मिकफलसाधनकर्मानुष्ठानं प्रत्येव साधकत्वेन तत्परित्यागं प्रत्यप्रयोजकत्वात् ।

अन्यथा शास्त्रश्रवणानन्तरमेवास्तिकसामान्यस्य बाधितानुवृत्तावपि देहात्माभिमानसत्यत्वबुद्धिनिवृत्त्या सर्वधर्मपरित्यागप्रसङ्गेन चिन्मात्रात्म-स्वरूपसाक्षात्कारपर्यन्तप्रतीक्षावचनानुपपत्तेश्च ।

अत्र यदा वर्णाश्रमाद्यभिमाननिवृत्त्या कर्माधिकारो निवर्तेत इति उच्यते तदा त्रैवर्णिकाद्यधिकारिकश्रवणाद्यधिकारस्यापि निवृत्त्यवश्यंभावात् कर्मानधिकारिणो ब्रह्मविचारमात्राधिकारस्ते न सेत्स्यतीत्याशयेन शतदूषण्यां 'किं च यावता कर्माधिकारो निवर्तेत इति मनुषे तावता वेदान्तश्रवणाद्यधि-कारोऽपि निवर्तेत इति ब्रह्ममीमांसैव न स्या'दित्युच्यते । नात्र किंचित् व्याहतमस्ति । किं त्वत्र व्याघातदोषोद्भावनाय यदुक्तं संन्यस्तानां तु निवृत्त-कर्मविचाराधिकाराणामपि तदाश्रमधर्माधिकारिणां ब्रह्मविचाराधिकारस्तु नाद्वैतिभिरपि वार्यत इति तदेव व्याहतम् । धर्मविचारानधिकारिणः स्वाश्रमधर्मानुष्ठानस्याप्यशक्यत्वात् ।

न च संन्यस्तधर्मस्य न धर्मविचारापेक्षेति वाच्यं; ब्रह्मचर्यं तपः प्रभृतिधर्मस्वरूपतत्प्रमाणतद्भेद तद्विनियोगाद्यवगमे धर्मविचारापेक्षावश्यं भावात् । उक्तं हि तात्पर्यतूलिकायां

**नित्यं नैमित्तिकं कर्म प्रतिषिद्धं च सर्वदा ।**
**सर्वैरपि परीक्ष्यं हि प्रत्यवायजिहासया ॥** इति

न चोपदेशत एवानुष्ठानात्तदनपेक्षेति वाच्यम् । उपदेशत एव ब्रह्मणो ज्ञातुं शक्यत्वेन तद्विचारस्यापि अनपेक्षितत्वापत्तेः ।

हैतुकाविचाल्याध्यवसायदार्ढ्यार्थमपेक्षितत्वं तु समानमुभयत्र । अतो धर्मब्रह्मविचारयोर्नाधिकारिभेद इति ब्रह्मविचारदर्शितविद्याविनि-

योगधर्मस्वरूपादिविज्ञानाय ब्रह्मविचाराधिकारिणां धर्मविचारापेक्षा-नियमेन तदानन्तर्यमेवात्र अथशब्दविवक्षितमिति युक्तमुपगन्तुम् ।

एवं प्रमाण-भेद-शेष-प्रयुक्ति-क्रमाधिकारातिदेशादिपूर्वतन्त्रलक्षण व्युत्पाद्यानेकन्यायसापेक्षता ब्रह्मविचारस्य शतदूषण्यामेव दर्शिता नापह्नोतुं शक्यते ।

## शारीरक एवापेक्षित सर्वन्यायव्युत्पादनस्य निरासः

यत्तु जैमिनिरिव स्वतन्त्रमेव बादरायणोऽपि स्वापेक्षितान् न्यायान् जैमिनिमनुपजीव्यैव स्वसूत्रेषु निबबन्धेति ।

तदसत्; पूर्वतन्त्रप्रथमाध्यायप्रतिपादितवेदप्रामाण्यादेरेवेहोपजीव-नात् । न च 'अत एव च नित्यत्व' मित्यादावत्रैव वेदप्रामाण्यादिकं सूत्रि-तमिति वाच्यम्' । तत्र भाष्यकृता 'स्वतन्त्रस्य कर्तुरस्मरणादिभिः स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभवाभ्युपगमेन विरोधमाशङ्क्य अतः प्रभवा-दिति परिहृत्य इदानीं तदेव वेदनित्यत्वं स्थितं दृढयती'ति व्याकुर्वता पूर्व-तन्त्रसिद्धदृढीकरणार्थमेवेदं सूत्रं; नत्वपूर्वज्ञापनार्थमिति स्फुटीकरणेन तन्निर-पेक्षत्वासिद्धेः ।

एवं नानाशब्दादिभेदादित्यत्र भाष्ये शब्दभेदश्च कर्मभेदहेतुस्सम-धिगतः पुरस्तात् शब्दान्तरे कर्मभेदः कृतानुबन्धत्वादिति, आदिग्रहणात् गुणादयोऽपि यथासंभवं भेदहेतवो योजयितव्या इत्यादिना पूर्वतन्त्रसिद्धन्या-येरेव विद्यानानात्वमनुमन्यते न तु तन्निरपेक्षम् ।

तथा सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् इत्यत्र आदिग्रहणेन शाखान्तराधिकरणसिद्धान्तसूत्रोदिताः अभेदहेतव इहाकृष्यन्ते । संयोगरूप-चोदनाख्याविशेषादित्यर्थं इति भाष्यात् व्यक्तं विद्यैक्यसाधने पूर्वतन्त्रोप-जीवनम् । 'लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपी'त्यत्र तद्धि लिङ्गं प्रकरणात् बलीयः, तदप्युक्तं—पूर्वस्मिन् काण्डे श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्'' इति ।

श्रुत्यादिबलीयस्त्वाच्च न बाध इत्यत्र बलीयांसि हि प्रकरणात् श्रुतिलिङ्गवाक्यानीति स्थितं श्रुतिलिङ्गसूत्र इति च भाषितं, न तु प्रमिता-

धिकरणे शब्दादेवेति श्रुतिप्राबल्यं, आकाशस्तल्लिङ्गादित्यत्र लिङ्गप्राबल्य-मुक्तमित्येवं स्वयमेव प्राचीकशत् ।

न च पूर्वतन्त्रोक्तमनुपजीव्य उक्तस्थलेषु शब्दादिचोदनादि-श्रुत्यादीत्यादिपदानामुक्तार्थपरत्वं सर्ववेदान्तप्रत्ययाधिकरणसाध्यसमर्पकमेक-पदं च कुतश्चिदवधारयितुं शक्यम् । न वा श्रुत्यादीनां लिङ्गादिभ्यः प्राबल्ये हेतुः कश्चिदिहापादीयते यथा पूर्वत्र पारदौर्बल्ये 'अर्थविप्रकर्षादि'ति । किं तु पूर्वत्र हेतुतस्साधितं बलाबलमुपजीव्य प्रकृतवेदान्तवाक्ये बलीयसः श्रुत्यादेर्दुर्बलप्रकरणादिना बाधो न संभवतीत्येतावन्मात्रमुच्यते । एवमन्य-त्रापि । अत एव 'लिङ्गभूयस्त्वात् तद्धि बलीय स्तदपी'त्यत्र शंकरभाष्येऽपि तद्धि लिङ्गं-प्रकरणात् बलीयः तदप्युक्तं पूर्वस्मिन् काण्डे श्रुति-लिङ्ग वाक्य प्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादित्युक्तं, न तु तदप्यत्रैव श्रुत्यादिबलीयस्त्वादिति वक्ष्यते इति । अत एवोक्तं शतदूषण्यां— कर्ममीमांसानिरूपितस्वरूपैः तत्तन्न्यायैरेव हि वेदान्तार्थो विचार्यते अपूर्वास्त्वत्र कतिपये न्याया इत्यादि ।

यदुक्तं स्वशिष्यकृतधर्ममीमांसामुपजीव्यैव स्वसूत्रेषु न्यायान् निबबन्धेति चित्रमिदं शिक्षणमिति । तन्न; समानज्ञानत्वे विस्मयानवका-शात्, शिष्यस्याधिकज्ञानाधानायैव हि प्रायेणाचार्याणां प्रवृत्तिः, शिष्यादि-च्छेत् पराजयमिति ह्याहुः ।

### उपजीव्योपजीवकभावविरहस्य चण्डमारुतसंमतत्वनिरासः

यत्तु चण्डमारुतमपि पूर्वपक्षावसरे उपजीव्योपजीवकभावाभावयुक्ती स्संगृह्णानमपि तन्निरसनेऽकृतप्रयत्नं, कर्मब्रह्मविचारयोरुपजीव्योपजीवक-भावाभावं हृदयेनाद्रियत इति ।

तत्तु चण्डमारुतार्थवबोधयोग्यभाग्यवैकल्यविलसितं, तत्र हि पूर्व-पक्षनिरसनावसरे 'ऐकशास्त्र्यं च भागद्वयात्मकवेदाख्यैकप्रबन्धव्याख्यानरूप-त्वा'दित्यादिना व्याख्येयैक्यमेव शास्त्रैक्ये हेतुतयाऽनुगृहीतमाचार्यैः । अस्त्वैक्यशास्त्र्यं कथं पौर्वापर्यनियम इति शङ्कां परिहरन् इत्यादिना उपजीव्योपजीवकभावादि क्रमनियामकत्वेनैवानुगृहीतं; एवं सति विकल्पसंभ्रम आहो पुरुषिकामात्रमित्युक्तम् ।

अयमर्थः—भागद्वयात्मकवेदाख्यव्याख्येयैक्यादेवात्र एकैकभागव्याख्यानभूतयोः कर्मब्रह्मविचारयोः वामनजयादित्यकर्तृकपाणिनिसूत्रपूर्वोत्तरवृत्त्योरिव शास्त्रैक्यमङ्गीक्रियते ।

नचात्र द्वयोः कथमेकत्वमिति व्याघातश्शङ्कनीयः पदयोर्द्वयोरेक वाक्यत्वमिवात्राप्येकस्मिन् कृत्स्नवेदार्थनिर्णये परस्परसाकाङ्क्षतया साधनत्वेनोभयोरेकशास्त्रत्वोपपत्तेः । अर्थैकत्वं च वेदार्थत्वेन सामान्यतस्संभवतीति पूर्वमेवोक्तम् । 'सर्वे वेदा यत्पदमामनन्ति' वेदैश्च सर्वैरहमेव वेद्यः इत्यादि श्रुतिस्मृतिपरामर्शे विशेषतोऽपि वक्तुं शक्यम् । अर्थैकत्वाभावे साकाङ्क्षत्वाभावे वा न शास्त्रैक्यम् । अत एव न कृत्स्नव्याख्यानभूतभिन्नकर्तृकवेदभाष्याणां कृत्स्नवेदार्थनिर्णये परस्परानपेक्षाणामेकग्रन्थत्वम् । एवं ग्रन्थैक्ये सिद्धे उपजीव्योपजीवकभावादिना तद्घटकभागयोः पौर्वापर्यनियममात्रं, व्यवस्थाप्यते, न त्वेकत्वं तेन शब्दादिस्वरूपे शब्दशास्त्रोपजीवनेऽपि न तदेकत्वापत्तिः । तत्रापि प्रथमभागोपजीवनं तदीयप्रथमादिलक्षणसाध्य वेदप्रामाण्याद्यंशे इति च विशिष्य दर्शितम् । अतः परमत्राप्रसक्तकोटिविकल्पन तद्दूषणाप्रसिद्धतर ब्रह्मतर्कग्रन्थाद्युपजीवनवचनादेः किं प्रयोजनमस्त्यन्यत्र स्वविज्ञंमन्यताविष्करणादेरिति ।

अयं भावः—उपजीव्योपजीवकभावादिनैव हेतुना यद्येकप्रबन्धत्वात्मकमैकशास्त्र्यमिह कल्प्येत तदा तत्र व्यभिचारासिद्ध्यादिप्रदर्शनाय ग्रन्थान्तरमप्युपजीव्यते वक्ष्यमाणमेव वा न तु पूर्वभाग इति वक्तुं युज्येतापि । अन्यतस्सिद्धे प्रबन्धैक्ये तद्घटकभागयोः क्रमनियामकमुप जीव्योपजीवकभावादिकमित्युक्ते मध्वमतानुयायिनः ब्रह्मतर्काद्युपादायानुधावनं किं प्रयोजनकं स्यात् । किं च ब्रह्मतर्कस्य प्रामाणिकत्वेऽपि अधीतवेदस्य मध्ये तदध्ययनानवकाशेन कथं तदुपजीवनं ? शास्त्रारम्भकाल एव खलु प्रामाण्यनिश्चयेन भवितव्यं अन्यथा प्रारम्भासंभवात् । अत एव मध्ये वक्ष्यमाणं 'अत एव च नित्यत्वमिति सूत्रमुपजीव्य शास्त्रमारभ्यत इत्युक्तमपि न युक्तम् । तत्रापि पूर्वसिद्धमेवाक्षेपपरिहारेण दृढीक्रियत इति भाष्यकाराणामाशयः पूर्वमेव दर्शितः । स एव युक्तः नित्यत्वहेतोस्स्वतन्त्रकर्त्रस्मरणादेस्तत्रानुक्तेः । अत एवेत्युक्तहेतुश्च निरपेक्षः । वेदशब्दानां देवा-

ह्यनन्तरभावित्वमेव निवर्तयितुमीष्टे न तु नित्यत्वमपि गमयितुम् । देवादि-सृष्टिहेतुत्वेऽपि चतुर्मुखादीनामिव कार्यत्वस्यापि संभवात् । तेन पूर्वतन्त्रोक्त-हेतुसापेक्षमेव तत्रापि नित्यत्ववचनम् । अतः शास्त्रप्रमुखे प्रथमाध्याये समी-चीनहेतुना समर्थितं वेदप्रामाण्यमेवात्रोपजीव्यम् ।

एवमन्यदपीति । प्रेक्षावतां सविधे पारिप्लवमतेः अयं पूर्वपक्ष एव नोत्थापयितुं शक्य इति । तत्सिद्धं कर्मब्रह्मविचारयोरुपजीव्योपजीवकभावो न केनाप्याक्षेप्तुं शक्य इत्येवोक्तचण्डमारुतमभिदधाति न तु पूर्वपक्षः हृदयेनाप्याद्रियत इति ।

## प्रकारान्तरेणाप्युपजीव्योपजीवकभावप्रतिपादनम्

एवं तदुक्तं तदुक्तमिति दृष्टान्तविधया जैमिनीयोपजीवनमनेकत्र सूत्रकृतैव स्फुटमभिधीयमानमपि नापह्नोतुं शक्यम् । तथा च सूत्रितं

"हानौ तूपायनशब्दशेषत्वात् कुशाछन्दस्तुत्युपगानवत्तदुक्तम् । अक्षरधियां त्ववरोधस्सामान्यतद्भावाभ्यामौपसदवत् तदुक्तम् । अनुबन्धा-दिभ्यः प्रज्ञान्तर पृथक्त्ववत् दृष्टश्च तदुक्तम् । प्रदानवदेव तदुक्तमिति च ।

न च प्रदानवदेव तदुक्तमित्यत्र काशकृत्स्नीयमेव विवक्षितं न जैमिनीयमिति युक्तम् । मुख्यत्वेनोपचारेण वा जैमिन्युक्तत्वस्य मतद्वयेऽपि संप्रतिपन्नत्वात् । अत एवोक्तं तदुक्तं तदुक्तमिति जैमिनिपरिग्रह एव बहु शो दृश्यत इति । जैमिनिपरिग्रहस्य जैमिन्युक्तपरिग्रह इत्यर्थः । तेन तदुक्तमिति बहुशो निदर्शनस्यैव निर्देशने जैमिनिपरिग्रह इत्यसत्यवाद इति यथाश्रुतग्राहिशङ्काया नावकाशः ।

यत्तु कुशाछन्दस्स्तुत्युपगानवत् औपसदवत् प्रदानवदिति कर्मका-ण्डार्थनिदर्शनपुरस्सरं तदुक्तपदप्रयोग एव तत्परामर्शे निदानमिति कर्म-काण्डार्थनिदर्शननिर्देशान्यथानुपपत्तिरेव शास्त्रभेदमनयोरवगमयति; एकशा-स्त्रतायां तु संज्ञातश्चेदित्यादाविव केवलतदुक्तनिर्देशेनैवालं स्यादिति ।

## सूत्रेषु निदर्शननिर्देशस्य शास्त्रभेदगमकत्वायोगः

तन्न साधीयः । सूत्रेषु निदर्शननिर्देशस्य व्योमवच्च लोकवत् प्रज्ञान्तरपृथक्त्ववदित्यादाविव दार्ष्टान्तिकार्थनिर्धारणार्थतयैवोपपत्त्या अन्यथा-

ऽनुपपत्तेरेवाभावात् । प्रबन्धैक्येऽपि भागान्तरोक्ततया विप्रकृष्टस्यार्थस्य तच्छब्देन झटित्युपस्थापनार्थमपि निदर्शनोपादानमित्यभ्युपगमेऽपि विरोधाभावाच्च ।

एतदुक्तं भवति—भागैक्ये संनिधानात् तदुक्तानां प्रायेण झटित्युपस्थितिसंभवेऽपि भागभेदे तु विप्रकर्षात् तदुक्तानामुपस्थितिविलम्बोऽपि कदाचित् स्यात् स माभूदित्यभिप्रायेण, भागभेदे विशिष्य निदर्शन निर्देशेऽपि तस्य भागभेदप्रयुक्तत्वेन शास्त्रभेदगमकत्वं न संभवतीति ।

वस्तुतः अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववत् दृष्टश्च तदुक्तमित्यत्र ब्रह्मकाण्डोक्तनिदर्शननिर्देशेऽपि औपसदवदित्यादिवत् विशिष्य कर्मकाण्डोक्तनिदर्शननिर्देशं विनाऽपि तदुक्तमिति कर्मकाण्डोक्तपरामर्शाङ्गीकारेण, संज्ञातश्चेत् तदुक्तमस्ति तु तदपीत्यत्र तदुक्तमिति ब्रह्मकाण्डोक्तपरामर्शाभ्युपगमेऽपि अस्ति तु तदपीति कर्मकाण्डोक्तवत् ब्रह्मकाण्डोक्तस्यापि निदर्शनेन चात्र कस्यापि नियमस्य कल्पयितुमशक्यत्वाच्चात्र शास्त्रभेदे बीजान्वेषणं वल्मीक एव वलीमुखान्वेषणवत् विफलं विपरीतफलं चेति सिद्धम् ।

## अपरजैमिनिरितिशङ्कानिरासः

एतेन 'साक्षादप्यविरोधं जैमिनिः' 'संपत्तेरिति जैमिनिः' 'अन्यार्थं तु जैमिनिः' 'प्रश्नव्याख्यानाभ्यामपि चैवमेके' तद्भूतस्य तु नातद्भावो-जैमिनेरपि नियमात् तद्रूपाभावेभ्य इति सूत्रेषु यत्र विरुद्धांशानुवादेन निरसनं, विरुद्धांशश्च पूर्वमीमांसायां दृश्यते । तत्र पूर्वमीमांसाकृदेव जैमिनिः परिगृह्यते । यत्र त्वविरुद्धांशपरामर्शः, तत्र पूर्वमीमांसाकृतोऽपर वेदान्तप्रामाण्यवादी जैमिनिरेव परिगृह्यते ।

प्रसिद्धश्चापरोऽपि जैमिनिराचार्यः यः पूर्वपक्षितया पूर्वमीमांसायामेव नित्येषु यथाशक्तिन्यायाधिकरणे 'कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशस्स्यादिति पूर्वपक्षसूत्रे शबरस्वामिना परामृश्यते 'तस्मात् साङ्गं दर्शपूर्णमासशब्देनोच्यत इति जैमिनिराचार्यो मन्यत इति' पूर्वपक्षोपसंहारावसरे इत्युत्तरमीमांसायां कुत्रचन जैमिनिमतावलम्बनेन स्वसिद्धान्तोपस्थापनं न मीमांसाद्वयैक्यलिङ्गमित्युक्तमप्यपास्तम् । बहुशस्तदुक्तमिति न केवलमविरुद्धांशस्य; अपि तु दृष्टान्तविधया स्वसिद्धान्तसाधकस्य पूर्व-

मीमांसाकृदुक्तस्यैव सूत्रकृता परामर्श इति भाष्यद्वयेऽपि संप्रतिपत्त्याऽपरजैमिनेरेवाविरुद्धांशे परिग्रह इत्युक्तेर्भाष्यविरुद्धत्वात्, अपरजैमिनेरसिद्धेश्च ।

न च यथाशक्त्यधिकरणसूत्रभाष्याभ्यां तत्सिद्धिः । तत्रापि जैमिनिपदेन सिद्धान्तिन एव परामर्शः, न तु तदन्यस्य कस्यचित् पूर्वपक्षिण इति सूत्रभाष्यस्वारस्यादेव तत्सिद्धेः । तत्र यदि जैमिनिपदेन तदधिकरणपूर्वपक्षी विवक्षितस्स्यात् तदा तत्पदं पूर्वपक्षारम्भसूत्र एव निर्दिश्येत, न च तत्र निर्दिश्यते किं तु सिद्धान्तोपरि आशङ्कापरे चतुर्थे सूत्रे । न च तत्र पूर्वपक्षान्तरं, प्रथमसूत्रभाष्ये तदर्थोक्तेरसंगतेः । प्रथमसूत्रे यः पूर्वपक्षः तदनुबन्ध्येव हि विषयस्तत्र वक्तव्यो भाष्यकृता न तु पूर्वपक्षान्तरमपि ।

वस्तुतस्तु न तत्र पूर्वपक्षान्तरस्य सूत्रपदेभ्यः परिस्फूर्तिरस्ति । अतस्सर्वशक्तौ प्रवृत्तिस्स्यादित्याद्यसूत्रे यः पूर्वपक्षी तस्यैवेयमाशङ्का 'कर्माभेदं तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशस्स्यादिति इति वक्तव्यं, अत एव तदर्थः पूर्वपक्षसाधकतया प्रथमसूत्रभाष्य एव क्रोडीकृतः । तत्र च जैमिनिपदमाद्यसूत्रविवक्षितपूर्वपक्षवादिपरमित्यभ्युपगन्तुं न युक्तमित्युक्तमेव । सिद्धान्तिपरत्वे कथं तत्र सङ्गतिरिति चेत् इत्थं—स्वपक्षसाधकत्वाभिमानेन सिद्धान्त्युक्तेरेव हि अत्रानुवाद इति । तथा हि सिद्धान्तिना तदकर्मणि च दोष इति 'अप वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपादये' दिति प्रधानदर्शपूर्णमासातिक्रमे दोषवचनादङ्गानुष्ठानशक्तिरहितेनाऽपि यथाशक्ति प्रधानमनुष्ठेयमित्युक्तेनैतद्युक्तं प्रकृतसिद्धान्तकृत् जैमिनिर्भवानेवह्यन्यत्रैकादशे प्रयोगविधेरङ्गप्रधानसाधारण्येन साङ्गप्रधानानुष्ठानस्यैव फलसाधनतया फलादिवाक्ये सर्वेषामङ्गप्रधानानामुपदेशो न तु प्रधानमात्रस्य इति ह्याह; अतः प्रधानमात्रमनुष्ठेयं नाङ्गमिति भेदस्य दुर्वचत्वात् । अङ्गवियुक्तप्रधानानुष्ठानमपि फलवदित्यत्रत्यसिद्धान्तः प्रकरणान्तरस्थस्ववचनेनैव व्याहन्यत इत्याशङ्कमानेन पूर्वपक्षिणा स्वसाधकतया सिद्धान्त्युक्तेरेवेह तन्नामनिर्देशपूर्वकमनुवादसंभवात् । व्यक्तमिदं तत्सूत्रभाष्ये यदुक्तं जैमिनिराहेति पदसंघातेन, तदुक्तं वार्तिके 'एकादशे तु कथंभावस्सर्वैरङ्गैः निराकाङ्क्षीक्रियते इति सिद्धान्ते स्थिते इदमारभ्यत' इति । अङ्गानां तु 'शब्दभेदादित्यारभ्य विधेस्त्वेकश्रुतित्वात्' इत्यन्तेन सूत्रजातेनैकादशे सर्वाङ्गोपसंहारस्सिद्धान्तितः । तद्विरोधप्रदर्शनायैव सिद्धान्ति-

परं जैमिनिपदमुपादीयते पूर्वपक्षिणा। अतोऽपरजैमिनेरसिद्ध्या शारीरकस्थ जैमिनिपदप्रतिपाद्यः पूर्वमीमांसाकृदेवेति बहुशस्तदुक्तोपजीवनदर्शनात् विद्याभेदेषु यज्ञादिकल्पनविमर्शस्य यज्ञादिधीसापेक्षत्वात् अर्थ-मुख्य क्रमादितश्च वस्तुतः शारीरके विद्यमानं बहुधाऽप्यपेक्षितकर्मविचारानन्तर्यमेवाथशब्दे प्रतिपादयितुं युक्तम्। अत एव कर्मविचारस्य देहातिरिक्तात्मनिर्णये शारीरकोपजीवनेऽपि क्वचित् वक्ष्यमाणोपजीवनस्यापि अभ्युपगमात् न क्रमविपर्ययापत्तिः। एवं च क्वचित् देवताविशेषनिर्धारणेऽपि, अनिर्धारणेऽपि सामान्यतो विध्युक्तदेवतोद्देशादपि कर्मणः फलं भवत्येव, न तथाऽनधिगतकर्मणः कर्मानुष्ठानं विद्याफलं वेति विशेषात्।

### कर्मविचारानन्तर्योक्त्या संकर्षानन्तर्यस्याप्युक्तिः

न चैवं सङ्कर्षणकाण्डस्यापि मध्यपतितस्य ब्रह्मविचारपूर्ववृत्तत्वाविशेषात् ब्रह्मविचारस्य तदानन्तर्यमेव कुतो नोच्यत इति चोद्यमिह प्राप्नोति। कर्मानुबन्धिदेवतागोचरत्वेन संकर्षस्यापि कर्मविचारत्वेनात्रानन्तर्यप्रतियोगितया विवक्षितत्वात्। अत एव वृत्तात् कर्माधिगमादनन्तरमित्युक्तवद्भिः वृत्तिकारैः 'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति' सङ्कर्षघटितषोडशलक्षणसंहितत्वमभिहितमुपपद्यते, अन्यथा द्वादशलक्षणेनेत्येव हि वक्तव्यं स्यात्। काण्डत्रयप्रयोजनं तु प्रथमकाण्डस्य धर्माधिगमः, मध्यमस्य धर्माराध्य देवता स्वरूपाद्यवगमः, तृतीयस्य चिदचिद्विलक्षणसर्वान्तर्यामिब्रह्मस्वरूपाद्यवधारणमिति अवान्तरप्रयोजनभेदेऽपि सशिरस्कवेदार्थनिर्णय एवानुगतमेक प्रयोजनमिति स्फुटमेव। एतेन श्रीभाष्यानुयायिनां किं प्रयोजनं स्वतन्त्रब्रह्मविचारेणेत्युक्तमपि प्रत्युक्तम्। एषां च क्रमौचित्यमत्रप्रदर्शितम्।

### काण्डत्रयक्रमौचित्यम्

एवं सेश्वरमीमांसायां अत्र धर्ममुखेन समारम्भो विधिवाक्यानां क्रियाप्रधानत्वात्; यष्टव्यानां तु देवतानां राज्ञ इव सेवाविधिवाक्ये प्राधान्यमार्थं, तत्पूजात्मकत्वात् यागादेः। ततश्च शब्दतो यत् प्रधानं शास्त्रं प्रतीमः, तत्र प्रथमं विचारोऽवतरति, पश्चात् तदाराध्ये, ततः परं तत्पर्यवसानभूमौ इति प्रातीतिकोऽयं पर्वक्रमावतार इति। तथा साङ्गकृत्स्नाध्यायिनः कर्मब्रह्मणो-

रुभयोरपि अनन्तफलवत्वमल्पास्थिरफलवत्वं च वाक्यभेदेनापाततः प्रतीयते। निर्धारणं च विचारमन्तरेण न घटते। अतो वेदाध्ययनमात्रेण कर्मफलानित्यत्वनिर्णये अरविन्दे लब्ध इति न्यायात् ब्रह्ममीमांसायामेव रागतस्सर्वोऽपि प्रवर्ततेत्युक्तमप्ययुक्तमेव।

परीक्ष्य लोकानिति वाक्यमपि विचाराधीनकर्मफलपरीक्षानन्तरमेव निर्वेदलाभमभिदधाति न तु तद्वाक्यमात्रश्रवणतः, तस्याप्यक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवतीत्यादिवाक्यश्रवणनिबन्धनाप्रामाण्यशङ्काकलङ्कयोग्यत्वात्।

## स्थितेऽरविन्द इति न्यायेन प्रथमत एव ब्रह्मविचारानुपपत्तिः

एतेन तद्यथेह कर्मचित इति श्रुत्युपष्टब्धप्रत्यक्षदृष्टान्तानुगृहीतानुमानबलेनैव हि कर्मफलानित्यत्वं निर्णीयत इत्युक्तमप्यपास्तम्। विचारावश्यंभावे च न तावत् स्थितेऽरविन्द इति न्यायेन ब्रह्मविचारस्य प्राथम्यं, विचारात्पूर्वमरविन्देक्षुरकविवेकस्य दुस्संपादत्वात्। अन्यथा कस्यचिदपि कर्मविचारे प्रवृत्त्यनापत्तेः। अपि तु अधीतक्रमेणैवापातप्रतीतिप्रवृत्तिक्रमात् पूर्वाभ्यस्तसजातीयत्वेन अर्के चेन्मधु विन्देतेति न्यायाच्च प्रथमतः कर्मण्येव विचारः प्रवर्तते। अथ तदुद्देश्यदेवताविषये। ततः कर्मतदाराध्यतत्फलाल्पास्थिरत्वादि निर्णयानन्तरमेव निर्विण्णस्य ब्रह्मविचारे प्रवृत्तिर्भवितुमर्हतीति प्रवृत्तिपर्वक्रमोऽयमप्यत्रानुसंधेयः।

ननु कर्मविचारे कर्मफलानित्यत्वं न कुत्रापि विचार्य निर्णीतमिति चेत् सत्यं तत्समानफललघुगुरुभूताग्निहोत्र दर्शपूर्णमास चातुर्मास्य ज्योतिष्टोमादिकर्मस्वरूपसमुच्चयावृत्त्यादिनिरूपणेन तदुद्देश्यदेवतास्वरूपभेदपारतन्त्र्यादिनिरूपणेन च तदवधारणे सति तत एव फलतारतम्यास्थैर्यादिकमन्तरेण परतन्त्रसजातीयानित्यविभिन्नदेवतोद्देश्यकसजातीयफलकलघुगुरूपायसमुच्चयावृत्तिविधानादिकमनर्थकतयाऽनुपपन्नमिति पर्यालोचनया श्रुतार्थापत्तिबलेन कर्मफलाक्षयादिवचनानां चिरोपभोग्यत्वमात्रे तात्पर्यग्रहेण कर्मफलाल्पास्थिरत्वनिर्धारणस्य निष्प्रत्यूहत्वात्। तदेतदभिसंधाय भगवता भाषितं—'तत्र कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वा अध्ययनगृहीतस्वाध्यायैकदेशोपनिषद्वाक्येषु चामृतत्वरूपानन्तस्थिरफलापात-

प्रतीतेस्तन्निर्णयफलवेदान्तवाक्यविचाररूप शारीरकमीमांसायामधिकरोतीति । साङ्गाध्ययनगृहीतकृत्स्नस्वाध्यायाधीनापातप्रतीतिमतः प्रतिबन्धकीभूतपूर्व-भागार्थजिज्ञासायाः कर्मफलाल्पत्वादिनिर्णयेन निवृत्तौ अनन्तरमनन्तफल-तया गृहीतोत्तरभागार्थविचार एवोत्कटरागादुद्योगो भवति न तु साधन-चतुष्टयाद्यर्थान्तरश्रवण इति भावः । एतेन वेदाध्ययनानन्तरं कर्ममीमांसा, साधनचतुष्टयसंपत्त्यनन्तरं ब्रह्ममीमांसेत्युक्तमपि प्रत्युक्तम् ।

कर्ममीमांसायां नित्यवस्त्वादिविचाराभावेन ततस्तद्विवेकासिद्धेः शास्त्रान्तरश्रवणस्य चोक्तरीत्या ब्रह्मविचारात् पूर्वमवसराभावात् तदधीन-विवेकस्य प्रकृति परमाण्वादिनित्यत्वगोचरस्य विपरीतत्वेन च ब्रह्मविचारो-पयिकत्वाभावात् ब्रह्ममीमांसाधीनविवेकादेः पूर्ववृत्तत्वोपगमे अन्योन्या-श्रयस्य दुस्तरत्वाच्च । अधिकमग्रे वक्ष्यते । तदेवं ब्रह्मविचारस्य पूर्ववृत्त-तया संप्रतिपन्नः कर्मविचार एव बहुधाऽवश्यमपेक्षितश्चेत्युक्तम् ।

यद्यपि त्वंतत्पदार्थसमर्पकतयाऽस्यापेक्षितत्वमिष्यत एवेति कस्यचित् प्रौढिवादश्च नास्मिन् विषये विरुद्धः । तथापि कर्मविचारस्य त्वंतत्पदार्था-साधारण्याभावेन अन्यप्राधान्यनिर्णयेन च तत्परत्ववर्णनं नातीवोपपन्नमित्यु-पेक्ष्यन्ते ।

## अथशब्दस्य कर्मविचारानन्तर्यपरत्वौचित्यम्

एवं नियमेनापेक्षिते सति पूर्ववृत्ते कर्मविचारे तदानन्तर्यमेवोत्तर-मीमांसारम्भसूत्रघटकेनाथशब्देन पूर्वमीमांसारम्भ सूत्रघटकेन तेन वेदाध्ययना-नन्तर्यमिव प्रत्याययितुं युक्तं, न तु कस्यचिदनधीत्यमीमांसनेन तुल्ययोगक्षेमं व्युत्क्रमेणैकदेशस्यैव वा मीमांसनमनुरुद्ध्यातत्परेण भवितुम् । अन्यथा धर्म-जिज्ञासासूत्रेऽप्यथशब्दस्याध्ययनानन्तर्यपरत्वप्रहाणापत्तेरुक्तप्रायत्वात् । तत्सिद्ध-मथातोब्रह्मजिज्ञासेत्यत्राथशब्दः कर्मविचारानन्तर्यपर इति श्री भाष्यगतिरेव साधीयसी । तत्र च शास्त्रैक्यमप्युत्तम्भकमिति ।

## शतदूषणीनिरस्ताधिकयुक्त्यप्रदर्शनम्

अवान्तरविषयप्रयोजनादिभेदेन शास्त्रभेद इत्यापातनिष्कर्षस्तु शतदूषण्यामेव समूलकाषंकषणेन निष्कासितः, न पुनः प्ररोढुं प्रभवतीति किं तदुक्तिमात्रावर्तनेन । तत्रोक्ताः स्वपरमतसाधकबाधकयुक्तयः खलु परीक्ष-

णीयाः । शतदूषण्यां अवान्तरविषयादिभेदस्य शास्त्रभेदकत्वोपगमे षट्काध्यायादिभेदेन शास्त्रभेदप्रसङ्ग इति यत् प्रसञ्जितं तत्र किं त्वया परीक्षितं ? किं वा न्यायव्युत्पादनद्वारकवेदार्थनिर्णयजनकत्वेन शास्त्रान्तरव्यावृत्तासाधारणोपकारार्हसप्रकारकैकप्रधानार्थकत्ववर्णने ?

सङ्गतिविशेषविशिष्टतया नियतक्रमैकप्रबन्धत्वाभिधाने अर्थविरोधकल्पनोपशमविधाने वा ?

अधिकारिभेदात् विषयभेदात् प्रयोजनभेदादध्यायादिसंगतिभेदाच्च शास्त्रभेदः पूर्वोत्तरमीमांसयोरिति वदता शतदूषण्यर्थविक्षणमेवात्मनो न संपन्नमिति हि प्रख्याप्यते । अन्यथा संप्रतिपन्नैक्येऽपि शास्त्रे प्रत्यध्यायादि कमवान्तरसंगति विषयप्रयोजनादिभेदसंभवस्य शतदूषण्यामुद्घोषितत्वेनानैकान्तिकतया समधिगतस्य तस्य शास्त्रभेदकतया निष्कर्षानुपपत्तेः । वस्तुतस्तु शास्त्रभेदो लोकसिद्धः । मीमांसैक्यवादस्तु नाद्वैतिनामपि दोषायेति पूर्वापरविरुद्धवचनसंदर्भेण वक्तुरनिष्कर्ष एवात्र स्वयमाविष्कृतो भवति । अतश्शास्त्रभेद इत्यापातनिष्कर्षः । शतदूषण्यां निरस्ता एव हि युक्तयः पुनरिह साधकतया गृह्यन्ते । तन्निरासकयुक्तयस्तु न विशिष्य विमृश्यन्ते । किं तु एतदादि एतदन्तमेतेन निरस्तमित्यतिलघुना प्रतिज्ञामात्रेणैव निरस्ता इत्यभिमन्यन्ते । न चैतद्युक्तं, अप्रयोजकत्वेन दूषितानामतिचारनिरसनमन्तरा साधकतया पुनर्वचनमात्रात् संप्रतिपत्तेरयोगात् । अतस्सिद्धं शतदूषणीनिर्धारणं नावधीरणार्हमिति ।

### सर्वसिद्धान्तसङ्ग्रहे मीमांसाया विंशत्यध्यायोक्तिः

अत एव शाङ्करेऽपि सर्वसिद्धान्तसंग्रहे उपोद्घातप्रकरणे

**चतुर्दशसु विद्यासु मीमांसैव गरीयसी ।**

**विंशत्यध्याययुक्ता सा प्रतिपाद्यार्थतो द्विधा ।।** इत्युक्तम् ।

न च शास्त्रभेदे विंशत्यध्यायेति संख्यावचनं संगच्छते । अत्र मीमांसायाः कात्स्न्र्येन विद्यात्वनिर्धारणेनापि चतुरध्यायीमात्रस्यैव विद्यात्वमित्याधुनिकवचनं व्याहन्यते । अतस्सुष्ठूक्तं शतदूषण्यां—"तस्मादथातो धर्मजिज्ञासेत्यारभ्य अनावृत्तिश्शब्दादनावृत्तिश्शब्दादित्येवमन्तं कर्म-देवता-परदेवता गोचरतया विभक्तकाण्डत्रयं विंशतिलक्षणमेकशास्त्रमिति ।

———

# अविधेयज्ञानभङ्गवादः

**श्रीमद्वेदान्तगुरवे कुर्वीमहि नमस्क्रियाम् ।**
**यदुक्तयोऽन्यथा कर्तुं न शक्यन्ते परैरपि ॥**

उक्तं हि अविधेयज्ञानवादभङ्गे प्रथमतः परमतरीत्या मिथ्याभूतानामपि काचकामलादिदोषाणां ज्ञानेतरनिवर्त्यत्वे दृष्टे सत्यविद्यायामपि तदविरोधादिति ।

तत्र शृङ्गग्राहिकया कमपि विरोधमारोपयितुमप्यपारयन्तः परेऽद्वैतिनोऽपि कर्मबन्धनिवृत्त्यधीनं भोगमात्रसाम्यरूपमुक्तविधं मोक्षमुपासनाधीनमूरीकुर्वन्ति, परं तु सोऽवान्तरमोक्षो न तु मुख्यो मोक्षः । मुख्यो मोक्षस्तु अविद्यानिवृत्त्यधीनः, निर्विशेषब्रह्मावारकाविद्या च तद्विषयकापरोक्षसाक्षात्कारेण निवर्तते । रज्जुसर्पादिस्थले तथा दर्शनात् इत्यारभ्य रज्जुत्वाज्ञानस्य सामानाधिकरण्यादिना रज्जुत्वज्ञानमात्रनिवर्त्यत्वं, काचकामलादेस्तु ज्ञानसामानाधिकरण्याद्यभावात् ज्ञानानिवर्त्यत्वेन ज्ञानेतरनिवर्त्यत्वं मूलाविद्यायाश्च निर्विशेषब्रह्माश्रयणं तदावारकत्वं तज्ज्ञानैकनिवर्त्यत्वं अभिन्ननिमित्तोपादानत्व, केवल निमित्तत्वादिना काचकामलादिवैषम्यम् । अथापि व्यावहारिकत्वेन साम्यं, लाघवात् । अन्ततो ज्ञानमात्रबाध्यत्वमेव चोभयोरपि अविद्या काचकामलाद्योरित्येवमभिदधति ।

## अविद्यायाः काचकामलादिवत् ज्ञानमात्रेतरनिवर्त्यत्वम्

न चैतावताऽपि काचकामलादीनामिवाविद्याया अपि ज्ञानमात्रेतरनिवर्त्यत्वोगमे किमपि बाधकं दर्शितं भवति । न वा यत्र मिथ्यात्वं तत्र ज्ञानमात्रनिवर्त्यत्वमितिव्याप्तेरव्यभिचरितत्वमुपपादितम् । सत्यप्यप्रयोजकेन केनचिदाकारेण वैषम्ये व्यावहारिकत्वेन साम्यात् काचकामलादिवदविद्याया अपि ज्ञानेतरनिवर्त्यत्वमस्तु, यत्र व्यावहारिकत्वं तत्र ज्ञानमात्रेतरनिवर्त्यत्वमित्येव व्याप्तिरुपगम्यतां, विजातीयप्रातिभासिक रज्जुसर्पदृष्टान्तेन ज्ञानमात्र-

निवर्त्यत्वमविद्याया मा भूत् को विरोधः ? अज्ञानत्वेन साजात्येऽपि शुक्तित्वाज्ञानस्य समानाधिकरणेन शुक्तित्वज्ञानेन निवर्तनं युक्तं, समानाधिकरणविषयज्ञानाज्ञानयोरेव निवर्त्यनिवर्तकभावाङ्गीकारात् । निर्विशेषब्रह्माश्रितत्वेनोपगताया अविद्यायास्तु कथमसमानाधिकरणेन निर्विशेषब्रह्मगोचरवृत्तिज्ञानेन निवृत्तिस्स्यात् ? न ह्यविद्यानिवर्तकं वेदान्तवाक्यजन्यं ज्ञानमपि निर्विशेष ब्रह्माश्रितमित्युपगम्यते येन सामानाधिकरण्यं संभाव्येत ? ज्ञातृत्वरहितं हि तत् न च निर्विशेषस्यावेद्यतयाऽभ्युपगतस्याविद्यानिवर्तकज्ञाने विषयत्वं, तत्कुतस्समानविषयत्वमपि । अतः काचकामलादिवत् अविद्याया अपि ज्ञानमात्रेतरेणैव निवर्त्यत्वं युक्तमुपगन्तुम् । किमत्र चैतन्याविद्यावैविध्यकाचादि वैषम्याद्युपवर्णनेन । प्रतिवस्त्ववान्तरवैषम्यमस्त्येव । तथाऽपि हि सामान्यतो हेतुफलभावावगमो न विहन्यते ।

## अविद्याया उपासननिवर्त्यत्वे प्रमाणप्रदर्शनम्

अतो ज्ञानमात्रानात्मकेन उपासनरूपज्ञानविशेषेणैव अविद्यानिवृत्ति रित्युक्तिरेव साधयसी न तु वाक्यजन्यज्ञानेनैवेति । न च ज्ञानेतरनिवर्त्यताया अविद्यायामश्रवणात् इत्याद्युक्तं युक्तम् । ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इत्यादौ ध्रुवानुस्मृतिरूपोपासननिवर्त्यतायास्सर्वशब्दासंकोचेन अविद्याग्रन्थिसाधारण्यश्रवणात् । न च रागद्वेषादीनामेव ग्रन्थीनामुपासनान्निवृत्तिरत्रोच्यते, नत्वविद्याया अपि । तत्र कुत्रापि ग्रन्थित्वाश्रवणादिति वाच्यम् । एतत् यो वेद निहितं गुहायां, सोऽविद्याग्रन्थि विकिरतीत्यादौ अविद्याया अपि ग्रन्थित्वश्रवणात् । न च तत्र वेदेत्यनेन ज्ञानमात्रेणैवाविद्यानिवृत्तिरुच्यत इति वाच्यम् । वेदेत्यस्यात्र स्मृतिलम्भ इत्याद्युक्तश्रुत्यन्तरैककण्ठ्येनोपासनरूप विशेषपर्यवसानस्यैव न्याय्यत्वात् । अत्रैवोत्तरत्रोक्तवेदनस्य 'ओमित्येवं ध्यायथात्मानं स्वस्ति वः पाराय तमसः परस्तादिति वाक्येन ध्यानरूपत्वेन विवरणाच्च ।

## कर्मबीजनाशकज्ञानस्योपासनात्मकत्वे शङ्करभाष्यवाक्यस्यापि गमकत्वम्

न च वेदनोपासनशब्दभेदादर्थभेद इति वाच्यम् । यस्तद्वेदेत्यादौ एकस्मिन्नेव विषये वेदनोपासनशब्दयोः व्यतिकरेणोपक्रमोपसंहारदर्शनेनै-

कार्थ्यावगतेः । न च तत्र विदेरप्यमुख्यार्थकत्वं, मुख्यार्थपरित्यागे बीजाभावात् ।

न च समन्वयाधिकरणशङ्करभाष्ये तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यमिति निगमनात् नैकार्थाभिधायकत्वमनुमतमिति वाच्यम् । तत्र प्रमाणजन्यज्ञानविशेषस्य पुरुषतन्त्रत्वाद्यभावेन ध्यानवैलक्षण्यवचनेऽपि ज्ञानत्वसामान्येन तदनुक्त्या ज्ञानसामान्यवाचिपदस्य न्यायसिद्धेऽविशिष्टफलोपासनरूपज्ञानविशेषविश्रमे विरोधाभावात् । अत एव यावदधिकारसूत्रभाष्ये ज्ञानात् कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात् इति स्वोक्तार्थोपपादकतया

**"भिद्यते हृदयग्रन्थिच्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥"**

'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' ।

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।**
**ज्ञानाग्निस्सर्वकर्माणि भस्म सात्कुरुते तथा ॥**

इति श्रुतिस्मृत्युपादानेन ज्ञान-ध्रुवानुस्मृति-दर्शनानां मुक्त्युपायतायामेकत्वं स्फुटीक्रियते । अतो ध्यानस्य ज्ञानरूपत्वाभावादिति वचनमनादेयम् ।

### स्मृतिलम्भे-आत्मा वाऽरे द्रष्टव्य इत्यनयोर्भिन्नविषयत्वनिरसनम्

एतेन स्मृतिलम्भे मोक्ष इति सगुणोपासनसाध्यमोक्षपरं, आत्मा वाऽरे द्रष्टव्य इति तु निर्विशेषसाक्षात्कारार्थतया श्रवणविधानं, भिद्यते हृदयग्रन्थिरिति द्रष्टव्यवाक्याभिप्रायं, तथा चोभयोर्भिन्नविषयत्वात् सामान्यविशेषभावाभावाच्च न छागपशुन्याय इत्युक्तमप्यपास्तम् । उक्त श्रुतिवाक्ययोर्विषयभेदाभ्युपगमस्य प्रदर्शितपूर्वयावदधिकारसूत्रशङ्करभाष्यवाक्यसंदर्भविरुद्धत्वात् निर्विशेषब्रह्मणो मोक्षभेदस्य चाप्रामाणिकत्वाच्च । अविद्यानिवृत्तिरेव हि मोक्ष इति संप्रतिपन्नम् । सैव च स्वरूपाविर्भाव भोगसाम्यादिरूपा । भावान्तरमेवाभाव इत्यभ्युपगमात् । अतिरेकेऽपि तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इत्यादिवचनबलात् अविद्यानिवृत्त्यधीनं भोगसाम्यादिकमपि संप्रतिपत्तव्यमेव । तच्च "अस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । तथा विद्वान् नामरूपाद्विमुक्तः

परात्परं पुरुषमुपैति दिव्यं, इत्यादि प्रमाणवचनबलात् देशविशेषे परमपुरुष-प्राप्त्यनन्तरभावीत्यवगम्यते। ततोऽप्यधिके मोक्षे न किञ्चिदस्ति मानम्।

## सर्वब्रह्मविद्यासाध्यस्य मोक्षस्य एकत्वम्

विदुषामिहैवामृतत्वादिश्रवणं तु उपचारत उत्तरपूर्वाधाश्लेष-विनाशादिविषयमित्युक्तं अमृतत्वं चानुपोष्येत्यत्र। ब्रह्मैव भवतीत्यादि वचनं तु इवार्थेऽप्येवकारस्यानुशासनप्रयोगदर्शनेन परमं साम्यमित्याद्यनुरोधेन साधर्म्यपरतयैव संगमनीयमित्युक्तमेव। अतो मोक्ष एकविध एव। तत्रैव वेदान्तोदितानां सर्वासामपि विद्यानां विकल्पेन साधनता। तदुक्तं "विकल्पोऽविशिष्टफलत्वात्" इति। अत एव च सर्वासामपि ब्रह्मविद्यानां प्रीतिरूपापन्नदर्शनसमानाकारध्यानरूपता, न तु कस्याश्चिदपि वेदनमात्रात्मकता। अधिकारभेदमन्तरा एकार्थे लघुगुरुविकल्पायोगात्। सा चेह छागपशुन्यायेन सिद्धयतीत्युक्तम्। 'ब्रह्मविदाप्नोति परं' 'यमेवैष वृणुते तेन लभ्यः' 'आत्मा वाऽरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यं' इत्येवं हि सामान्यतो विशेषतश्च श्रूयते। आत्मा वाऽरे इत्यस्मिन्नेकस्मिन् वाक्ये श्रवणमननयोरधीतसाङ्गवेदस्य रागप्राप्तत्वान्न विधिः, किं तु विधास्यमानध्यानोपयोगितयाऽनुवादः। द्रष्टव्यो निदिध्यासितव्य इत्यत्रैवामृतत्वोपायतया विशिष्टे विधिप्रवृत्तिरिति श्रीभाष्यतदनुयायिप्रबन्धेषु विशदीकृतम्। अत्र ध्यान-दर्शनयोर्भिन्नार्थपरत्वे विकल्पव्यवस्था समुच्चयक्रमयौगपद्याङ्गाङ्गिभावाद्यसंभवश्शतदूषण्यामेव प्रपञ्चितः।

## द्रष्टव्य इत्यस्य फलपरत्वानुपपत्तिः

तथा द्रष्टव्य इत्यत्र फलपरत्वे प्रत्ययवैघट्यं, पूर्वापरवाक्येषु च येनाहं नामृता स्यां, अमृतत्वस्य तु नाशास्ति वित्तेन, एतावदेव खल्वरे अमृतत्वमिति फलस्योक्तत्वात् तदुक्तिरत्रानपेक्षितेति तत्त्वटीका। दर्शनस्य फलतयाऽनुवादे दर्शनकामेनेति भाव्यं, न तु द्रष्टव्य इति भावः। एतेन दर्शनस्य फलत्वानङ्गीकारे फलान्तरमत्र कल्पनीयं स्यादित्यारभ्य प्रकरणं हि क्रियाया एव विनियोजकमिति क्रिययोरङ्गाङ्गि भाव एव तत्प्रमाणं न तु फलकर्मणो रङ्गाङ्गिभावे इति प्रकरणस्य फलकल्पकत्ववादः न मीमांसकसंमत इत्युक्त-

मप्यपास्तं उक्तरीत्या मोक्षोपायप्रश्नोत्तरोपसंहारवाक्यसंदंशेन 'एतावदरे खल्वमृतत्वमिति वाक्येनैव वा पूर्वप्रकृतामृतत्वफलसंबन्धस्य लाभेनाश्रुत-फलकल्पनायाः प्रसक्त्यभावात् श्रूयमाणविधेर्भङ्गकल्पनस्य कारणाभावात् अत्रामृतत्वमित्यस्यामृतत्वसाधनमित्यर्थस्य मतद्वयेऽपि भाषितत्वात् सिद्धविष-येऽपि प्रकरणेन संबन्धव्यवस्थापनस्य वेदान्तिभिरभ्युपगमाच्च । अत एव प्रकरणाच्चेत्यादौ शारीरके सिद्धस्यापि ब्रह्मणः प्रकरणं विषयव्यवस्थापकतया दर्शितम् ! शङ्करभाष्येऽपि रूपोपन्यासाच्चेत्यत्र कथं पुनः भूतयोनेरयं रूपो-पन्यास इति गम्यत इत्याशङ्क्य प्रकरणादिति समाहितम् । न हि भूतयोनि स्तद्रूपं वा क्रियां भवितुमर्हति । विश्वयोनेरेव प्रकरणिन इत्येवं भामत्यादा-वुच्यते, तथाऽन्यत्रापि, तथा फलस्यापि प्रकरणं संभवदुक्तिकमेव । अतो वाक्येन प्रकरणेन वा अमृतत्वमेवात्र फलमिति विज्ञातुं शक्यत एव । अत एव 'यदेव भगवान्वेद तदेव मे ब्रूहि' इत्यत्रामृतत्वमाशासानाया मैत्रेय्याः याज्ञवल्क्य आत्मविज्ञानमिदमुपदिशतीति शाङ्करभाष्यं, तदेव मे ब्रूहीत्यस्या मृतत्वसाधनमिति शेष इति भामती च संगच्छेते ।

### द्रष्टव्य इति मुक्त्यनुवादानुपपत्तिः

यदि च द्रष्टव्य इति ध्यानादिफलतया मुक्तेरनुवादमात्रमित्युच्येत तदा पृष्टमन्यदुत्तरमन्यदिति आम्रान् पृष्टः कोविदारानाचष्टे इतिवत् स्यात् । मुक्तिसाधनं हि पृष्टं, न तु मुक्तिः । किं च यदि द्रष्टव्य इत्युक्तं दर्शनमेव मुक्तिरित्युच्यते तदा तस्य ध्यानफलत्वोक्त्या स्वमतविरुद्धं ध्यानमेव मुक्ति-साधनमित्यनुमन्तव्यं भवेत् । न च ध्यानफलत्वोक्तेः ध्यानसहकृतश्रवणजन्य-त्वे तात्पर्यान्न विरोध इति वाच्यम् । श्रवणस्य दर्शनजनकत्वानभ्युपगमात्, अभ्युपगमेऽपि श्रवणाधीनदर्शनस्याविद्यानिवर्तकत्वं, अविद्यानिवृत्तिरूपमुक्ति त्वं चात्माश्रयप्रसङ्गपराहतम् । महावाक्यजन्यापरोक्षसाक्षात्कारस्यैव मोक्ष-जनकत्वात् । अद्वैतमते तु विद्याधीना अविद्यानिवृत्तिर्मुक्तिरिति च स्वय-मेवोक्तत्वात् । अपरोक्षसाक्षात्कारस्यापरोक्षसाक्षात्कारप्रतिबन्धकविपरीत-वासनानिवर्तकत्वोपगमे च मिथस्संश्रयादिरिति शतदूषण्या प्रदर्शितमपरि-हार्यमेव । विपरीतवासनाया ज्ञानोत्पत्तिविरोधित्वे तत्सत्त्वे कथं पटुतर-संस्कारः ? कथं वा तत्सद्ध्रीचनस्साक्षात्कारः ? येनोक्त विपरीतवासना

निवर्तत इतीष्यते । अविरोधित्वे कुतो न सहसा श्रवणत एव ज्ञानं वासना निवृत्तिर्वा । अभेदभावनाया वासनानिवर्तकत्वे कथमल्पीयस्या भूयसीनां निवृत्तिः । मूलाविद्यानिवर्तकत्वेनेति चेत्; तन्निवर्तकतायास्साक्षात्कार एवाभ्युपगमेन किमभेदभावनया ? तस्यास्साक्षात्कारहेतुत्वं च दृष्टविधया न संभवतीत्यादिकं शतदूषण्यामेव सुव्यक्तम् ।

## इष्टसिद्धयुक्तमुक्तावनुपपत्तिः

एवं साक्षात्कारात्मकवृत्त्युपहितात्मस्वरूपैव मुक्तिरिति इष्टसिद्धि-कारोक्तरीतिरपि चिन्त्यैव । आत्मस्वरूपस्य नित्यत्वेनासाध्यतया मुक्ति-साधनबोधकशास्त्रादिवैफल्यप्रसङ्गात् । उपाधेः साध्यतया कथञ्चिदुपहितस्य साध्यत्ववर्णने तादृशसाध्यत्वस्य प्राप्ताप्राप्तविवेकेनोपाधावेव विश्रमेण तत्र वृत्त्यात्मकोपाधेरात्माश्रयप्रसङ्गेन साधनताया दुर्निर्वहत्वात् । मुख्यतया निर्वाहे संभवत्युपचारतो निर्वाहस्यापरिग्राह्यत्वाच्च ।

## वस्तुस्वरूपावधारणमित्यत्र तत्पुरुषस्यैव स्वारस्यम्

एवमेव तद्विवेकेन च वस्तुस्वरूपावधारणं विद्यामाहुरित्यत्र-कर्म-धारयपरिग्रहेऽपि वैरस्यमवधेयम् । वस्तुस्वरूपस्यैकत्वेन नित्यसिद्धत्वेन च विवेकाधीनत्वानाद्यविद्यानिवर्तकत्वयोर्दुरुपपादत्वात् । चरमसाक्षात्काररूप-वृत्त्यभिव्यक्तत्वेन तथात्वोपपादने साक्षात्कारस्यैव तथात्वमभ्युपगन्तुमुचितम् । साक्षात्कारस्य स्वयंप्रकाशस्य जडत्वायोगान्नाविद्यानिवर्तकत्वाद्यनुपपत्तिः । अन्यथा स्वयंप्रकाशवस्तुस्वरूपाभिव्यञ्जकत्वस्याप्यनुपपत्तेश्च । तदुक्तं "शान्ताङ्गार इवादित्यं व्यनक्तीति न युक्तिमत्" इति । यदत्र सूर्यकान्तारूढं सौरं तेज एव तृणादिदाहकमिति निदर्शनं, तत्र सूर्यकान्ते दाहकत्वशक्ति-सद्भावेनैव तन्मिलितं सौरं तेजो दहति सामग्रीपौष्कल्यादिति दृष्टं । तद्वत्-प्रकृतेऽपि साक्षात्काररूपवृत्तावविद्यानिवर्तनशक्तिसत्त्वे एव तदुपहितं वस्तु-स्वरूपमविद्यां निवर्तयेत् । वृत्तौ तच्छक्त्युपगमे च तत एवाविद्यानिवर्तक-त्वेन विद्यात्वकल्पनं त्रिफलमेवेति वस्तुस्वरूपावधारणमित्यत्र षष्ठीतत्पुरुषवि-वक्षैव साधीयसी । तत्रैवोत्तरत्र अस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रति-पत्तये सर्वे वेदान्ता आरभ्यन्त इति वाक्यान्तरस्वारस्यादपि स्फुटमेवमव-गम्यत इत्यास्तामेतत् ।

## द्रष्टव्य इत्यस्य मुख्यार्थासंभवोपपादनम्

सर्वथा मुक्तिरूपं दर्शनं द्रष्टव्य इति न विवक्षितं किं तु तदुपाय भूतमेव, येन मुक्तिविरोधिसर्वकर्मक्षयो भवतीति तस्मिन् दृष्टे परावर इत्यत्रो- च्यते। तर्हि ध्यानफलं मुक्तिसाधनं मुख्यदर्शनमेव प्रमाणतन्त्रं द्रष्टव्यपदार्थ- स्स्यादिति चेन्न; तद्धि न चाक्षुषं, आत्मनो रूपत्वाभावेन तदयोगात्। 'न चक्षुषा गृह्यते' इति तत्र तत्प्रतिषेधाच्च। नापि मानसं प्रत्यक्षं; तत्र दर्शनशब्दमुख्यवृत्तेरभावात्। न च प्रत्यक्षसामान्यं दर्शनशब्दवाच्यः; स्पर्शो दृश्यत इति स्वारसिकप्रयोगाभावात्। स्वयंप्रकाशात्मतद्गुणवादिनां मते मानसप्रत्यक्षानुपगमाच्च। योगजप्रत्यक्षोपगमेऽपि तत्र दर्शनशब्दो भाक्त एव। कारणादृष्टमूलविधिसापेक्षत्वान्न तत्रापुरुषतन्त्रत्वमपि। अत एव शब्दापरोक्षाभ्युपगमेऽपि न तद्दर्शनपदमुख्यार्थः; चक्षुषा पश्यतीति हि लोकवेदयोः स्वारसिकः प्रयोगो न तु वाक्येनेति। अतश्चाक्षुषमेव दर्शनपद- मुख्यार्थः। अन्यत्र तु तद्धर्मयोगादौपचारिकस्तत्पदप्रयोगः। 'स च धर्मो विशदतमत्वादिरित्युक्तं श्रीभाष्यादौ। प्रत्येकं स्वेतरद्वित्रादिसाहित्येन वा तत्तद्विद्यावाक्यैः पूर्वमनुज्ञातानां स्मृतानां चाकाराणां सर्वेषामप्यत्र स्मृतौ समुच्चित्य भाने वैशद्यसंभवेन स्मृतावपूर्वाकारभानायोगनिबन्धनवैशद्यासं भवचोद्यस्य नावकाशः। मुख्यार्थासंभवे गौणार्थग्रहणं न दोषायावकल्पते। मुख्यार्थासंभवश्चानुपदमुपपादितः।

एतेन दृशिधातोर्मुख्यसाक्षात्कारार्थत्वे संभवति दर्शनसमाना- कारज्ञानविवक्षायां गौणार्थत्वापत्तिः। न च मुख्येऽर्थे संभवति गौणार्थत्वं युक्तमित्युक्तं परास्तम्। अतो द्रष्टव्य इति दर्शनसमानाकारत्वमेव प्रत्याय्यते। निदिध्यासितव्य इत्यनेन तु ध्यानरूपता। विशिष्टविधिस्तु पदद्वयेन अर्धमन्त- र्वेदि मिनुयात् अर्धं बहिर्वेदीत्यत्र देशविशेषविधिवदित्युक्तम्। भिन्नपदो- पात्तयोः विशेषणविशेष्ययोरुभयोरपि विध्यनुप्रवेशसूचनाय उभयत्र विधि- प्रत्यययोगः। अतो नान्यतरवैयर्थ्यशंकावकाशः। एतादृश वाक्यैक- कण्ठ्यादेव हि समानप्रकरणे क्वचिदन्यतरमात्रश्रवणेप्युक्तविशिष्टविवक्षा गृह्यते।

## मुख्यार्थसंभवेऽपि पुरुषतन्त्रत्वं, सविशेषविषयिता च

अथवा 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे' इति वाक्ययोश्छागपशुन्यायेन निर्णीतोऽर्थः द्रष्टव्यो निदिध्यासितव्य इत्येकस्मिन् वाक्ये समाश्रीयते इति शतदूषणीसरणिरनुसरणीया। अत एव मोक्षार्थकेवलवेदनादिश्रुतेरपि स एवार्थः स्वीक्रियते; न तु न्यायनिरपेक्षं। विषयिताविशेष एव दर्शनपदप्रवृत्तिनिमित्तमिति पक्षे तु द्रष्टव्य इत्यस्य ध्रुवानुस्मृतावपि मुख्यत्वं संभवितुमर्हति। ध्रुवानुस्मृतावप्यभ्यासाधेयातिशयभागिन्यां दृश्यामिति प्रतीतिसाक्षिकोक्तसाक्षात्कारित्वव्यञ्जकविषयताविशेषाभ्युपगमे बाधकाभावात्। अत एव द्रष्टव्य इत्युक्तदर्शनस्य न वस्तुतन्त्रत्वं प्रमाणतन्त्रत्वं वा। स्मृतेरेवोक्तविषयताविशेषस्य दर्शनसमानाकारताया वा पुरुषप्रयत्नातिशयमन्तरेण वस्तुस्वभावतः प्रमाणबलतो वा संपादयितुमशक्यत्वात्, अन्यथा वस्तुप्रमाणयोस्साधारण्येन सर्वेषामपि श्रुतवेदान्तानां दर्शनपर्यवसायिशास्त्रज्ञानापत्तेः। अतः पुरुषतन्त्रत्वादप्राप्तमोक्षफलकत्वेन विधेयत्वावश्यंभावाच्च विधिप्रत्ययसार्थक्यम्। विध्यश्रवणेऽपि ह्यप्राप्तविषये विधिराश्रीयते 'विधि र्वा धारणवदिति' किं पुनर्विधिश्रवणे। विष्णुरुपांशु यष्टव्य इत्यादावुपांशुयाजादेरन्यतः प्राप्तत्वादेव न विधिरिष्यते, तद्वदप्राप्तार्थकस्थलेऽपि विधिभङ्गे विधिरेव सर्वत्र समुन्मूलितस्स्यादित्यादिकं शतदूषण्यामेव स्फुटीकृतम्। अतो द्रष्टव्य इति वाक्ये पदद्वयलक्षणया दर्शनसमानाकारत्वविशिष्टध्यानस्यैवैकस्य विधिः, एकार्थविधानादेव च न वाक्यभेदः। श्रवणादीनि त्रीण्यपि पृथग्विधेयानीति मत एव स दुस्त्यजः; फलोपकार्यङ्गतया श्रवणादिविधानेऽपि। तत्र विरुद्धत्रिकद्वयसमावेशोऽप्यवर्जनीय इत्युक्तं तत्र जोषंभावेन दोषाङ्गीकारः। द्रष्टव्यस्य चात्मनः सत्यसंकल्पत्व सर्वोपादानत्व सर्वज्ञत्व सर्वात्मकत्वादयो धर्माः पूर्वापरवाक्यसमधिगताः। तेनात्र न निर्विशेषदर्शनोक्तिप्रसक्तिः। निर्विशेषं च किमप्यसिद्धमित्युक्तम्। अस्य चात्मनो जीवातिरिक्तत्वसाधकतया वाक्यान्वयाधिकरणे प्रथमसूत्रं भाष्यद्वयेऽपि योजितं, चरमसूत्रस्य जीवाभेदपरतया भाषितं तु सूत्राक्षरस्वारस्यपरिपन्थि; उपक्रमे जीवातिरेकसाधनेन विरुद्धं चेत्यावेदितं प्रागेव।

## ब्रह्मविदाप्नोतीत्युपासनापरम्

इदमेव च दर्शनसमानाकारं ध्यानं 'ब्रह्मविदाप्नोति परं' ब्रह्म वेद ब्रह्मैव भवतीत्यादौ ब्रह्मप्राप्तिफलकतया विधीयते, नत्वविधेयं वेदनमात्रं; अधिकारफलाविशेषात्। अभयं प्रतिष्ठां विन्दत इत्यग्रे प्रतिष्ठापदेन विवरणाच्च। प्रतिष्ठा चात्र ध्रुवानुस्मृतिरेवेति पूर्वमुपपादितम्। एतेन तत्राप्युपासनापरत्वव्यवस्था तु श्रीभाष्यानुयायिनां स्वकपोलकल्पनामात्रमित्युक्तमपि प्रत्युक्तम्। 'वेदनमुपासनं स्यात्तद्विषये श्रवणा'दित्यादिना वाक्यकारादिभिः मोक्षसाधनं वेदनं सर्वत्रोपासनमेवेति सिद्धान्तितत्वाच्च।

## वेद इत्यस्योपासनविधायकत्वे शाङ्करसंमतिः

यत्तु ब्रह्म वेद ब्रह्मैव भवतीति सिद्धवद्ब्रह्मवेदनस्य ब्रह्मप्राप्तिहेतुत्वमाम्नायते न चात्र वेदनशब्देन उपसनानुवादः, अविधित्वात्। विधेयतयैव हि सर्वत्रोपासनं प्रस्तूयते न तु सिद्धवदिति। तन्न। अत्र प्रसिद्धिपराक्षरलेशस्याप्यश्रवणात्। अप्राप्तेऽर्थे विधेराश्रयणीयत्वात्। वेदेत्यत्यस्य लेट्त्वेन विधित्वनिश्चयाच्च। अत एव शंकरभाष्येऽपि भूर्भुवस्सुवरिति वा एता इत्यनुवाकस्य वक्ष्यमाणानुवाकेन एकवाक्यताप्रतिपादनावसरे वक्ष्यमाणानुवाकतात्पर्येण न हि वेदोपासीत वेति विधायकः कश्चिच्छब्दोऽस्तीत्यत्र वेदेत्यस्य विधायकत्वमनुमन्यते। तथा "य एवमेता महासंहिता व्याख्याता वेद" इत्यत्र उपास्ते वेदेत्युपासनं स्यात्, विज्ञानाधिकारात् "इति प्राचीनयोग्योपास्वेति वचनात्। उपासनं च यथाशास्त्रं तुल्यप्रत्ययसंततिरसंकीर्णा चान्यप्रत्ययैश्शास्त्रोक्तालंबनविषया चेत्यादिना • विज्ञानोपासनध्रुवानुस्मृतिपर्यायतया वेदेषु वेदनशब्दप्रयोगोऽपि। तद्वत् ब्रह्म वेदेत्यस्यापि ब्रह्मोपासनविधिपरत्वोपगमे न किंचित् बाधकमन्यत्राभिनिवेशात्। एतेन ध्यानोपासनादिशब्दानां न ज्ञानवाचकत्वमिति केनचिदुक्तमप्यपास्तम्।" तद्रूपप्रत्यये चैका सन्ततिश्चान्यनिस्पृहा' तद्धयानमिति हि भगवान् पराशरः। न ज्ञानं स्वरूपेण विधातुं शक्यमिति पक्षश्च शतदूषण्यामेव बहुधा विकल्प्य प्रतिक्षिप्तः।

## ज्ञानविधेयत्वसमर्थनोपरि आक्षेपव्याघातः

यत्तु दर्शनस्य वृत्त्युपहितात्मरूपत्वेनैव फलत्वस्वीकारात् नाभाव्यत्वहानिरिति तदुपरि प्रत्यवस्थानमिव; तन्न; आत्मव्यतिरिक्तज्ञानस्यैव भाव्यत्ववचनात् व्याहतेश्च। अभाव्यत्वे फलत्वायोगात् मोक्षस्य वृत्त्युपहितरूपेण जन्यत्वादिति स्ववचनान्तरविरुद्धत्वाच्च। वस्तुतस्तु स्वरूपतो नित्यस्यात्मन आगन्तुकोपाधिसंबन्धमात्रात् जन्यत्वाप्रसक्त्या मुख्यफलत्वासंभवेन परमपुरुषार्थभूतमुक्तिरूपत्वोक्तिरनुपपन्नैवेति तदतिरिक्तः स्वरूपाविर्भावादिरेव विद्यासाध्यः; अविद्यानिवृत्तिरूपः तदधीनो वा देशविशेषप्राप्त्यनन्तरभावी परमप्राप्यभूतः वचनबलादुत्तरावधिरहितः परमो मोक्षः।

## मोक्षस्य साध्यत्वेऽपि न विनाशित्वापत्तिः

साध्यत्वेऽपि ध्वंसादेरविनाशिनो दर्शनेन व्याप्त्यभावात्, "न च पुनरावर्तते" इत्यादिवचनबाधाच्च साध्यश्चेन्मोक्ष अनित्य एव स्यादित्यापादनं त्वनुपपन्नमेव। साधितस्य च मोक्षस्य कारणानुवृत्त्या प्रतिबन्धकाभावादेव च पुनः न निवृत्तिरिति शतदूषण्यामेव च प्रपंचितम्। तेन च भावत्वविशेषणादुपदर्शितव्यभिचारपरिहारेप्युक्तव्याप्तेः कारणनिवृत्तिप्रतिबन्धकप्रवृत्त्यादिना सोपाधिकत्वं सूचितम्। तथा "तद्यथेह कर्मचित" इत्यादिवचनस्य कर्मफलमात्रविषयत्वं निगदसिद्धम्। कथंचिदुपासनफलमपि क्रोडीकर्तुमस्य शक्तिरस्तीत्युपगमेऽपि तन्नित्यत्वनिर्वाहकशास्त्रव्यूहप्रतिरोधबलेन तत्र स्वप्रवृत्त्यवकाशमलभमानस्य तदतिरिक्तमात्रविषयकत्वं न्यायविदामसन्दिग्धमेव। एतेन यत् कृतकं तदनित्यमिति युक्त्युपोद्बलितत्वेनानित्यत्वश्रुतेः प्राबल्यमित्युक्तमप्यपास्तम्। तद्युक्तेः प्रागेवोन्मूलितत्वाच्च।

एवमात्मस्वरूपातिरिक्ततया मोक्षस्य प्राप्यत्ववचनमपि मुख्यतयैवोपपद्यते, तथा ब्रह्मणः प्राप्यत्ववचनमपि देशविशेषे विग्रहविशेषावच्छिन्नस्य मुख्यमेव। न त्वद्वैतमत इव प्राप्यत्वोपचारः। एतेन उपासनसाध्यत्वे मोक्षस्य उत्पाद्यत्वप्राप्यत्वाद्यन्यतममापद्येतेति समन्वयसूत्रे भाष्य एव विवेचितमित्युक्तमपि प्रत्युक्तम्। मुक्तेरात्मरूपत्ववादिनामद्वैतिनामेवास्यानिष्टत्वात्। आत्मव्यतिरिक्तत्वे चाद्वैतव्याघात इत्युभयतःपाशारज्जुः। पंचमप्रकाराविद्यानिवृत्ति-

पक्षश्च सिद्धितव्द्याख्यादिभिरेव विधूत इति प्रागेवोक्तम् । श्रीभाष्यकृतां पक्षे आत्मव्यतिरिक्तस्वरूपाविर्भावादेः मुक्तिरूपत्वोपगमे न कश्चिदतिप्रसङ्गः ।

## मोक्षसाधनज्ञानस्य भाव्यत्वभावार्थत्वादिना यागादिवद्विधेयत्वम्

तत्साधनभूतं पुरुषप्रयत्नसाध्यदर्शनसमानाकारध्यानरूपावस्थापन्नमात्मधर्मभूतज्ञानमेव द्रष्टव्यो निदिध्यासितव्यइति विधीयत इत्युक्तं; तस्य च पुरुषव्यापारसाध्यतया ध्यै-दृश्यादिधात्वर्थतया च भाव्यत्वं भावार्थत्वं च नापह्नोतुं शक्यं; अतएव यष्टव्य इत्यादौ धीविशेषरूपयागादेरिव द्रष्टव्यो निदिध्यासितव्य इत्यादावपि दर्शनसामानाकारध्यानावस्थापन्नज्ञानविशेषस्य करणतया सांशभावनानुप्रवेशसंभवात् मानसग्रहमनश्चिदादिवच्च विधेयत्वोपगमे न कश्चिद्विरोध उद्भावयितुं शक्य इति शतदूषण्यामुपदर्शितमप्रकंप्यमेव । विधेयत्वं हि ज्ञानेच्छाकृतिसाध्यत्वेन यागादेः स्वीक्रियत इत्युक्तिर्दर्शनाकारध्यानस्यापि समानैवेति न तथा किमपि वैषम्यमुपदर्शितं भवति । अत एव चात्र वाक्यजन्यज्ञानपराणां वस्तुतन्त्रं; न तु चोदनातन्त्रमित्यादि भाषणानामत्र प्रवर्तितुमवकाशलाभ एव नास्ति । एवं ज्ञानविशेषविधेयत्वसमर्थने निराबाधे सति आत्मरूपज्ञानस्य विधेयत्वप्रतिषेधोऽप्रसक्तप्रतिषेध एव सन् न शतदूषण्युक्तमर्थं प्रतिक्षेप्तुं प्रभवति । आत्मरूपज्ञानस्य वाक्यादिजन्यज्ञानस्य चाविधेयतायाश्शतदूषण्यामभ्युपगतत्वात् । मोक्षसाधनीभूतं विधेयमित्युच्यते । तच्च "नायमात्मा प्रवचनेन लभ्यः नाहं वेदैर्न तपसा" इत्यादिप्रमाणैरितरोपायनिषेधात् गुणविभूतिदिव्यविग्रहादिविशिष्टमहापुरुषविषयकं भक्तिरूपमित्युक्तं नीतिविद्भिः ।

## भक्तेः ज्ञान-दर्शन-प्राप्तिसाधनत्वे मानप्रदर्शनम्

यत्तु—"भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा" इति भक्तेरव्यभिचारिण्या ज्ञानसाधनत्वेनैवोपन्यासात् साक्षान्मोक्षसाधनत्वोपन्यासो न सांप्रतमिति ।

तन्न; भक्तेर्मोक्षसाधनताया अपि ज्ञानसाधनतावत् प्रमाणसिद्धत्वात् । तथा हि भक्त्या मामभिजानातीति श्लोक एव "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तर'मिति मोक्षसाधनत्वमपि ह्युच्यते । ततः—भक्तितः ।

तदनन्तरं मां विशत इति भगवत्प्राप्तेः 'ब्रह्मविदाप्नोति पर'मित्यादावुक्तायाः भक्तिसाध्यत्वकीर्तनात् । "पुरुषस्स परः पार्थ भक्त्या लभ्यस्त्वनन्यया । योगी परं स्थानमुपैति चाद्यं' "मन्मना भव मद्भक्तः'···'मामेवैष्यसि' 'भक्त्यात्वनन्यया शक्यः' ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च' यमेवैष वृणुते तेन लभ्य इत्यादीनि हि भगवत्प्राप्तिहेतुतयाऽपि भक्तिमेवाभिदधति । तेन भगवद्भक्तेरेव स्वगतवैशद्याद्यतिशयतारतम्येन पर्वक्रमात् भगवद्ज्ञानदर्शनप्राप्तित्रितयं प्रत्यपि हेतुत्वाविरोधात् ज्ञानहेतुत्वोक्तिमात्रेण न भक्तेर्मोक्षसाधनत्वानुपपत्तिः । चतुर्विधा भजन्ते मामित्यादिना भगवद्भजनस्यानेकफलकत्वं हि गीयते—अतः "मयि चानन्ययोगेन भक्तिरव्यभिचारिणी" इति परब्रह्मज्ञानसाधनतया भक्तेरुपन्यास इत्युपगमेऽपि न विरोधः ।

वस्तुतस्तु—परिशुद्धजीवात्मस्वरूप ज्ञानसाधनतयैवात्र भगवद्भक्तेरुपन्यासः । क्षेत्र-क्षेत्रज्ञस्वरूपशोधनपरत्वात् प्रकरणस्य । न च प्रथमषट्के प्रत्यगात्मज्ञानस्य भक्तियोगसाधनत्ववर्णनेन त्रयोदशे भक्तियोगस्य प्रत्यगात्म ज्ञानसाधनत्ववर्णनं व्याहतं; भक्तेः पर्वभेदोपगमेन व्याहतेरभावात् । न चात्र अनादि मत्परं ब्रह्मेति निर्देशेन जीवात्मनः परब्रह्मत्वायोगात् व्यावृत्तिरिति वाच्यं; मत्परमित्यैकपद्येन बहुब्रीहिणा भगवच्छेषत्वविवक्षया जीवस्वरूप एव समन्वयस्य भगवता भाष्यकृता भाषितत्वात् । अनादिमदिति पदच्छेदे मतुपो वैयर्थ्यं प्रकरणविरोधश्च । न च मत्परमित्यस्यार्थासंभवात् बहुब्रीहिणा समानार्थस्य मतुपः श्लोकपूरणार्थः प्रयोग इति वाच्यं; अर्थसंभवस्य दर्शितत्वात् । न च न सोऽर्थः संभवितुमर्हति; ब्रह्मणस्सर्वविशेष प्रतिषेधेनैव विजिज्ञापयिषितत्वात् न सत्तन्नासदुच्यत इतीति वाच्यम् । अत्र ब्रह्मेति मुक्तिदशा भाविज्ञानबृहत्वयोगेन प्रकरणिनो जीवात्मन एव विवक्षायां परब्रह्मणः प्रसक्त्यभावात् 'न सत् तत् नासदि'ति नामरूपयोगतदयोगरूपकार्यकारणावस्थाद्वयानन्वयस्य परिशुद्धजीवस्वरूपे विवक्षितत्वात् न ब्रह्मणस्सर्व विशेषप्रतिषेधः । विशेषप्रतिषेधोपगमे सर्वतः पाणिपादं तदित्याद्यनन्तरोक्तेर्दुर्घट त्वात् । न चात्राध्यारोपापवादन्यायः । आप्ततमस्य वात्सल्येन तत्त्वोपदेशावसरे प्रक्षालनाद्धीति न्यायेन तदनौचित्यात् । अतो न निर्विशेषसाक्षात्कारसाधनोपदेशस्यात्र प्रसक्तिः । तदुक्तं तात्पर्यचन्द्रिकायां—"अत एव ज्ञेयं यदित्यादेः

परब्रह्मविषयत्वभ्रमो निरस्तः । क्षेत्र-क्षेत्रज्ञयोर्ज्ञानमिति प्रक्रमात्, क्षेत्र-क्षेत्रज्ञयोरेवं अन्तरं ज्ञानचक्षुषेति उपसंहरिष्यमाणत्वात्, मध्ये च प्रकृतिं पुरुषं चैवेति तयोरेव निरूपणात्, इन्द्रियाधीनभोगत्वोत्क्रमणगुणवश्यत्वादिवचनाच्चेति ।

## ज्ञानीत्वात्मेत्यनेन न निर्विशेषज्ञानतादात्म्ययोः प्रतिपादनम्

यत्तु—भक्तिपदेन सविशेषोपासनमिव निर्विशेषसाक्षात्कारोऽपि ब्रह्मभावरूपमोक्षसाधनं सप्तमाध्याये गीतायां तुरीयभक्तिरूपतया विवक्ष्यते—तद्यथा "चतुर्विधा भजन्ते मामिति । अत्र हि ज्ञानिपदेन निर्विशेषसाक्षात्कारवानेव विवक्षणीयः; न तु सगुणोपासकः तस्य सर्वदाऽपि परमात्मानं प्रति शरीरतयाऽनुमतत्वेन 'ज्ञानीत्वात्मैव मे मत' मित्युक्तस्यात्मत्वस्यानुपपत्तेः । तच्चाद्वैतमतस्यैव गीताचार्याभिमतसिद्धान्तत्वे उपपद्यत इत्युक्तं—तन्न साधीयः ।

प्रीतिपूर्वमनुध्यानं भक्तिरित्यभिधीयत इति निरुक्तेन भक्तिपदेन ध्यानानात्मक साक्षात्कारवचने स्वारस्याभावात् 'भजन्ते मा' मिति सगुणब्रह्मतयाऽभिमतस्य कृष्णस्यैव विषयतया निर्देशेन निर्विशेषविषयकत्वकल्पनायां मानाभावाच्च । शङ्करभाष्येऽपि ज्ञानिविष्णोस्तत्त्वविदिति विवरणमपि सगुणोपासकस्यैवात्र स्वरसतः प्रत्यायकम् । नह्यत्रात्मेति तादात्म्यं प्रतिपाद्यते । न त्वेवाहं जातु नासमित्यारभ्य अपरेयमितस्त्वन्यामित्याद्यन्तेन आत्मभेदप्रतिपादनेन; अनन्तरं 'ज्ञानवान्मां प्रपद्यत' इत्यादौ कर्मकर्तृव्यपदेशादिना; अत्र च 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः "ज्ञानीत्वात्मैव मे' इति व्यतिरेकनिर्देशेन च भेदस्यैवाभ्यासेन वक्तुरभिमततया स्फुटीकरणात् । तदुक्तं तात्पर्यचन्द्रिकायां—'आत्मशब्दस्यात्र बहुप्रमाणविरुद्धत्वात् न तादात्म्यादिविषयत्वं, तथासति व्यतिरेकनिर्देशबाधश्चेति । परं तु ज्ञानिनः प्रियतरत्वेन तस्मिन् भगवतः स्वधारकत्वेन स्वाभिमान इहात्मशब्देन प्रकाश्यते । तदायत्तात्मधारणोऽहमिति मन्ये । अत एव मतमित्युक्तं; तेन विना ममाप्यात्मधारणं न संभवतीति हि भाषितम् । आधारत्वादि विशेषोह्यात्मलक्षणमिति भावस्तात्पर्यचन्द्रिकायां दर्शितः ।

तथा च प्रियत्वातिशयप्रतिपादनाय सावधारणोऽयमात्मत्वेनोपचार इत्युक्तं भवति। एवं सत्येव हि दर्शितोपक्रममध्योपसंहाराद्यानुरूप्यं संपद्यते।

उपासकस्य चोपायफलदशयोरुभयोरप्यात्मत्वेन ब्रह्मानुसंधानमप्युपपद्यते। अत्यर्थप्रियत्वात् ब्रह्मणो वस्तुतो धारकत्वाच्च वस्तुतः प्रमाणसिद्धस्य सर्वाधारकत्वौपयिकानन्याधीनस्थितिकत्वस्य प्रीत्यतिशयनिबन्धन ज्ञान्यधीनस्थितिकत्वाभिमानेन न विरोधः। अतो 'न त्वहं तेषु ते मयी-त्यत्र तच्छब्देन जीवात्मविवक्षोपगमेऽपि न क्षतिः। तत्रान्याधीनस्थितिकत्वं वस्तुतो नास्तीति उच्यते।

## ज्ञानी त्वात्मेत्यस्य ज्ञानोप्रशंसापरत्वे तु न विरोधः किं तु तादात्म्यपरत्व एव

ज्ञानी त्वात्मैव मे मतमित्यत्र तु न मुक्तात्माधीनस्थितिकत्वं; मुमुक्ष्वधीनस्थितिकत्वं वा परमात्मनोऽस्तीत्यभाषि। किं तु इति मन्य इत्यनेन आभिमानिकमेव तदिति स्फुटीकृतम्। अत एव मयि ते तेषु चाप्यहमित्युक्तमपि संगच्छते। अतः श्रीभाष्यकृतां विवरणे न परस्परविरोधगन्धप्रसक्तिः। किं तु ज्ञान्यतिरिक्तानां परमात्माधीनस्थितिकत्वं; ज्ञानिनस्तु परमात्मरूपत्वमिति विषयविवेक एवाद्वैतविरुद्धः। अज्ञानिनामपि तन्मते परमात्मनैक्योपगमेन ज्ञानिनां ततो विशेषायोगात् ज्ञानी त्विति पृथक् ग्रहणमनर्थकं स्यात्। ऐक्याविशेषेऽपि तदनुसंधानतो विशेष इति चेत् तर्हि परमात्माधीनस्थितिकत्वानुसंधानमपि ज्ञानिनामेव संभवतीति तद्व्यतिरिक्तविषयकतया तद्वचनमनुपपन्नमेव स्यात्। तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते'' इति पूर्वं प्रक्रमात्, अत्रापि ज्ञानिनो विशेषवचनमेव युक्तमुपगन्तुम्। स चात्मशब्देनाभिधीयत इति वक्तव्यं, आत्मशब्देनात्र यदि तादात्म्यभिधित्सितं; तर्हि तत्साधारणमेव सत् न विशेषो भवितुमर्हतीति उक्तम्। धारकत्वाभिधाने तु विशेषोऽभिहितस्स्यात्। ज्ञानिनोऽन्यत्र अत्यर्थप्रियत्वाभावेन परमात्मनो धारकत्वाभिमानायोगात्। तत्सिद्धं ज्ञानिनः स्वधारकत्वेन भगवता प्रशंसामात्रमत्र क्रियत इति न कश्चिद्विरोधः इति। अत एवात्र स्वभक्तस्तुतिपरश्लोक इति तात्पर्यचन्द्रिका। एवं पूर्वापरस्ववाक्याद्य

विरोधेनात्मेति वचने सङ्गमयितुं शक्ये निखिलप्रमाणविरुद्धतादात्म्यपरतया विवरणमनुपादेयमेव ।

### अद्वैते गीताया न तात्पर्यं किं तु विशिष्टाद्वैते

अत्र पूर्वं "भूमिरापोऽनलो वायुरित्यादिना भेदश्रुत्यर्थस्य 'मयि सर्वमिदं प्रोत' मित्यादिना घटकश्रुत्यर्थस्य 'रसोऽहमप्सु कौन्तेय' इत्यादिनाऽभेद श्रुत्यर्थस्य चोपबृंहणादुत्तरत्र 'उत्तमः पुरुषस्त्वन्य' इति सर्वावस्थजीवब्रह्मभेदस्य प्रसाधनाच्च सकलश्रुत्यनुगुणं विशिष्टाद्वैतमेव गीताचार्यसिद्धान्त इति स्फुटमवगम्यते । अतश्चतुर्विधा भजन्ते मामित्यत्र न निर्विशेषसाक्षात्कारस्तुरीयभक्तिः; किं तु सगुणोपासनमेव । तदितरनैस्पृह्यमेवात्र पूर्वस्माद्विशेषः । तदेवोच्यत **एकभक्तिरिति** ।

### अद्वैतस्य तात्त्विकत्वे गीताचार्यादीनामुपदेशाद्यनुपपत्तिः

तदेव मोक्षसाधनं, न तु वाक्यजन्यं ज्ञानं प्रत्यक्षाद्यखिलप्रमाणविरोधात् । तत्र वाक्यार्थज्ञानमात्रेणाविद्यानिवृत्त्युपगमे देहेन्द्रियादिकरणानामविद्याकार्याणामपि निवृत्त्यापत्त्या श्रुतवेदान्तानां दृश्यमानो वादप्रवचनश्रवणादिसंप्रदायोऽनुपपन्नः स्यात् । वाक्यार्थज्ञानस्य विशदाविशदभावेन द्वैविध्यमुपगम्य विशदज्ञानस्यैवाविद्यानिवर्तकत्वमविशदज्ञानेन च प्रवचनादिकमित्युपगमे भगवतोऽपि हितोपदेष्टुरविशदज्ञानाविद्यावत्त्वाद्यपत्तिः; अविद्यावतस्तत्त्वोपदेष्टृत्वानुपपत्तिश्चेत्युक्तम् । न चात्र नावगतब्रह्मात्म भावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुं; वेदप्रमाणजनितब्रह्मात्मभावविरोधादितिभाष्योदाहरणेन कथंचन कश्चन परिहार उक्तस्स्यात् । अद्वैतमताचार्याणामपि विचित्रदुःखानुभवदर्शनस्य दुरपलपत्वात् । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतिश्च शरीरपातानन्तरमेव प्रियाप्रियास्पर्शमाह न तु शरीरसद्भावदशायामेव । न च सशरीरत्वनिमित्त-मिथ्याज्ञाननिवृत्त्या शरीरसद्भावेऽपि सशरीरत्वनिवृत्तिः; व्याहतत्वात् । न च शरीरात्माभिमानवत्त्वं सशरीरत्वं; मिथ्याज्ञाननिवृत्तौ तदभिमाननिवृत्त्या सशरीरत्वनिवृत्तिश्शरीरे सत्यपि न व्याहन्यत इति वाच्यम् ।शरीरातिरिक्तात्मविदामप्यामुष्मिकफलभोगाय शास्त्रीयकर्मसु प्रयतमानानां ब्राह्मणोऽहमिति

सशरीरत्वप्रतिभासस्य दृश्यमानत्वेन सशरीरत्वस्य देहात्माभिमानातिरिक्त-त्वोपगमावश्यंभावात् ।

### उपदेशाद्यनुपपत्तेरद्वैतभाष्यवाक्यात् न परिहारः

यत्तु—अप्रामाण्यज्ञानानास्कन्दितपटुतमसंस्कार सहितं भुज्यमानादृष्टाभावसहितात्मसाक्षात्कार एव मोक्षसाधनं; स चासकृदावर्त्यमानश्रवणमनननिदिध्यासनतज्जन्यसाक्षात्काराधीनश्शरीरपातानन्तरमेव भवति । न तु ततः पूर्वम् । ततः पूर्वं तु पटुतमसंस्कारसहितसाक्षात्कारवन्तः प्रारब्धकर्मफलमात्रमनुभवन्तश्च निवृत्ताविद्या अप्यनुवर्तमानाविद्यालेशवन्तो बहव एव ज्ञानिनस्साधकावस्थायां सिद्धावस्थायां च वर्तमानास्समाधिदशायां स्वयमात्मतत्त्वमात्रं साक्षात्कुर्वन्तोऽप्याधिकारिकाः पुरुषाः; जीवन्मुक्ता वा समाधिदशायामनुभूतमात्मतत्त्वं स्मारं स्मारं समाधितो व्युत्थाय शिष्याणामुपदिशन्तीति सर्वसंप्रदायसिद्धमिति पूर्वोक्तभाष्यभावविवरणं—तदपेशलम् ।

### अर्वाचीनोक्तोपायशरीरविशेषणदूषणम्

ब्रह्मवेदनमात्रस्य तत्रापि वाक्यजन्यस्यैव मोक्षसाधनत्ववादिनां तदवच्छेदककोटौ संस्कारसाहित्यादीनां निवेशोपगमायोगेन ब्रह्मवेदनत्वमात्रस्यैव मोक्षसाधनतायामविद्यानिवर्तकतायां वाऽवच्छेदकत्वोपगमावश्यंभावेन वेदान्तवाक्यजन्यप्राथमिकज्ञानमात्रेणाविद्यानिवृत्त्याद्यापत्तेरनिवार्यत्वात् । ध्यानादिविध्यन्तरान्यथानुपपत्त्याऽर्थसिद्धसंस्कारविशेषसाहित्यादेर्वेदनविशेषणत्वोपगमे तदपेक्षया वेदनादिशब्दस्य समानप्रकरणपठितध्यानादिविशेषे विश्रमाङ्गीकारस्यैव न्याय्यत्वात् । शरीरपातानन्तरमेव साक्षात्कारो भवतीत्युपगमे च तस्योपायत्वं न वक्तुं शक्यं, सशरीरत्वावस्थायां साधितस्यैवोपायत्वात् ।

मोक्षस्य शरीरपातानन्तरभावित्वे सचेत्याद्युक्तवाक्यतात्पर्योपगमे च जीवन्मुक्तेस्तिलजलाञ्जलिरेव स्यात् । शरीरपातात्पूर्वमेव पटुतमसंस्कारसहितसाक्षात्कारवन्तस्साधकावस्थास्सिद्धावस्थाश्च बहवस्सन्तीत्युपगमे तेषां निवृत्ताविद्यत्वोपगमावश्यंभावात् शरीरेन्द्रियाद्यनुवृत्त्यनुपपत्त्या स्वेतरशिष्यदर्शनाद्ययोगेन च प्रवचनाद्यनुपपत्तिर्दुर्वारा । साक्षात्कारानन्तरं प्रारब्ध-

कर्मणोऽविद्यालेशस्य वा मिथ्याभूतत्वेनोपगतस्यानुवृत्तौ न किंचित् कारणं संभवति । अत्र बाधितानुवृत्तिरपि न संभवतीत्यनन्तरमेव प्रतिपादयिष्यते ।

### श्रीभाष्यकृन्मतेऽप्युपदेशाद्यनुपपत्तिसाम्यनिरासः

यत्तु—श्रीभाष्यकृतस्तदनुयायिनश्च स्वशरीरितया परमात्मनमनुसंदधानाः कथमनुवृत्तकर्मशरीरादयस्सन्तः शिष्यान् प्रति तत्त्वान्युपदेष्टु मर्हन्ति ? कथं वा वासुदेवः स्वशरीरत्वेन स्वाविनाभूतमर्जुनं मन्वानो विनाभूतमिव तं मत्वोपदेष्टुमर्हतीति समानोऽयं पर्यनुयोग इति ।

तन्न; श्रीभाष्यकृन्मते स्वशरीरित्वेन ब्रह्मवेदनमात्रस्य मोक्षोपायत्वानुपगमात् प्रीतिरूपापन्नविशदतमध्यानत्वावस्थस्यैव तस्याप्रयाणादावर्तनीयस्य खलु मोक्षोपायत्वमिष्यते । अतस्तन्मते अन्तिमप्रत्ययात्पूर्वमुपायपूर्त्यभावात् कथं कर्मतदधीनशरीरादीनां निवृत्तिरापादयितुं शक्येत । यतस्सशरीरत्वावस्थायामेव ब्रह्मविदामुपदेशयोग्यता न स्यादित्याशङ्क्येत । किं चाविद्याशब्दवाच्यानां कर्मणां मिथ्यात्वानभ्युपगमेन रज्जु सर्पादीनां रज्जुत्वादिज्ञानेनेव ब्रह्मज्ञानेनादृष्टमद्वारीकृत्य निवर्त्यत्वस्याप्रसक्त्या अदृष्टमुखेन चानारब्धकार्यनिवृत्तेरेव शास्त्रेण प्रतिपादनात् मोक्षोपायाधिगमेऽपि न प्रारब्धस्यापि निवृत्तिः प्रसज्येत । अद्वैतमते तु प्रारब्धं कर्म भुज्यमानमदृष्टं वा मिथ्यैवेति वैषम्यम् । अत एतन्मते निष्पन्नोपाया अनिष्पन्नोपाया वा ब्रह्मविदः स्वस्मादन्यत्वेन पारमार्थिकतया च निश्चिताय शिष्याय तत्त्वमुपदेष्टुमर्हन्त्येव । तथा भगवान् वासुदेवोऽपि अविनाभूतत्वेऽपि स्वभिन्नत्वेन निश्चितमर्जुनं प्रति तदविज्ञातं तत्त्वमुपदिदेश । न किंचिदिहानुपपन्नं नाम । न चाविनाभावोक्त्या एकत्वमप्युक्तं भवति; येनानुपपत्तिराशङ्क्येत ? शरीरात्मनोरविनाभावेऽप्येकत्वानुपगमात् भेदे च सति अविनाभावे विना भावे वा उपदेशे विशेषाभावात् । न चैवमद्वैते संगच्छत इत्यनुपदमुपपादितं अतो न दोषसाम्यशंकावकाशः ।

### प्रवचनविवादाद्यनुपपत्तेरद्वैतासाधारण्यम्

यच्चात्र शास्त्रदृष्ट्या ज्ञातस्य परोक्षस्यापरोक्षस्य वा न्यायविशेषोहापोहाभ्यां तत्त्वोपदेश इति समाधानं, तन्न साधु । भाष्यकारा अन्ये चाचार्याः स्थितप्रज्ञभावेनाप्रामाण्यज्ञानानास्कन्दितपटुतमतत्त्वज्ञानिन इत्येव

हि वस्तुस्थितिः स्वीक्रियते, न त्वविशदज्ञानिनो ज्ञानिनो वेति, तर्हि कथं तेषां मिथ्याभूताविद्यालेशानुवृत्तिः, शरीराद्यनिवृत्तिः, शिष्यादिभेदज्ञानं, उपदेशपाटवं; तत्सार्थक्यं वा ? कथं वेषामसंभवेऽप्युपदेशानुपपत्तिदूषणमदूषणमेवेति विदुषा भावयितुं शक्यं तस्मादद्वैतमताचार्याणामेवैयमद्वैतस्याज्ञान इव ज्ञाने सत्यपि प्रवचनाद्यनुपपत्तिः; नत्वन्येषाम् । एवं सिद्धान्तश्रावकाणामपि येषाम विद्यानिवृत्तिर्न दृश्यते तेषां शतशस्तत्त्वमसीत्यादिवाक्यश्रवणेऽपि तत्त्वज्ञानमेव न जातमित्यज्ञानानुमतिपक्ष एव तेषां प्रतिमतस्थैर्विवादेऽनर्हत्वं प्रसज्यते । प्रतिवादिभिरपि प्रतिक्षेपान्यथाऽनुपपत्त्या परिज्ञातत्वेनाभ्युपगन्तव्यस्य स्वोक्तवाक्यार्थस्य स्वेनापरिज्ञानवचनानौचित्यं च, न तु वेदान्तश्रवणात् ज्ञानोत्पाद पक्षे । अतः 'श्रीभाष्यप्रतिवादिनः कथं तत्पक्षं प्रतिक्षिपन्ति ? न तावदविदित्वैव, निराश्रयवादायोगात् । विदित्वा चेत् कथं तर्हि प्रतिवादिना विदिते तत्पक्षे तेषां ज्ञानानुपपत्तिः ? न हि स्वोक्तं परे जानन्ति वयं तु न विद्म इति स्वस्थैरभिधेय'मिति प्रत्यवस्थाय साम्यापादन मप्युन्मादविजृम्भितमेव । न हि वेदान्तवाक्यजन्यं स्वसिद्धान्तज्ञानं वेदान्तश्रावकाणामप्यनुवृत्ताविद्यानां न जातमेवेति श्रीभाष्यकृत्तदनुयायिनां मध्ये कश्चिदभ्युपैति, येनोक्तदोषसाम्यं तत्पक्षे प्रतीक्ष्येत । तत्पक्षे दोषप्रसक्तेरभावे च कुतः परिहारावश्यंभावः ? कथं वा ततः स्वपक्षदोषस्यापि परिहारलाभस्संभाव्येत ? तत्र यदेवोत्तरं श्रीभाष्यानुयायिनां तदेवोत्तरमद्वैतिनामिति हि नैर्भर्यमालम्ब्यते, तत् प्रामादिकमेव । अद्वैतिनामसाधारणोऽयमुक्तानुपपत्तिपरिहारभर इत्येव खलु प्रतिपत्तव्यम् ।

## निर्विशेषज्ञप्तेः वैशद्यायोगः

एवं विशदमुत्तरं; अविशदं पूर्वमित्युक्तिमात्रेण न निर्विशेषज्ञानस्य वैशद्यावैशद्यदौर्घटचस्फुटीकरणमपि प्रत्युक्तं भवति । नह्यविशदज्ञानानधिगतविशेषग्रहणमन्तरा साक्षात्कारत्वमात्रेण ज्ञानस्य वैशद्यमुपपादयितुं शक्यं; काचादिदोषदूषितचक्षुष्मतश्चाक्षुषज्ञानस्यापि विशदत्वापत्तेः । अतो विशेषग्रहणाभावे न वैशद्यं सुवचम् । वैशद्याभावे च समानविषयज्ञानेष्वेकस्याज्ञाननिवर्तकत्वमन्यस्यानिवर्तकत्वं च दुरुपपादमेव । प्रपंचितं चैतच्छतदूषण्यामेव । नचैवं श्रीभाष्यकृन्मतेऽपि प्रतिवक्तुं शक्यम् वेद्ये ब्रह्मण्यनन्तविशेषोप-

गमाच्छ्रवणादीनामेकब्रह्मविषयकत्वेऽपि तद्गतविद्याविशेषप्रतिनियत सकल-विशेषांशयुगपद्भानातिशयेन निदिध्यासने वैशद्यस्य सुवचत्वात् । निदिध्यास-नस्यैव च दर्शनसमानाकारस्य मोक्षसाधनतया विधानोपगमेन श्रवणादीनाम-विद्यानिवर्तकत्वाप्रसक्तेः—द्रष्टव्यो निदिध्यासितव्य इत्युभाभ्यामपि दर्शन-समानाकारध्यानस्यैकस्यैव विशिष्टविधिरिति पूर्वमेवोपपादितत्वाच्च ।

## सविशेषध्यानस्य वैशद्योपपत्तिः; सर्वौषधावघातन्यायप्रवृत्तिश्च

यत्पुनरुक्तं सविशेषविषयकध्यानस्य मोक्षसाधनादृष्टार्थत्वे सर्वौषधा-वघातवत्सकृदनुष्ठानतोऽपि तत्सिद्ध्यापत्या "आवृत्तिरसकृदुपदेशात्" "आप्रयाणात्तत्रापि हि दृष्ट" मिति सूत्रद्वयविरोधाद् व्रीह्यवहननवद् दृष्टार्थत्व-मेव वक्तव्यम् । तच्च भक्तेर्ज्ञानद्वारा मोक्षसाधनत्व एव सम्भवतीति साक्षात्का-ररूपमविधेयज्ञानमेव मोक्षसाधनमिति बृहदारण्यकभाष्यादौ व्यक्तमिति । तन्न । "तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशं"

**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतं ।**
**मच्चित्तस्सर्वदुर्गाणि मत्प्रसादात्तरिष्यति" ॥**

इत्यादि श्रुतिस्मृत्यनुरोधेनादृष्टद्वारकत्वोपगमेऽपि ध्यानोपासनादिशब्दानामा-वृत्तप्रत्ययविशेषरूढानामवहन्त्यादेरिवानावृत्तार्थवाचकताया अभावेन सर्वौष-धावघातन्यायस्याऽत्र प्रवृत्त्यसम्भवात् । तदुक्तं—"मुक्तिसाधनवित्तेः प्रत्यया-वृत्तिरूपचिन्तावाचिध्यानशब्दशक्त्या अनावृत्तिरूपत्वं निरस्तम् न्यायस्तु न वचनविरोध इति सर्वार्थसिद्धौ" । आवृत्तिरसकृदिति च ध्यानोपासन पर्यायवेदनशब्दोपदेशादेव ह्यसकृदावृत्तं वेदनं मुक्तिसाधनमिति निर्णीयते । एवं मुक्तिफलानियम इत्यव्यवहितपूर्वसूत्रप्रस्तुतमुक्तिफलकविद्याया एवात्रा-वृत्तिविधानात् । तत्र चोत्तरावधिरुच्यते "आप्रयाणा"दिति सूत्रेणेति न कश्चिद्विरोधः ।

## ध्यानस्य ध्येयप्रसादद्वारकं तत्साधर्म्यहेतुत्वं शंकराचार्याणामप्यनुमतं

"भक्तेर्ज्ञानजनकत्वमपि न साक्षात् परोक्षज्ञानाभ्यासेन तत्त्व-साक्षात्कारादर्शना" दित्यद्वैतसिद्धावेवोक्तेः । किन्तु तत्र प्रसादरूपादृष्टमेव

द्वारमिति वक्तव्यम् ज्ञानमूलसत्वशुद्धेरपि भगवत्प्रसादलभ्यत्वात् । तथा मुक्तिसाधनतायामपीत्यत्र प्रमाणशरणानां न विवादपदमस्ति । अत एव शङ्करभाष्येऽपि "पराभिध्याना त्विंति सूत्रविवरणे "तत्पुनस्तिरोहितं सत्परमेश्वरमभिध्यायतः ईश्वरप्रसादादाविर्भवती" तीश्वरध्यानस्य तत्साधर्म्याविर्भावहेतुत्वं तत्प्रसादद्वारकमेवेति स्फुटीकृतम् । तत्सिद्धं विधेयं निदिध्यासनमेवादृष्टद्वारा परममुक्तिसाधनमिति शारीरकसिद्धान्त इति । नन्वेवं शारीरके मुक्तिसाधनतया ब्रह्मोपासनस्यैव विवक्षितत्वोपगमे तस्यैव फलवत्तया प्रधानत्वमप्युपगन्तव्यम् । तत्प्राधान्योपगमे च शारीरकस्य साध्यधर्मप्रधानात्पूर्वतन्त्रान्न विषयतो विशेषस्स्यात् अविशेषे च ऐकशास्त्र्यवादिनां ब्रह्मजिज्ञासेति पृथक्प्रतिज्ञानमनर्थकमेव स्यात् । सिद्धधर्मरूपावान्तरविषयभेदाद्धि तत्सार्थक्यं ते मन्यन्ते । नचोपासनशेषतया सिद्धब्रह्मनिरूपणाच्छारीरकस्य सिद्धधर्मरूपविषयभेदसम्भव इति वाच्यम् । कर्मशेषतया दध्यादि सिद्धद्रव्यनिरूपणेन पूर्वतन्त्रस्यापि तदविशेषात् । स्वप्राधान्येन ब्रह्मणो निरूपणोपगमे तु ज्ञेयमात्रब्रह्मनिरूपणमेव शारीरके विवक्षितमित्यनुमन्तव्यं भवतीति चेन्न । मुक्तिसाधनादुपासनादुपास्यब्रह्मण एव मुक्तिप्रदत्वेन प्रधानतमत्वात् ।

## भूयस्त्वेन विषयभेदव्यपदेशः

पूर्वतन्त्रे सिद्धद्रव्यानुबन्धिविचारापेक्षया साध्यधर्मविचाराणां भूयस्त्ववच्छारीरके साध्योपासनविचारापेक्षया सिद्धब्रह्मविचारभूयस्त्वेन सिद्धधर्मविषयकत्वव्यपदेशोपपत्तेः । शङ्काविशेषनिरासकत्वेन ब्रह्मजिज्ञासा सूत्रस्यार्थवत्तरतायाः प्रागेव प्रदर्शितत्वाच्च । यानि च वाक्यानि प्राधान्येन ब्रह्मप्रतिपादकान्युच्यन्ते तेषां स्वरूपपरवाक्यानामपि निरतिशयानन्द ब्रह्मप्रतिपादनेन तादात्विकप्रयोजनसम्भवोपगमेऽपि न तावन्मात्रे विश्रमोऽभ्युपगम्यते । किन्त्वानन्दतया प्रतिपन्नतत्प्राप्तिरूपानन्तस्थिरफललिप्सातदुपायबुभुत्साक्रमेण तदुपासनविधायक वाक्यावधिरेव विश्रमो भाष्याभिमत इति सेश्वरमीमांसायां प्रादर्शि । अतश्शारीरके कुत्रापि ज्ञेयमात्र ब्रह्मनिरूपणं दुर्निरूपम् । एवं कृत्स्नमपि शारीरकप्रकरणं मुमुक्षूपास्य ब्रह्म तदनुबन्धिनिरूपणपरमेव हि दृश्यते । ज्ञानमात्रेण मोक्षसिद्धिपरञ्च न

किञ्चन सूत्राक्षरमस्ति । परन्तु "उपासात्रैविध्यात्" "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" "आवृत्तिरसकृदुपदेशात्" "लिङ्गाच्च" "ध्यानाच्चे" त्यादीनि सूत्राक्षराणि मुक्तिफलकं वेदनमुपासनात्मकं विधेयमेवेति स्फुटमावेदयन्ति ।

नचैवं सत्यथातो ब्रह्मोपासनेत्येव सूत्रे स्यात् न तु ब्रह्मजिज्ञासेत्युक्तं युक्तम्; उपासनापेक्षयोपास्यस्य ब्रह्मणः प्राधान्यस्य विचारबाहुल्यस्य च प्रदर्शितत्वेन ब्रह्मजिज्ञासेति सूत्रविन्यासस्यैव युक्तत्वात् । अन्यथा ज्ञानमात्रेण मुक्तिवादेऽपि अथातो ब्रह्मज्ञानमिति वा ज्ञानजिज्ञासेति वा सूत्रं स्यादित्यापत्तेरपरिहार्यत्वात् । ज्ञानस्याविधेयत्वान्न निर्देश इति चेत्तर्हि—ब्रह्मणोप्यविधेयत्वतौल्यान्निर्देशो माभूत् । ब्रह्मण एव ज्ञानमात्रेण फलसाधनत्वमित्यभिप्रायेण तन्निर्देश इति चेत्तथा ब्रह्मणएवोपासनविशेषेण फलसाधनत्वमित्याशयकल्पनयाऽपि यथाश्रुतसूत्रसङ्गमने न कश्चिदस्ति विरोधः । अत उपासनामोक्षसाधनत्वपक्षो न सूत्रानुमत इति निष्कर्षो निर्निबन्धनः ।

## तस्याभिध्यानादिति वाक्यतात्पर्यम्

"तस्यभिध्यानाद्योजनात्तत्वभावा" दित्यत्र तच्छब्दः प्रकान्तस्य प्रधानपुरुषयोरीश्वरस्य वाचकः । तत्त्वमीश्वरत्वं । भावः भावना । तत्राभिध्यानादित्यनेन वेदनमात्रव्यावृत्तिः । योजनादित्यनेन योगवचनेन स्मृतिविच्छेदव्यावृत्तिः । तत्त्वभावादित्यनेन चेश्वरत्वभावनाभिधायिना ऐक्यभावनाया व्यवच्छेदः । भूय इत्यनेनाप्रयाणमनुवर्तनीयत्वमुच्यते । तेन जीवन्मुक्तिनिरासः । अन्ते न केवलं शरीरावसाने किन्तु गत्यवसाने प्रकृतिमण्डलावसाने वा । सूक्ष्मप्रकृतिसंबन्धस्य गतावप्यनुवृत्तिश्रवणात् आप्रकृतिमण्डलं प्रकृतिसम्बन्धस्य दुस्त्यजत्वाच्च । विश्वमायानिवृत्तिःस्थूलसूक्ष्मप्रकृतिसम्बन्धनिवृत्तिः ऐहिकामुष्मिकप्रकृतिसम्बन्धसामान्यनिवृत्तिर्वा । अत एव विश्वपदस्यार्थवत्वम् । मायाशब्दः प्रकृतिवाची "मायां तु प्रकृतिं विद्या" दिति हि श्रूयते । तथा चानेन प्रकृतिपुरुषयोरीश्वरस्य ईश्वरत्वेनाविच्छिन्नध्यानसन्तानेनैव प्रायणान्तानुयायिना प्रकृतिमण्डलोपरितन देशविशेषप्राप्त्यनन्तरमेव प्रकृतिनिवृत्तिरूपपरममुक्तिर्भवति न तु वेदनमात्रात् । नाप्यैक्यगोचरात् । न वाऽस्मिन्नेव देश इत्युक्तं भवति । पूर्वत्रापि पृथ-

गात्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेती'' तिपृथक्त्वज्ञानस्य हीश्वरप्रसादद्वारा मुक्तिसाधनत्वमुक्तम् । अथवा तत्त्वभावादित्यत्र तत्त्वपदस्य पारमार्थिकाकारपरत्वे तस्य भावः आविर्भावः दर्शनसमानाकारं विशदतमं ध्यानं तस्मादित्यर्थः । अत एवा'भिध्यानमालम्बनसंशीलनं तत्त्वभावः तत्त्वसाक्षात्कार'; इति व्याख्यातारः । एवं सति साकारध्यानं, तत्रापि पारमार्थिकाकारगोचरमेव मुक्तिसाधनं न तु निर्विशेषविषयकं व्यावहारिकाकारगोचरं वेत्यवगम्यते । अन्यथा तत्त्वपदस्य निरर्थकतापत्तेः । तस्येतिपदान्वयत एवेश्वरविषयकत्वस्य लब्धत्वात् ।

वस्तुतस्तु अभिध्यानात् परभक्तिरूपात् योजनात्-अङ्गभूतात् प्रपदनादात्मसमर्पणात् । ''ओमित्यात्मानं युञ्जीते''ति हि श्रूयते । तत्त्वं-परतत्त्वं-परमात्मा । ''तत्त्वं पमात्मनि वाद्यभेदे स्वरूपे चे'' ति हैम इति सुधा । तस्य भावः अभिप्रायः प्रसादः मोक्षयिष्यामीति सङ्कल्पः; स चोपायारम्भे; तत्समापने पुनरन्यस्तथाविधस्संकल्पो भूयश्चेत्यनेनोच्यते । तथा च दर्शितं श्रुतप्रकाशिकायां—''उपासनारम्भप्रीतः परमात्मा तत्समाप्तावुपासकस्याघं क्षमिष्यामीति संकल्पयति समाप्तौ तु क्षान्त''मिति सङ्कल्पयतीत्यादिना । तस्माद्वारभूताद्विश्वमायानिवृत्तिः ।

**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।**
**तमेव शरणं गच्छ सर्वभावेन भारत ॥**

तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्'' इतिहि गीयते । तथा च मायानिवृत्तेस्साधनमीश्वराभिध्यानमङ्गप्रपदनेन द्वारभूतभगवत्प्रसादनेन च सहात्र प्रतिपाद्यते । तस्येति षष्ठ्यन्तस्य विषयसमर्पकतयाऽभिध्यानादिनान्वितत्वादाश्रयसमर्पकतया तत्त्वपदप्रयोग इत्यर्थैक्येऽपि न पुनरुक्तिः । अन्ते विश्वपदार्थप्रयोजनानि पूर्वोक्तान्येव ।

एतेनाभिध्यानशब्दितध्यानस्यैव भगवत्प्रसादद्वारा मोक्षसाधनत्वविवक्षायां दूरान्वयविश्वशब्दवैयर्थ्यादिप्रसङ्ग इत्युक्तमपि प्रत्युक्तं । असम्बन्धिपदव्यवधाने हि दूरान्वयदोषः । प्रकृते चाङ्गद्वारबोधकतया सम्बन्धित्वमेवेत्युक्तप्रायम् । तथा विश्वादिपदप्रयोजनञ्च प्रकृतिमण्डलातिलङ्घिनामेव सर्वमायामुक्तिरिति सूचनेनेत्यपि । तत्सिद्धं पुरुषप्रयत्नसाध्य-

सविशेषोपासनपरममुक्तिसाधनत्वपक्ष एव सकलश्रुतिस्मृतिसूत्राक्षर-स्वारस्यसिद्धिनिरूपणादविधेयज्ञानमुक्तिसाधनत्वसाधकं न किञ्चिदपि प्रमाणमवशिष्यत इति। न केवलं तत्र साधकाभावः किन्तु परिदृश्य-मानोपदेशश्रवणादिसम्प्रदायविच्छेदप्रसङ्गादीनि बाधकानि च भूयांसि परि-हर्तुमशक्यानीत्युक्तम्।

---

# बाधितानुवृत्तिभङ्गवादः

## प्रायणान्तध्यानोपायत्ववादिनां नोपदेशाद्यनुपपत्तिः

एतेन "उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन"—इति तत्त्वसाक्षात्कारवतामप्युपदेष्टृत्वं गीतवता भगवतैव निवृत्ताविद्यानां श्रावकत्वानुपपत्तिमापादयन्तश्शतदूषणीकाराश्शिक्ष्यन्त इत्युक्तमपि निरस्तम्। तत्र योगजतत्वदर्शनवतां दर्शनसमानाकारतत्वज्ञानवतांवा प्युपदेशौपयिकशरीरेन्द्रियादिसद्भावसूचनेन वाक्यजन्याविधेयज्ञानमात्रादेव सर्वमुक्तिवादिनामद्वैतिनां पक्ष एव दण्डनिपातनात्। न हि शतदूषणीकृतां पक्षे दर्शनसमानाकारतत्त्वज्ञानिनामपि प्रायणात्पूर्वमुपायपरिपूर्तिः। अत एव न तदा मुक्तिप्रसक्तिः; नवा शरीराद्यनुवृत्यनुपपत्तिः कुत एव ह्युपदेशानुपपत्तिसाम्यापादनावकाशः। ननु तर्ह्यनुवृत्ताविद्यानामेवोपदेष्टृत्वमित्यायातं तत्र च "ज्ञानिनस्तत्त्वदर्शिन" इति गीतं विगीयत इति चेन्न। अविद्यापदेन कर्मविवक्षायामनुवृत्तकर्मणां तत्त्वज्ञाने विरोधाभावात्। अज्ञानविवक्षायां तत्त्वज्ञानिनां तदनङ्गीकारात्। न ह्यद्वैतमत इवाज्ञानोपादानकमस्मन्मतेऽपि शरीरादिकमिष्यते। येन तदविनाभाव इहाप्याशङ्क्येत। किन्तु पारमार्थिकभूतसंघसंस्थानरूपमेवास्मदादिशरीरं कर्मविशेषाधीनोत्पत्यनुवृत्तीति स्वसत्तया तत्सद्भावस्यैव गमकं स्यात् तच्च न विरुद्धमित्यवोचाम।

नचैवमद्वैतमते सम्भवति तत्त्वदर्शने सत्यविद्यातत्कार्यशरीरादिरूपमिथ्याभूताभिमतप्रपञ्चनिवृत्तेरनभ्युपगमायोगात्। न च श्रुतमततत्त्वा एव तत्त्वदर्शिपदेनात्र विवक्ष्यन्त इति वक्तव्यमिति वाच्यम्। अस्मन्मते दृष्टतत्त्वविवक्षायामप्युपपत्तेर्दर्शितत्वात्। अन्यथा ज्ञानिन इत्यनेनैव तल्लाभसम्भवेन तत्त्वदर्शिन इत्यस्यानर्थक्यापत्तेः। परोक्षेणापि मिथ्याभूतशरीरादिप्रतिभासानुपपत्तितादवस्थ्याच्च। एतेनापरोक्षजातीयनिर्विचिकित्सपरोक्षज्ञानिनोऽनिवृत्ताविद्या अजीवन्मुक्ता एव अद्वैतमतेऽपि श्रावका भवितुमर्हन्तीत्युक्तमप्यपास्तम्। अपरोक्षजातीयज्ञानस्य विशदत्वावश्यम्भावेन तेनाप्यबाधितत्वे अविद्यातत्कार्यादेर्मिथ्यात्वाभ्युपगमानुपपत्तेश्च। अतो मिथ्यावादि-

भिरविशदेन विशदेन वा तत्त्वज्ञानेन परोक्षेणापि विश्वबाधोऽवश्यमभ्युपगन्तव्य एव। अभ्युपगते च बाधे व्यवहारोपपत्तये पुनरनुवृत्तिमपि ते मन्यन्ते। तत्र व्याघातमावेदयितुं बाधितत्वे कथमनुवृत्तिः तस्यां वा तत्कथमिति पृच्छयन्ते शतदूषण्याम्।

## अद्वैतमते बाधितानुवृत्तिस्वरूपम्

तथाह्याहुः—बाधितमपि मिथ्याज्ञानं द्विचन्द्रज्ञानवत्संस्कारवशात्किञ्चित्कालमनुवर्तत एवेत्यनारब्धकार्याधिकरणे अद्वैतभाष्यकृतः—"निश्चितेऽपि प्रमाणात्तत्त्वे सर्वत्र मिथ्यावभासा निवर्तन्ते हेतुविशेषादनुवर्तन्तेऽपि यथा द्विचन्द्रदिग्विपर्यासादयः आप्तवचनविनिश्चितद्विचन्द्रदिक्तत्त्वानां"। तथा "निर्विचिकित्सादाम्नायादवगतात्मतत्त्वस्यानादिमिथ्यादर्शनाभ्यासोपचित बलवत्संस्कारसामार्थ्यान्मिथ्यावभासानुवृत्ति" रिति ब्रह्मसिद्धिकाराः। "तत्त्वे ज्ञाते द्विचन्द्रादिवद्दोषाद्बाधितानुवृत्तिसम्भवाच्चे" त्यद्वैतसिद्धिः। तथा तत्रैव—"संस्कारः कार्यो ध्वंस इव निरुपादानकः अविद्येव च शुद्धात्माश्रित इति नाविद्यासापेक्ष" इति च। एतैश्च वाक्यैस्तत्त्वज्ञानबाधितस्यापि मिथ्याभेदावभासादेरविद्यानिवृत्तावपि तत्संस्कारदोषात्तिमिरादि दोषाद्द्विचन्द्रादेरिवानुवृत्तिः अद्वैतमते बाधितानुवृत्तिरिति हि स्फुटमवगम्यते। संस्कारपक्षे च बाधिताविद्याया नानुवृत्तिः ध्वंस इव निरुपादानक इत्यनेन प्रवृत्तवाक्येनाविद्याननुवृत्तेः स्फुटीकृतत्वात्। अन्यथा क्रियाज्ञानातिरिक्ताया अपि तस्यास्संस्कारसाधनप्रयासवैयर्थ्याच्च।

## पुरोवाद एव व्याहत इति वर्णनं द्विचन्द्रज्ञानवैषम्यञ्च

एतेन बाधितस्य भेदप्रतिभासादेरनुवृत्तिर्न बाधितानुवृत्तिः। अद्वैतमते तत्त्वज्ञानेनाविद्यैवांशविशेषेण बाध्यते न तु भेदप्रतिभासादिः। बाधितश्चानुवर्तते भेदप्रतिभास इत्यनुवादो व्याहतानुवादः न सत्यानुवादः। अनुवृत्तिस्तु देहप्रतिभासादेरविद्यायाश्शेषेण लेशेन वाऽनुवर्तमानेन तद्वासनया वा संस्काराख्ययेति न भेदप्रतिभासाद्यनुवृत्तिविरोध इत्युक्तं प्रत्युक्तम्। उपदर्शिताद्वैतभाष्यसिद्ध्यादिवाक्येन भेदप्रतिभासस्यैव बाधितस्य दोषात्पुनरनुवृत्तिवचनेन तथाऽनुवादस्य व्याहतत्त्वायोगात्। व्याहतस्य

पुरोवादस्यायमनुवाद इत्यत एव व्याहतानुवाद इति वक्तव्यम् । न च द्विचन्द्रप्रतिभासस्येव बाधितस्यापि प्रपञ्चप्रतिभासस्यानुवृत्तिवचने कथं व्याहतिरिति वाच्यम् । तत्र चन्द्रैकत्वज्ञानाबाध्य पारमार्थिकतिमिरादि दोषसद्भावेन तद्बलाद् द्विचन्द्रप्रतिभासस्यान्यस्य पुनरनुवृत्तावपि प्रकृते ब्रह्मैकत्वज्ञानाबाध्यब्रह्मातिरिक्तदोषानभ्युपगमेन ततो बाधितशरीरादि-प्रपञ्चभेदप्रतिभासानुवृत्तेरनुपपत्तेः । न चेहाविद्यासंस्कार एव तादृशो दोष इति वाच्यम् । निरुपादानकभावकार्यानङ्गीकारात् ।

## विनोपादानं वासनानुपपत्तिः

न च निस्सारितपुष्पायां सम्पुटिकायामुपादानमन्तरेणापि वासनानु-वृत्तिर्दृश्यत इति वाच्यम् । गन्धसंस्कारयोर्वासनापदबोध्यत्वेऽप्युभयोरत्यन्त-विलक्षणत्वाद्धेतोस्सद्भावकाल एवानुवृत्त एकः नाशकाल एवापरः । अत एव तत्र वायूपनीतकर्पूराद्यवयववत्सूक्ष्मपुष्पावयवरूपोपादानस्यापि यावद्वासनानु-वृत्त्यभ्युपगमान्न विनोपादानं वासनाऽनुवर्तते । न च प्रक्षालितेऽपि लशुनभाण्डे तद्वासनानुवृत्तेर्न वासनाया उपादानाविनाभाव इति वाच्यम् । प्रक्षालनेनाप्यन पगतस्य लशुनांशस्यातिसूक्ष्मस्य तत्रापि वासनाबलेनानुवृत्त्यवधारणात् ।

## परोक्तसंस्कारानुमानस्यानैकान्त्यम्

न च विमतो नाशस्संस्कारव्याप्तः संस्कारनाशान्यत्वेसति नाशत्वात् ज्ञाननाशवदित्यनुमानादेव निवृत्ताविद्यायास्संस्कारसिद्धिरिति वाच्यम् । उपेक्षात्मक ज्ञाननाशादौ व्यभिचारेण व्याप्त्यसम्भवात् । तथा अनारब्धकार्य-कर्मणां नाशे संस्कारानभ्युपगमाच्च । तदुक्तं ब्रह्मसिद्धौ—"अनारब्ध-कार्याणामलब्धवृत्तीनामेव निवृत्तत्वान्नास्ति तत्संस्कार" इति । तस्य च ब्रह्मातिरेकानतिरेकसत्यमिथ्यात्वनाश्यत्वानाश्यत्वादिविकल्पासहतायाश्श-तदूषण्यामेव प्रपञ्चितत्वाच्च । न च तत्र मिथ्यात्वकल्प एव परिगृह्यत इति वाच्यम् । तर्ह्यविद्यया सहैव तस्यापि ब्रह्मव्यतिरिक्तमिथ्यात्वश्रवणादिनैव नाशापत्तेरनिवार्यत्वात् । अन्यथा पश्चादपि हेत्वभावेन तन्नाशानुपपत्त्या अनिर्मोक्षापत्तेः । न च तस्य दग्धेन्धनादिवदन्त्यशब्दादिवच्च स्वयमेव नाश इति वाच्यम् । नाशं प्रति प्रतियोगिमात्रस्य हेतुत्वे द्वितीयक्षण एव

नाशापत्तेः । नचास्य संस्कारस्य क्षणिकत्वमिष्टं यावच्छरीरपातमनुवृत्तेरेष्ट-व्यत्वात् । अन्त्यशब्दादेस्तु क्षणिकत्वोपगमेऽपि न विरोधः सहकार्यन्तरमपि तत्र कालविशेषभगवत्सङ्कल्पादिकमस्तीति दर्शितम् ।

### वध्यघातकयोस्तादात्म्यानुपपत्तिः

न च कालेश्वरसंकल्पादिसाधारणकारणमात्रेणान्त्यशब्दादिनाशोपगमे सर्वत्र नाशस्य तथैवोपपत्त्या मुद्‌गराद्यभिघातघटादि भावेन लोकसिद्धनाश्यनाशकव्यवस्था लुप्येतेति वाच्यम् । तत्रापि सामान्यकारणमात्रेण नाशानुपगमात् । प्रतियोगिव्यक्तिरूपविशेषकारणसद्भावस्य तत्राप्यभिमतत्वात् । प्रतियोगिमात्रकारणकत्वव्यवच्छेद एव ह्यत्र प्रतिपिपादयिष्यते । क्वचिद्विशेषकारणादर्शनात्सामान्यकारणमात्रेण कार्योपगमेऽपि सर्वत्र तथाऽभ्युपगमे निर्बन्धाभावात् । अन्यथा अन्त्यशब्दादेः स्वयमेव नाशोपगमे सर्वस्यापि तथाऽभ्युपगप्रसंगस्याऽपि दुर्वारत्वापत्तेः । नचैवमविद्यासंस्कारस्यापि कालविशेषादिकमुक्तदिशा नाशकमिति वक्तुं शक्यमिति वाच्यम् । ज्ञानेतरनिवर्त्यत्वोपगमे मिथ्यात्वानुपपत्तेः । तदुक्तं—"कुतस्तर्हि तन्निवृत्तिः न तावददृष्टादेः तथा सति ज्ञानबाध्यत्वाभावेन सत्यत्वप्रसङ्गा"दिति ।

### शतदूषणीकृतां मते न तत्प्रसक्तिः

यत्तु "दहननाश्यावस्थापन्नस्येन्धनस्य दहननाशकत्वे नाश्यनाशकैकत्वापत्तेश्शतदूषणीप्रयुक्तायाः कृत्यायाः तत्कबलयितृत्वापत्तेरित्युक्तं" तत्त्वनवबोधविलसितम् । अवस्थान्तरापन्नेन्धनस्य दहननाशकत्वं शतदूषण्यामुक्तमित्युपगमेऽपि दहनेन्धनयोर्भिन्नत्वेन नाश्य नाशकैकत्वापत्तेरप्रसक्तेः ।

न च वध्यघातकयोस्तादात्म्योपगम इव वध्यवध्येन घातकस्य तादात्म्योपगमेऽपि व्याघातस्तुल्यः; स्वनाश्येन स्वनाशायोगात् दहननाश्यावस्थापन्नेन्धनेनैव दहननाशोपगमादिति वाच्यम् । शतदूषण्यां तथाविधाभ्युपगमसूचकवाक्यलेशस्याप्यनुपलम्भात् । न च तत्रापि तत्तदवस्थान्तरकालविशेषादि सामग्रीसहितपरमेश्वरसंकल्परूपस्य कारणस्यास्माभिरभ्युपगमादिति वाक्ये तत्तदवस्थान्तरपदेन भस्मीभावाद्यवस्थाया अपि कारणत्वाभिधानादुक्त दोषो दुस्त्यज इति वाच्यम् । भस्मीभावाद्यवस्थाया दहनादिनाशसामग्री-

घटकत्वोपगमेऽपि तस्या दहनाद्युत्पाद्यत्वेन तदवस्थापन्नस्येन्धनस्वरूपस्यापि दहनादिनाश्यत्वायोगेनोक्तदोषाप्रसक्तेः। सहकारिनिरपेक्षस्य स्वस्यैव स्वनाशकत्वोपगमे प्रयुक्तस्य दोषस्य सापेक्षनाशकाभ्युपगमेऽपि प्रसञ्जयितुमशक्यत्वाच्च।

यत्तु—ईश्वरसंकल्पादेरन्त्यशब्दाग्न्यादिनाशकत्वोपगमे दुष्टशिक्षणाद्यर्थं भगवदवतारवैयर्थ्यापत्तिरिति।

तन्न; प्रतियोगिमात्रस्य नाशकत्वोपगम एव तदापत्तेरनिस्तारात्। साधुपरित्राणप्रधानत्वाच्च भगवदवताराणाम्।

## संस्कारस्य तत्त्वज्ञाननाश्यत्वानुपपत्तिः

न च संस्कारादेस्स्वयं नाशपक्षे न तावदस्माकमादरः; किं तु तत्त्वज्ञानेनैव क्रमेण तन्नाश इत्यत्रैव अत एव तत्त्वदर्शनादेव क्रमेण तस्यापि निवृत्तेः; स्वयमेव वेति ब्रह्मसिद्धौ स्वयंनाशपक्षे वाकारोऽनास्थायामिति वाच्यम्। तत्त्वदर्शनादेव संस्कारस्य नाशोपगमे अविद्यया सहैव निवृत्त्यापत्त्या तन्नाशानन्तरमनुवृत्त्यनुपपत्तेः। न चादेहपातमभ्यस्यमानश्रवणमनननिदिध्यासनाधीनाविच्छिन्नसाक्षात्कारेणैवाविद्यासंस्कारनिवृत्तिरिति वाच्यम्। मिथ्याभूतानां प्राथमिकेन तत्त्वज्ञानेन तत्त्वसाक्षात्कारेण वा दृष्टविधया निवर्त्यत्वावश्यंभावे देहपातपर्यन्तं श्रवणाद्यावृत्तावर्थाभावात्।

न च यथा दिङ्मूढस्याननुसंहिताप्तवचसः प्रागिव प्रवृत्तिदर्शनं; यथा च प्रमितरज्जुभावायामपि रज्ज्वां प्रमाणाननुसंधाने सर्पभ्रान्तिभयदर्शनं तथा जातेऽपि प्रमाणात् तत्त्वदर्शनेऽनादिमिथ्यादर्शननिष्पन्नदृढतर संस्कारोच्छेदाय तत्त्वदर्शनाभ्यासस्सार्थक इति वाच्यम्। दिङ्मोहसर्पभ्रमादौ बाधकज्ञानाबाध्यपूर्वदोषानुवृत्त्या पुनः भ्रमसंभवेऽपि ब्रह्मैकत्वसकृद्दर्शनेनैव तद्विरुद्धमिथ्याभूतविश्वबाधावश्यंभावेन दोषशेषाभावात् भ्रमानुपपत्तेरभ्यासवैयर्थ्यात्। न च "तस्याभिध्यानादिति श्रुतिस्तत्र प्रमाणमिति वाच्यम्। तत्र निवर्त्त्यपरतया मायाशब्दस्य प्रयोगेऽप्याश्चर्यादिनिमित्तेन देवमायेव निर्मितेत्यादाविव सत्यार्थपरताया अभ्युपगन्तव्यत्वात्। अन्यथा भूयश्चान्त इत्यादेरनुपपत्तेः। निवर्त्यमिथ्यात्वे तत्त्वसाक्षात्कारादनिवृत्तस्य शरीरपातान्ते

निवर्तनीयस्य कस्यचिन्मिथ्याभूतस्य निर्वक्तुमशक्यत्वात् । सत्यार्थेषु तु ज्ञाननिवर्त्यत्वानियमात् भोगेनापि कस्यचिन्निवृत्तिर्युज्यते ।

## अद्वैते तत्त्वदर्शिनामविद्यालेशाद्यनुवृत्त्यनुपपत्तिः

एतेनाविद्याया आवरणांशमात्रस्य तत्त्वज्ञानेन निवृत्तावपि विक्षेपांशस्य तन्निबन्धनदेहादिप्रतिभासादेश्चादेहपातमनुवृत्तिरिष्यते । तथा आवृत्तिरसकृदुपदेशात् आप्रयाणात् तत्रापि हि दृष्टमिति न्यायाभ्यां श्रवणमनननिदिध्यासनाभ्यासतदधीनात्मतत्त्वसाक्षात्कारावृत्तेश्च प्रारब्धभोग समाप्तिपर्यन्तमनुवृत्तिः । अनारब्धकार्ये एव तु तद्दर्शनात् भोगेन त्वितरे क्षपयित्वाऽथ संपद्यते इत्यतः प्रारब्धकर्मणां भोगनैव क्षपयितव्यत्वाभिधानादित्युक्तमपि प्रत्युक्तम् । तत्त्वज्ञानिनां तत्रापि तत्त्वसाक्षात्कारवतां मिथ्या भूताविद्याया अंशतोऽप्युनुवृत्तेरयोगात् । न हि रज्जुतत्त्वसाक्षात्कारवतां सर्पाम्बुधारादिकमंशतो वाऽप्यनुवर्तत इत्युपेयते । अतस्तेषां देहादिप्रतिभासादेरनुवृत्तिरद्वैतमते नोपपद्यते । अत एव प्रारब्धभोगसमाप्तिपर्यन्तं श्रवणादिसाक्षात्कारान्तानामावृत्तिकल्पने च न प्रयोजनं प्रमाणं वा वक्तु शक्यम् ।

आप्रयाणात् तत्रापि हि दृष्टमित्यस्यापि अभ्युदयफलकोपासनमात्रपरता हि शङ्करभाष्ये प्रदर्शिता । तत्र यानि तावत् सम्यग्दर्शनार्थानि उपासनानि तान्यवघातादिवत् कार्यपर्यवसानानीति ज्ञातमेवैषामावृत्ति परिमाणमित्यादिनाऽनियोज्यब्रह्मात्मत्वप्रतीतेः शास्त्राविषयत्वाभिधानात् । एवमद्वैतसाक्षात्कारे सति कर्तृकर्मादिप्रविलयस्याविशेषात् प्रारब्धकर्मणामपि मिथ्यात्वात् विनाशो दुर्निवारस्स्यात् । न चानाश्रित्यैवारब्धकार्यं कर्माशयं ज्ञानोत्पत्तेरनुपपत्तेरुपजीव्यतया प्रारब्धविपाकानां कर्मणां प्राबल्यात् न ज्ञानेन नाश इति वाच्यम् । सर्वप्रपञ्चोपजीव्यामविद्यामेव नाशयतस्तत्त्वज्ञानस्य तदपेक्षयाऽपि प्राबल्यावश्यंभावात् ।

## कुलालचक्रभ्रमणाद्यनुवृत्तिवैफल्यम्

न चारब्धकार्याणां निमित्तविगमेऽप्यन्तराले प्रतिबन्धासंभावात् कुलालचक्रभ्रमणवदनुवृत्तिः । वस्तुसतामनुवृत्तिसंभवेऽपि मिथ्याभूतानां बाधे

तदसंभवात् । अत एव हि स्वाप्नकुलालचक्रभ्रमणस्य द्वितीय क्षण एव प्रबोधेन बाधितस्य नानुवृत्तिर्दृश्यते । न च रज्जुसर्पभ्रमजनिता भयकम्पादयो निवृत्तेऽपि भ्रमे यथाऽनुवर्तन्ते तथेहापीति वाच्यम् । तत्र सर्पाद्यसत्वेऽपि तज्ज्ञानभयकम्पादीनां वस्तुतस्सत्त्वेन निवृत्तेऽपि निमित्ते ज्ञानेऽनुवृत्त्युपपत्तेः ।

न च भयकम्पादिहेतोः ज्ञानस्यानिर्वचनीयसर्पाद्यवच्छेदेनानिर्वचनीयत्वात् न वस्तुतस्सत्त्वमिति वाच्यम् । तथासति अविद्यातत्प्रयुक्तावगाहिनस्साक्षिणोऽप्यद्वैतमतेऽनिर्वचनीयत्वापत्तेः । सर्पादेरनिर्वचनीयत्वोपगमेऽपि नायं सर्प इति बाधवत् तदनन्तरं न मे सर्पज्ञानमप्यभूदिति बाधानुदयेन तज्ज्ञानस्यानिर्वचनीयत्वासिद्धेश्च । प्रतीतिबाधाभ्यामेव हि तत्साध्यते । अन्यथा ब्रह्मणोऽप्यनिर्वचनीयत्वापत्तेः । अतो वस्तुसत एव हेतोर्वस्तुसत एव भयकम्पादिकार्यस्योत्पादात् तत्र निमित्तविगमेऽपि तदनुवृत्तिरुपपद्यते ।

## तस्य तावदेवेति श्रुतिवाक्यानारब्धकार्याधिकरणयोः मिथ्यावादविरोधिता

न चैवं प्रारब्धफलानामपि कर्मणां तत्त्वसाक्षात्कारानन्तरमनुवृत्तिः प्रपञ्चमिथ्यात्ववादिनामुपपद्यते । तस्मादनारब्धकार्याधिकरणस्याद्वैतिनामत्यन्त विरुद्धत्वात् न तन्न्यायेन मिथ्याभूताविद्यांशतत्संस्कारतत्कार्यादेस्तत्त्वदर्शनानन्तरमनुवृत्तिसिद्धिः । नापि तस्य तावदेव चिरमिति श्रुतिवाक्येन तत्सिद्धिः । तत्र सत्संपत्तेश्शरीरपातावधिविलम्बविधानेन शरीरतदारम्भकर्मादीनां ज्ञाननिवर्त्यत्वाभावज्ञापनेन सत्यत्वसूचनात् न हि तेन मिथ्याभूतानामपि बाधके सत्यनुवृत्तिसिद्धेः प्रसक्तिः ।

ननु श्रुतिस्मृतीतिहासपुराणादिषु हिरण्यगर्भादीनां तत्त्वसाक्षात्कारः महाकल्पादिकालजीवनं च श्रूयते । लोके च क्वचित् चन्द्रैकत्वे ज्ञातेऽपि द्विचन्द्रज्ञानमपि कंचित्कालमनुवर्तमानं दृश्यते । अतस्सर्वत्र बाध्यबाधकयोः कालविशेषेऽपि न सहानुवृत्तिरिति न नियमः कंचित्कालमुक्तस्थले सहानुवर्तमानमपि बाध्यं क्रमेण बाधकेन बाध्यत एवेति दृष्टश्रुतानुगुण्येन विश्वसनीये तत्त्वज्ञानेन प्रारब्धनाशस्य विलम्बे तस्य तावदेवेत्यनेनावधिविशेषाधिगमेऽपि तत्सत्यत्वासिद्ध्या मिथ्याभूतानामेवानुवृत्तिरिह विवक्षितेत्यभि-

धानेऽपि विरोधाभाव इति चेत्; न । बाधे सत्यपि अबाधितहेतुबलेन द्विचन्द्रादिप्रतिभासस्यानुवृत्तावपि तथाविधहेत्वभावात् तत्त्वदर्शनबाधितशरीरादिप्रपञ्चप्रतिभासानुवृत्तेरनुपपत्तेः ।

## पूर्वमबाधकस्य तत्त्वदर्शनस्य पश्चादप्यविशेषादबाधकत्वम्

शरीरादेः पातात्पूर्वमबाधे च प्रथममबाधकेन तत्त्वदर्शनेन तज्जातीयेन वा पश्चादप्यविशेषेण बाधितुमशक्यत्वात् । न च प्रतिबन्धाकाभावसहकारासकाराभ्यां विशेषोऽस्तीति वाच्यम् । तत्त्वदर्शनेनाज्ञानस्य तत्कार्यस्य मिथ्याभूतस्य वा निवर्तने सहकार्यनपेक्षणात् । न हि रज्जुदर्शनेन तदज्ञानस्य सर्पादिप्रतिभासस्य वा निवर्तने क्वचित् प्रतिबन्धकाभावप्रतीक्षया विलम्बो दृश्यते । प्रतिबन्धकत्वेनाभिमतस्य च मिथ्यात्वे तस्य प्राथमिकतत्त्वदर्शनबाधितत्वावश्यंभावेन तदभावसहकाराय न शरीरपातपर्यन्तप्रतीक्षया भाव्यम् ।

सत्यत्वोपगमे च तदपेक्षया शरीरतत्प्रतिभासतद्धेत्वादेरेव सत्यत्वोपगमस्साधीयान् किं प्रतिबन्धककल्पनागौरवेण । अद्वैतहानेरुभयथाऽप्यविशेषात् । अत एव भगवान् सूत्रकारः 'भोगेन त्वितरे क्षपयित्वेति शरीरादिहेतुभूतानां प्रारब्धकर्मणां भोगेनैव क्षपणमाह न तु तत्त्वदर्शनेन । यत्पुनस्तत्त्वज्ञानेन न निवर्तते तत्कथं मिथ्येति प्रतिपादयितुं शक्यते । ज्ञाननिवर्त्ये हि लोके मिथ्यात्वसंप्रत्ययः । अत एव ज्ञानाविनाश्येन प्रारब्धकर्मणा हिरण्यगर्भादयोऽपि तत्त्वदर्शिनो यावदधिकारं ज्योग्जीवन्तोऽवतिष्ठन्त इति श्रुतिस्मृतिपुराणाद्युपपत्तिः ।

## संस्कारशरीरादेः ज्ञाननिवर्त्यत्वाभावान्मिथ्यात्वानुपपत्तिः

एतेनाविद्यासंस्कारलेशादेः स्वत एव नाशपक्षेऽपि सदसद्विलक्षणत्वादिना मिथ्यात्वमुपपद्यते । तथा भुज्यमानादृष्टाभावसहकृतसाक्षात्कारनिवर्त्यत्वोपगमे ज्ञाननिवर्त्यत्वरूपमिथ्यात्वमपीत्युक्तमपास्तम् । लोके ज्ञाननिवर्त्यत्वाभावे मिथ्यात्वादृष्टेः तन्मिथ्यात्ववचनस्य पारिभाषिकत्वापत्तेः । भुज्यमानादृष्टस्यापि मिथ्यात्वेन तदभावसाहित्यस्य तत्त्वदर्शने द्वितीयक्षण एव संपत्तेश्च ।

यत्तु—ज्ञाननिवर्त्यत्वमिथ्यात्वप्रकरणे लघुचन्द्रिकायां ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वं मिथ्यात्वमिति वाक्यविवरणावसरे ज्ञानप्रयुक्तनाशप्रतियोग्यज्ञानतत्संस्कारान्यतरत्वं, ज्ञानप्रयुक्तनाशप्रतियोग्यज्ञानत्व-तत्प्रयुक्तत्वान्यतरत्वं वा मिथ्यात्वमिति व्याचक्षाणाः ब्रह्मानन्दसरस्वत्योऽपि अज्ञानसंस्कारस्यापि ज्ञानप्रयुक्तनाशप्रतियोगित्वं विवृण्वत इति। तदतिस्थवीयः—मुद्गरपातनिवर्त्यस्य घटादेः यस्स्वरूपेणावस्थितिविरहस्तस्य ज्ञानप्रयुक्तत्वाभावेन ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वस्य तत्राव्याप्तत्वात्। तथा ज्ञानप्रयुक्तनाशप्रतियोग्यज्ञान, तत्संस्कारान्यतरत्वस्य शरीरपातात्पूर्वं तत्त्वदर्शनाधीनाविद्यानाशानन्तरानुवर्तमानतत्संस्कारे तत्त्वज्ञानप्रयुक्तनाशप्रतियोगित्वाभावेन शुक्तिरूप्यघटादौ चान्यतरत्वाभावेनाव्याप्तिस्स्यात्। ज्ञानप्रयुक्तनाशप्रतियोग्यज्ञानत्व-तत्प्रयुक्तत्वान्यतरत्वं तु अज्ञानत्वादिधर्ममात्रविश्रान्तं सत् अज्ञानादिकमेव न व्याप्तुं प्रभवति किमुत तदितरप्रपञ्चम्।

ननु ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वमित्यत्र प्रयुक्तपदस्य व्यापकपरतया अधिष्ठानतत्त्वज्ञानव्यापको यो योऽवस्थितिसामान्यस्य स्व-स्वीयसंस्कारान्यतरस्याभावस्तत्प्रतियोगित्वं विवक्षितम्। व्याप्यतावच्छेदकसंबन्धस्तादात्म्यं; व्यापकता तु स्वप्रतियोगिसमानविषयकत्व स्वप्रतियोगिप्रयोजकाज्ञानसमानविषयकत्वान्यतर कालिक स्वाधिकरणकालपूर्वत्वान्यतर उभयसंबन्धेन। ज्ञानोत्पत्तिकाल एवाज्ञाननिवृत्तेरनुभवात्। उक्ततत्त्वज्ञानं प्रति स्वप्रतियोगिसमानविषयकत्वकालिकोभयसंबन्धेन व्यापको योऽज्ञानतत्संस्कारान्यतरत्वावच्छिन्नाभावः तत्प्रतियोगित्वादज्ञानतत्संस्कारयोः मिथ्यात्वोपपत्तिः।

स्वप्रतियोगिप्रयोजकाज्ञानसमानविषयकत्वस्वाश्रयकालपूर्वत्वोभयसंबन्धेन व्यापकीभूतमज्ञानप्रयुक्ततत्संस्कारान्यतरत्वावच्छिन्नाभावमादाय तत्प्रतियोगितयाऽज्ञानप्रयुक्ततत्संस्कारयोरपि मिथ्यात्वसमन्वयः। अतो नाज्ञानतत्प्रयुक्ततत्संस्कारेष्वव्याप्तिप्रसक्तिरिति चेत्—

न—जीवन्मुक्ततयाऽभिमतस्य तत्त्वदर्शनेऽपि संस्कारानुवृत्त्या उक्तान्यतरत्वावच्छिन्नाभावानुपगमेन व्यापकत्वानुपपत्तेस्तत्राव्याप्तेः। व्याप्यकोटौ पटुतमसंस्कारसाहित्यादिविशेषणाभ्युपगमे वेदनमात्रेणैव मुक्तिरिति सिद्धान्त-

विरोधस्य दर्शितत्वात् । अन्यथा न्यायानुगृहीतश्रुत्यादिप्रमाणगणकण्ठोक्त-प्रायणान्तध्यानरूपवेदनस्यैवाविद्यानिवर्तकत्वाभ्युपगम एव हि युक्तस्स्यात् । न तु ध्यानादिविधानार्थसिद्धसंस्कारसाहित्यादिविशेषणकत्वकल्पनक्लेशाभ्युप-गमः । किं च उक्तज्ञानव्यापकत्वस्याभावविशेषणत्वे तत्र अन्यतरत्वावच्छि-न्नप्रतियोगिकत्वविशेषणमनर्थकं; मुद्गरपातनिवृत्तघटादेरभावस्यापि उक्तज्ञान दशायां सद्भावेन व्यापकत्वसंभवादव्याप्त्यप्रसक्तेः । जीवन्मुक्तिदशायामुक्त-विशिष्टज्ञानानभ्युपगमादेव अन्यतराभावस्येव प्रत्येकाभावस्यापि हि न व्याप-कत्वभङ्गः प्रसज्येत । तथाऽपि कथंचित्सार्थक्याभिमानेन तन्निवेशे शुक्ति-रजतस्य संस्कार्यत्वाभावेन संस्कारानभ्युपगमादनारब्धकार्याणां कर्मणां ब्रह्म-सिद्धौ संस्कारानङ्गीकारस्य दर्शितत्वाच्च तत्र तत्रोक्तान्यतरत्वावच्छिन्नाभा-वाप्रसिद्ध्याऽव्याप्तिश्च । अपि च स्थितप्रज्ञश्च न साधकः, तस्योत्तरोत्तर-ध्यानोत्कर्षेण पूर्वप्रत्ययानवस्थितत्वात्; निरतिशयस्तु स्थितप्रज्ञः; स च सिद्ध एवेति भामतीवाक्यात् तस्य भाव्यतिशयनिषेधेन तदानीमेव पटुतर-संस्कारसाहित्यादिविशिष्टतत्त्वदर्शनसद्भावस्याभ्युपगन्तव्यतया तत्राज्ञानप्रयुक्त-तत्संस्कारानुवृत्तेश्शरीरधारणदर्शनसिद्धतया उक्तान्यतरत्वावच्छिन्नाभावस्य विरहेण तस्य व्यापकत्वमपि न शक्यमुपपादयितुम् । अतश्शरीरतदारम्भकादेः मिथ्यात्वस्य दुरुपपादतया तत्त्वदर्शिनामप्यबाधितस्यैव तस्यानुवृत्तिरिति युक्त-मुपगन्तुम् । अत एव सुखदुःखसंवेदनभिक्षाटन भोजनशिष्यार्जनप्रवचनादिक-मेषामुपपद्यते ।

न च नाटक इवाभिनयमात्रत्वोपगमात् उपपत्तिरिति वाच्यम् । भोगस्याभिनयरूपत्वे तेन प्रारब्धक्षपणानुपपत्तेः 'भोगेन त्वितरे क्षपयित्वेति हि सूत्रितम् । न हि वस्तुतः क्लेशमननुभूय प्रायश्चित्ताभिनयेनापि पापं कर्म नश्यतीत्यपि वैदिकः कश्चिदुपेयात् । अभिनयोऽप्यबाधितवस्त्राद्युपकरण-वतैव कर्तुं शक्यः; न हि पटवद्भासमानं दग्धपटं परिधाय रामादिवदभिनेतुं शक्यम् । तस्मात् तत्त्वदर्शिनामपि अबाधितशरीरेन्द्रियाद्युपकरणोपगमावश्यं भावप्रदर्शनेन परश्शतप्रतनसूक्तिभिरेव बाधितमपि बाधितानुवृत्तिवचनमभि-निवेशिनामेव तैमिरिकाणामिव द्विचन्द्रज्ञानं दोषादेव पुनः पुनरनुवर्तत इति तत्र हेतुदोष एव विधिना परिहरणीय इत्यलं बहुना ।

तदेवं प्रीतिरूप[illegible]दर्शनसमानाकारध्रुवानुस्मृतिरूपवेदनविशेष-सन्तानश्शरीरपातपर्यन्तमावर्तमान एव मोक्षोपायः। अन्तिमस्मृत्यैव च तत्परिपूर्तिः न तु ततः पूर्वमपीत्युक्तम्। अतस्तदर्थया विविदिषयाऽपि तावत्पर्यन्तमनुवृत्तया भवितव्यम्। अन्यथा प्रयत्नसाध्यध्रुवानुस्मृतेरप्यनु-वृत्तेरयोगात्। अतस्तदङ्गतयाऽपि वर्णाश्रमादिधर्मास्तावत्पर्यन्तमनुष्ठेया एव। इतरथा रजस्तमोविवृद्ध्या विविदिषानुवृत्त्यनुपपत्तेः। तथाचानुष्ठाने न विशेषः; तथाऽपि मोक्षोपायोक्तवेदनविशेषाङ्गतयैव धर्मा अनुष्ठातव्या इति वेदविदां सिद्धान्तः।

—

# विविदिषासाधनत्वभङ्गवादः

'क्रियावानेष ब्रह्मविदां वरिष्ठः' कर्मणैव हि संसिद्धिमास्थिता जनकादयः' 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इत्यादीनि हि प्रमाणानि कर्मणां ब्रह्मविद्याङ्गत्वमवबोधयन्ति न तु विविदिषाङ्गत्वम्। तदनुरोधेन 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेनेति वाक्येनापि यज्ञादीनामिष्यमाणवेदनाङ्गत्वमेव प्रत्याय्यत इति युक्तमाश्रयितुं; प्रमाणानामैकार्थ्ये सत्यर्थभेदपरताश्रयणस्यान्याय्यत्वात्। प्रत्ययप्राधान्यादिष्यमाणप्राधान्यं हि बलीयः। अत एवाश्वेन जिगमिषति असिना जिघांसतीत्यादाविष्यमाण एव करणाद्यन्वयः। अत एव च भगवता सूत्रकृता 'सर्वापेक्षा च यज्ञादिश्रुते' रित्युक्तश्रुतेः यज्ञादिसर्वधर्माणां विद्याङ्गत्वे प्रमाणत्वमुपदर्शितम्। आह च भगवान् भाष्यकारः—एवंरूपाया ध्रुवानुस्मृतेः साधनानि यज्ञकर्माणीति यज्ञादिश्रुतेरश्ववदित्यभिधास्यत इति। विविदिषन्तीत्यस्य संनिधौ 'मनसैवानुद्रष्टव्य'मिति विशदवेदनं विहितं; ''एतदेव विदित्वा मुनिर्भवतीति स्तुतम्। अतो विधिस्तुतिविषयस्यैव वेदनस्यात्र विध्यन्ताकाङ्क्षा, न तु तदुभयरहिताया विविदिषाया इत्युक्तमाचार्यैस्तत्त्वटीकायाम्। अतो वेदनं प्रत्येवाश्रमादिधर्माणामङ्गत्वमिति स्थिते ये तावदद्वैतिनः

> यथावस्त्वविद्यास्यात् विद्या तस्या विरोधिनी।
> समुच्चयस्तयोरेवं रविशार्वरयोरिव॥
> तमोऽङ्गत्वं यथा भानो रग्नेश्शीताङ्गता यथा।
> वारिणश्चोष्णता यद्वत् ज्ञानस्यैवं क्रियाङ्गता॥
> विरोधादप्रमाणत्वाच्चित्तशुद्ध्युपयोजनात्।
> ज्ञानमात्रस्य हेतुत्व श्रुते स्सामर्थ्यतोऽपि च॥
> शमाद्यङ्गकताम्नानान्न धीकर्म समुच्चयः॥

इत्येवं नैष्कर्म्यसिद्धितूलिकादौ वस्तुविरोध-सन्प्रत्ययपर्यालोचनादिना ज्ञानकर्मणोरङ्गाङ्गिभावेनापि समुच्चयो न संभवतीति वदन्ति, तान्

प्रत्युच्यते शतदूषण्यां—कोऽसौ वस्तुविरोधस्तावदित्यादिना विविधकल्पविधूननेन कर्मणां साङ्गवेदनसाधनत्वम् ।

## भामतीविवरणमतविपरीतोक्तिनिरूपणम्

अत्र यदुक्तं—अद्वैतमते तु विवरणमते यज्ञादीनि विविदिषा साधनानि । भामतीमते संयोगपृथक्त्वन्यायेन विविदिषाज्ञानोभयसाधनानीति । तन्न श्रद्धेयं—विपरीतमेव हि दर्शितं सिद्धान्तलेशसंग्रहे-'तं भामतीमतानुवर्तिन आहुरित्यारभ्य तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेतिश्रुतेः विद्यासंपादनद्वारा ब्रह्मावाप्त्युपायभूतायां विविदिषायामुपयोगः । ननु इष्यमाणायां विद्यायामुपयोगः किं न स्यात् ? न । प्रत्ययार्थस्य प्राधान्या'दित्यादिकमुक्त्वा अनन्तरं विवरणानुसारिणस्त्वाहुः—प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति सामान्यन्यायादिच्छाविषयतया शब्दबोध्य एव शाब्दसाधनतान्वय इति स्वर्गकामादिवाक्ये क्लृप्तविशेषन्यायस्य बलवत्वात् अश्वेन जिगमिषति असिना जिघांसतीत्यादिलौकिकप्रयोगेऽश्वादिरूपसाधनस्य 'तदन्वेष्टव्यं' 'तद्वाव विजिज्ञासितव्यं' 'मन्तव्यो निदिध्यासितव्य' इत्यादिवैदिकप्रयोगे प्रत्ययार्थविधेश्च सन्प्रत्ययाभिहितेच्छाविषय एव गमनादावन्वयस्य व्युत्पन्नत्वाच्च, प्रकृत्यभिहितायां विद्यायां यज्ञादीनां विनियोग इत्येव हि प्रपञ्चितम् ।

## मतद्वयेऽपि विविदिषापर्यन्तमेव कर्मानुष्ठानम्

अतो विवरणमते यज्ञादीनां वेदन एव विनियोगोऽभिमतः; न तु विविदिषायां; तथाऽपि तन्मतेऽपि विविदिषार्थत्वमत इव विविदिषापर्यन्तमेव कर्मानुष्ठानं वेदननियमानियमाभ्यामेवोभयोर्विशेषः ।

**प्रत्यक्प्रवणतां बुद्धेः कर्माण्यापाद्य शुद्धितः ।**
**कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥**

इति नैष्कर्म्यसिद्धावुक्तेरिति वदन्ति । तेन प्रथममते वैराग्यसिद्धिपर्यन्तं कर्मणामुपयोगः; द्वितीयमते ज्ञानोत्पत्तिपर्यन्तं कर्मणामनुष्ठानमिति नव्यनिष्कर्षश्च व्याहन्यते ।

वस्तुतस्तु सकृत् ज्ञानोत्पादमात्रेण मोक्षसिद्ध्युपगमायोगात् ज्ञानोत्पत्त्यनन्तरमप्युत्तरोत्तरज्ञानोत्पत्त्यौपयिककषायपाकविविदिषासमुन्मेषसंपत्तये यावच्छरीरपातं तत्तदाश्रमाद्यनुगुणधर्मानुष्ठानस्यावर्जनीयत्वात् विविदिषोत्पत्तिपर्यन्तं, वैराग्योत्पत्तिपर्यन्तं, ज्ञानोत्पत्तिपर्यन्तमित्येवं भिन्नभिन्नावधिविश्रमनिर्बन्धो निर्निबन्धनः ।

तत्र संन्यासिनामेव ब्रह्मविद्याधिकार इति नियमस्याद्वैतिभिरेव बहुभिरनङ्गीकारात् न तावदस्माकमिह पृथग्वक्तव्यमवशिष्यते ।

## गृहस्थाश्रम एव विद्यायाश्शीघ्रसिद्धिः

संन्यासिनोऽपि तदाश्रमधर्मसहकारेणैव विद्यासंपत्तिः । अनाश्रमिसाधारणजपोपवासदेवताराधनाद्यपेक्षया सर्वेषामप्याश्रमिणामधिकधर्मसद्भावेनैव हि 'अतस्त्वितरत् ज्याय इत्युच्यते । अनेनैव न्यायेन ब्रह्मविद्याविषये आश्रमान्तरापेक्षया गृहस्थाश्रमस्य धर्मभूयस्त्वात् ज्यायस्त्वमवचनसिद्धम् । अत एव क्रियावानेष ब्रह्मविदां वरिष्ठ इति श्रूयते । तत्र भूम्नि हि मत्त्वर्थीयः । ब्रह्मविदां मध्येऽधिकधर्मानुष्ठानशीलस्य शीघ्रविद्यानिष्पत्त्या श्रैष्ठ्यमुच्यते । अत एव 'किं तु कालकृतो विशेषः, साधनविशेषाद्धि सा क्षिप्रं क्षिप्रतरं च व्यज्यते, तदभावे चिरेण चिरतरेण च । तदुक्तं 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' इति ब्रह्मसिद्धावाश्रमान्तरापेक्षया गृहस्थाश्रमे यज्ञादिसाधनविशेषात् विद्यायाश्शीघ्रसिद्धिरुच्यते न तु शमादिसाधननिष्पत्तेः । सा क्षिप्रं व्यज्यत इत्यत्र तच्छब्दस्य पूर्वप्रकृतविद्यापरत्वात् । अत एव तद्व्याख्यायां सा विद्या शीघ्रं शीघ्रतरं च व्यज्यते । केवलाभ्यासः चिरतरेण विद्यामभिव्यनक्ति । यज्ञादिष्वेकैकसहितश्शीघ्रं, सर्वसहितश्शीघ्रतरमिति तच्छब्दो विद्यापरतया व्याख्यातः । एतेन शीघ्रं शमादिसाधनसंपत्तये कर्मानुष्ठानमपेक्ष्यत इति ब्रह्मसिद्ध्यभिप्रेततया वचनमनृतमेवेत्यावेदितम् । अत एवे'दमेवोपष्टभ्य भामतीमतं; एतन्मतेऽपि साक्षात् यज्ञादीनां विविदिषासाधनत्वमेव, तद्द्वारा ज्ञानसाधनत्वोक्तिस्तु 'ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः' इत्यादिवचनसिद्धं ज्ञानसाधनत्वमप्यवलम्ब्य, न तु विविदिषन्तीत्यत्र विविदिषापदेन विविदिषाज्ञानोभयसाधनत्वमभिप्रेत्येत्युक्तमपि व्याहतम् । विभिन्नतात्पर्यकयोरुभयोरुपष्टम्भकोपष्टभ्यभावायोगात् ।

## भामती-ब्रह्मसिद्ध्योरत्र नैकमत्यम्

इदं तु युक्तं—कार्यान्तरनिराकाङ्क्षाणामपि कर्मणां संयोगपृथक्त्वात् 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेने'ति विद्याङ्गभावः इति हि ब्रह्मसिद्धावुक्तम्। भामत्यां तु विविदिषन्ति वेदितुमिच्छन्ति न तु विदन्ति, वस्तुतः प्रधानस्यापि वेदनस्य प्रकृत्यर्थतया शब्दतो गुणत्वात् इच्छायाश्च प्रत्ययार्थतया प्राधान्यात्, प्रधानेन च कार्यसंप्रत्ययादित्यादिकमुक्तम्। कथमनयोरैकमत्यं, विविदिषाद्वारावेदनसाधनत्वोपगमात् इति चेन्न 'क्षयात् पापस्य कर्मणः' कषाये कर्मभिः पक्वे' इत्यादौ पापक्षयस्यैव द्वारत्वेन श्रवणात् विविदिषाया द्वारत्वे मानाभावात्। न च विविदिषन्तीति वाक्येनैव तत्सिद्धिरिति वाच्यम्। वेदनसाधनत्वाभिधायिवचनान्तरसंवादेनास्यापि वेदनसाधनत्व एव तात्पर्योपगमात्।

## स्वर्गकामवाक्य-विविदिषावाक्ययोर्वैषम्योक्तिनिरासः

न च विविदिषन्तीति सन्नन्तश्रवणविरोधः। असिना जिघांसतीत्यादाविव सन्प्रकृत्यर्थे साधनान्वयेऽप्यविरोधस्योक्तत्वात्। प्रत्ययार्थप्राधान्यापेक्षया इष्यमाणप्राधान्यबलीयस्त्वस्य वैदिकेष्वपि स्वर्गकामादिवाक्येषु संप्रतिपन्नत्वात्।

न च कामोपबन्धेषु यागादिवाक्येषु स्वर्गादेः भाव्यत्वेनानन्वयेऽन्यतस्स्वर्गादिसाधनानवगत्या कामनाया निर्ज्ञातस्वविषयसाधनप्रवर्तकत्वेन गौणपुरुषार्थत्वस्याप्यप्रतीत्या भाव्यत्वेनान्वयायोग्यत्वात् इष्यमाणप्राधान्योपगमेऽपि, विविदिषावाक्ये यज्ञादीनां वेदनविनियोगेऽपि विविदिषाया यज्ञादिद्वारवर्गमध्ये निवेशोपगमेन यज्ञादिफलत्वाभ्युपगमावश्यंभावात् प्रत्ययार्थप्राधान्यं न परित्याज्यमिति वाच्यम्।

## विविदिषाया यज्ञादिफलत्वासंभवः

विविदिषाया यज्ञादिफलत्वानभ्युपगमात् न हि तस्यास्स्वतःफलत्वं, किं तु वेदनरूपफलजनकत्वौपाधिकमेव तद्वक्तव्यं वेदनस्य चेष्यमाणतया फलत्वम्। तथा च विविदिषाफले वेदने यज्ञादेः प्रागेवेच्छासत्त्वे सैव विविदिषेति तस्यास्सिद्धत्वात् न यज्ञादिफलत्वम्।

यज्ञादेः प्राक् तदसत्त्वे च तस्याः फलजनकत्वौपाधिकपुरुषार्थत्वा-प्रतीत्या न यज्ञादिफलतयाऽन्वये योग्यता स्यात् ।

तदुक्तं—योऽयं विविदिषाकामो यज्ञादिष्वधिकरोति स किं तदानीं वेदनमिच्छति उत न, आद्ये विविदिषा सिद्धैवेति न तस्या यज्ञादिसाध्यत्वं, तथा च चक्रकं वेदनेच्छायां जातायामेव विविदिषेच्छा जायते । तस्यां जातायां कर्मानुष्ठानं ततो विविदिषे'ति । अत्रैकैकोभयपर्वसंकोचेनात्माश्रया-न्योन्याश्रयावप्यन्तर्भाव्यौ । द्वितीयेऽपि वेदनस्यानिष्टत्वे विविदिषाऽप्यनिष्टैव स्यात्, तद्विषयत्वात् तस्याः विविदिषा हि वेदनं साधनं साधयेत् तच्चाप-वर्गादिकमिति मत्त्वैव हि तस्यामभिलाषसंभव इति । ननु विविदिषा द्विविधा, तत्रैका साङ्गाध्ययनादिप्रयुक्तब्रह्मज्ञानपुरुषार्थत्वावगतिमात्रमूला । सा च पाप्मना प्रतिबद्धा सती वेदनोपायेषु प्रवृत्तिं जनयितुं न प्रभवति । तादृशप्रवृत्त्युपधायकतीव्रविविदिषा द्वितीया । सैव तदुद्देशेन प्राथमिक विविषानन्तरमनुष्ठितैः यज्ञादिभिः प्रतिबन्धनिवृत्त्या साध्यत इति यज्ञादि-पूर्वोत्तरविविदिषयोरौषधसेवनपूर्वोत्तररुग्णबुभुक्षयोरिव भेदान्न चक्रकाद्यव-काश इति चेन्न । यज्ञादेः पूर्वं द्वितीयविविदिषाया अप्यभ्युपगमावश्यंभावात्; अन्यथा तदुद्देशेन यज्ञाद्यनुष्ठानायोगात् । तदप्युक्तं—'न हि वेदने तीव्रेच्छा-यामसंभवन्त्यां तादृशीमपि तामिच्छेत् तदुपायवर्गानुष्ठानक्लेशं वा सहेते'ति । तीव्रविविदिषाभावे मन्दविविदिषामात्रेण वेदनहेतुश्रवण इव तस्यापि परम्प-परया हेतुभूतायां तीव्रविविदिषायामपि इच्छा न स्यात् इच्छाभावे च तदुद्देशेन श्रमव्ययसाध्येषु यज्ञादिषु प्रवृत्तिर्न स्यादिति भावः । अतस्तीव्र-विविदिषाऽपि पूर्वमेवासीदित्युपगमे स्यादेवोक्तदोषतादवस्थ्यम् ।

## बुभुक्षादृष्टान्तवैषम्यम्

दृष्टान्तेऽपि तीव्रबुभुक्षा पूर्वमेवास्ति, अत एव दुःखसेव्येऽपि भेषजे प्रवृत्तिः । ततश्च भोजनप्रतिबन्धकरोगनिवृत्तिरेव साध्यत इत्युपेयते, न तु बुभुक्षास्वरूपमिति न दोषसाम्यमस्ति, तर्हि तथैवात्राप्यस्त्विति चेत् । न यज्ञादीनां प्रतिबन्धकरजस्तमोनिबर्हणार्थत्वे विविदिषन्तीत्यनन्वयापत्तेः । तदप्युक्तं 'तर्हि विविदिषासाधनत्वश्रुतिः परित्यक्तैवेति प्रकृत्यर्थसाधनत्वस्येव प्रत्ययार्थसाधनत्वस्यापि त्यागादिति भावः । न च लक्षणया वेदनेच्छाप्रति-

बन्धकनिवृत्तेरेव विविदिषापदार्थत्वात् न तत्साधनत्वश्रुतिपरित्याग इति वाच्यं, तदपेक्षया इष्यमाणप्रकृत्यर्थप्राधान्याश्रयणस्यैव युक्तत्वात्। तथासति न मुख्यार्थत्यागः, नापि गौणार्थालम्बनं, न वा यज्ञादिवेदनसाधनत्वबोधक प्रमाणगणविसंवादश्च स्यात्। किं च लक्षणा च किं प्रकृतेरुत प्रत्ययस्या-होस्विदुभयोरपि। नाद्यः, तदर्थप्राधान्ये प्रत्ययार्थप्राधान्यपरित्यागापत्तेः। प्रत्ययार्थप्राधान्ये च पूर्वोक्तदोषादनिर्मोक्षापत्तेः। न द्वितीयः, तदर्थे वेदन-घटिते प्रकृत्यर्थानन्वयापत्त्या प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्ति-भङ्गप्रसङ्गात्। नापि तृतीयः, उभयोरपि मुख्यार्थाविवक्षाकल्पनापेक्षया प्रत्ययार्थप्राधान्यमात्राविवक्षाश्रयणस्य युक्तत्वात्। तथा हि दृष्टमन्यत्रापि-निदिध्यासितव्यः, असिना जिघांसतीत्यादौ। लोकवेदयोः कश्चित् परीक्षकः शक्त्यैव कथंचित् निर्वाहे सति न लक्षणामनुधावेत्। कथं तर्हि भेषजेन बुभुक्षतीत्यादेः प्रामाण्यमिति चेन्न, श्रुतिस्मृत्यादिषु तथाविधवाक्यादर्शनात्। तद्वाक्यस्य क्वचित् प्रमाणतयाऽभ्युपगमेऽपि अश्वेन जिगमिषतीत्यादाविव तत्रापीष्यमाणप्राधान्याश्रयणेन निर्वाहसंभवात् प्रकृत्यर्थभोजने प्रतिबन्धक-रोगनिवृत्तिद्वारा भेषजसाध्यताया अबाधितत्वात्। अतश्शक्यार्थपरिग्रहेण प्रयोगनिर्वाहे संभवति लक्षणाकल्पनमन्याय्यमेव।

वस्तुतस्तु लक्षणाश्रयणेऽपि विविदिषाया उक्तदिशा सिद्धत्वे तत्प्रतिबन्धकनिवृत्तेरपि सिद्धत्वावश्यंभावेन पूर्वोक्तदोषानिर्मोक्षात् भक्षितेऽपि लशुने न शान्तो व्याधिः। एतेन कर्म हि विविदिषाप्रतिबन्धकनिवृत्तिमेव साधयितुमीष्टे न तु वेदनं तदिच्छां वेत्युक्तं निरस्तम्। अत एव यदुक्तं अगत्या साधनान्वयोपपत्त्यर्थं विविदिषाबुभुक्षापदाभ्यां सन्नन्तार्थप्रतिबन्धकनि-वृत्तिरेवार्थो वर्णनीय इति। तदुपेक्षणीयमेव। तथाऽपि गत्यभावात्। उक्तार्थ-वर्णनक्लेशमन्तरा गत्यन्तरस्य दर्शितत्वाच्च। तथाऽर्थवर्णने भामतीकल्पतरु-परिमलादिस्वपूर्वग्रन्थविरोधश्च। तत्र सर्वत्र प्रथमाधिकरणे प्रत्ययार्थप्राधान्येन प्रधाने कार्यसंप्रत्ययादिच्छायामेव प्रत्ययवाच्यायां यज्ञादिसाधनकत्वान्वयस्य महता प्रयासेनोपपादितत्वात्। तदिह प्रागेव दर्शितम्। एतेन यदुच्यत इत्यारभ्य विविदिषासाधनत्वं यज्ञादीनामिति शतदूषणीस्थविविदिषापदेन वेदनमात्रेच्छायां विवक्षितायां नायमद्वैतमतानुवाद इत्युक्तमपास्तम्। भाम-त्यादिषु विविदिषापदेन शक्यार्थं विना लक्ष्यार्थमुखानिरीक्षणाच्च। तथा

चात्र लक्षणाकल्पनाया न्यायविरुद्धत्वात् स्वपूर्वग्रन्थविरुद्धत्वात् निष्प्रयोजनत्वाच्चासंभवेन शक्यार्थविवक्षाया एवोपगन्तव्यतया तत्र प्रत्ययवाच्यायामिच्छायां असिना जिघांसतीत्यादाविव साधनान्वयस्योक्तरीत्या बाधेन परिशेषादपि प्रकृतिवाच्ये इष्यमाणतया वस्तुतः प्रधाने वेदन एव तदन्वय इत्यकामेनाप्युपगन्तव्यम् ।

अतो यत्तु तत्र तत्र वेदनसाधनत्वं यज्ञादीनामाम्नायते, तदिदं पूर्वोक्तरीत्या "ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः" इत्यादिवचनसिद्धं ज्ञामसाधनत्वं संयोगपृथक्त्वन्यायेन सिद्धमभिप्रेत्यैव; न तु विविदिषन्तीति पदस्यैव वेदनपरत्वमभिप्रेत्येत्युक्तं; तत् दुरुक्तमेव । अत एव न हि ज्ञानं यज्ञादिसाध्यमित्येतदुच्छृङ्खल एव वक्तुमर्हति । उत्पत्तौ ज्ञानस्य कर्मापेक्षा विद्यते विविदिषोत्पादद्वारा विविदिषन्ति यज्ञेनेति श्रुतेरिति सर्वापेक्षाधिकरणभामत्यामपि हि ज्ञानस्य विविदिषाद्वारा यज्ञादिसाध्यत्वमङ्गीकृतम् । तत्र द्वारत्वमात्रे हि विवादः ।

## ब्रह्मसिद्धौ कर्मणामदृष्टद्वारा वेदनाङ्गत्वम्

यत्तु कर्म हि दृष्टविधया ब्रह्मसिद्ध्युक्तरीत्या शमादीतिकर्तव्यतया विद्योदयहेतुरिति सिद्धान्तात् विद्योत्पत्तिकारणशमादिप्रत्यनीकत्वमनङ्गीकारपराहतमिति तन्न; ब्रह्मसिद्धौ 'दृष्टेवेतिकर्तव्यतापेक्ष्यतां शमदमादिसाधनविशेषश्चित्तविक्षेपस्य विहन्त्री'ति शमदमादेः दृष्टविधया विद्योदयहेतुत्वाभिधानेऽपि यज्ञादयश्च केनाप्यदृष्टेन प्रकारेणेति यज्ञादीनामदृष्टविधयैव हेतुताया उक्तत्वेन शमादिद्वारा दृष्टविधया हेतुताया अनुक्तत्वात् । नैष्कर्म्यसिद्ध्यादावुक्तत्वेन पूर्वं प्रदर्शितस्य कर्मज्ञानयोर्वस्तुविरोधस्य परिहाराय संभावितानां कल्पानां विकल्पने तत्र कस्यचित्कल्पस्य येन केनचिदनङ्गीकारमात्रे पराहतेवंवक्तुमशक्यत्वाच्च । न हि विकल्पितैः कल्पैस्सर्वैरपि वाद्यङ्गीकृतैरेव भवितव्यमिति नियमोऽभ्युपगन्तुं शक्यते । अभ्युपगमे नित्यो नवेति विरुद्धकोटिविकल्पानुपपत्तेः । न हि विरुद्धद्वयं केनचिदभ्युपगम्येत, अन्येन येन केनापि तथा नाङ्गीकृतमिति वक्तुं च न भवता प्रभूयते । न ह्येकरूपवादिनस्स्युरद्वैतिनः । तदानीन्तनैरङ्गीकृता अपि कल्पाः पश्चात्तनैरनङ्गीकारसंभावनामात्रेणापि विपश्चिता विकल्प्य निरस्येरन् ।

वस्तुतस्तु शमाद्यङ्गकताम्नानान्न धीकर्मसमुच्चय इति तूलिकाया-मङ्गभावेन कर्मसमुच्चयेऽपि शमाद्यङ्गाम्नानस्य विरोधितया निर्देशात् शमादिप्रत्यनीकत्वमपि कर्मणामङ्गीकृतमेव। तत्पक्ष एव पूर्वपक्षतया शमदमाद्यधिकरणे श्रीभाष्येऽपि निर्दिश्यते। आन्तरबाह्यकरणव्यापाररूपत्वात् कर्मानुष्ठानस्य, शमदमादीनां तद्विपरीतरूपत्वाच्चाननुष्ठेयानीति। अतश्शमादि प्रत्यनीकत्ववचनमनङ्गीकारपराहतमिति वचनमज्ञाननिबन्धनमेव।

एतेनैव तृतीयादि कल्पानामनङ्गीकारपराहतत्ववचनमपि प्रत्यस्तम्। विविदिषायास्तत्प्रतिबन्धकनिवृत्तेर्वा 'तमेतं वेदानुवचनेनेति वाक्येन यज्ञादि-फलत्वं न प्रत्याययितुं शक्यमित्युक्तं। वेदनस्यापि तत्फलत्वं न संभवतीत्युपगमे तमेतमित्युक्तवाक्ये यज्ञादिविधानं निरर्थकमेव स्यात्। वेदनस्य फलत्वासंभवश्चात्र न संभवदुक्तिकः। शतदूषण्यामेवोक्तविकल्पप्रथम-शिरोनिरसनेन तस्य निरस्तत्वात्, किं ज्ञानस्य यज्ञादिभिस्साधयितुमशक्यत्व-मित्येव हि तत्र प्रथमं शिरः। तच्च द्वेधा विकल्प्य तत्रैव ह्यपुनरङ्कुर-मुन्मथितम्। न च तत्रान्वयतो व्यतिरेकतश्च व्यभिचार एव परिहृतो न त्वसंभव इति वाच्यम्। व्यभिचारपरिहारे सति हेतुत्वासंभवशङ्कायाः पुनरुन्मेषायोगात्। न च निर्विचिकित्सशाब्दज्ञानोत्पत्त्युत्तरकालं कर्मण्यधि-कारासंभवादेव कर्मणामुपासनहेतुत्वासंभव इति वाच्यम्। मानाभावात्।

## ज्ञानिनां कर्माधिकारासंभवशङ्कानिरासः

न च 'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु'रिति श्रुतिरेव तत्र मानमिति वाच्यं; तत्रैकेषामधिकारिणां केवलकर्मादिना साधयि-तुमशक्यस्यामृतत्वस्य संन्यासस्त्याग इत्युक्तश्शरणागतिरित्यपीति शरणागति पर्यायतयोक्तेन त्यागेन प्राप्तिवचनेऽपि ज्ञानिनां कर्माधिकारस्यानुक्तेः। न च निर्विचिकित्सशाब्दात्मैकत्वविज्ञाने देहात्माद्यभिमानस्यापि बाधात् तदभिमानिकर्तृककर्मण्यधिकारो न संभवतीति वाच्यम्। भवन्मते परोक्षस्या-परोक्षबाधकत्वानभ्युपगमात्, वेदान्तवाक्यैश्च सर्वकारणत्व-सर्वान्तरत्व-सर्व-नियन्तृत्व, सर्वशरीरित्व सर्वोत्कृष्टत्वाद्यभिधायिभिः आत्मनि स्वेतरसामान्य-शून्यत्वरूपैकत्वापातविज्ञानजननस्याप्यनुपपत्तेः। देहात्मतादात्म्यभ्रमरूप-देहात्माभिमानस्य देहान्तरानुभाव्यफलककर्माधिकारकोटावन्तर्भावितुमनर्ह-

त्वात्; देहविशेषनियन्तृत्वरूपदेहात्मत्वाभिमानस्य यावच्छरीरपातं ज्ञानिनामपि दुरपह्नवत्वाच्च । अन्यथा शिष्योपच्छन्दन प्रवचन भिक्षाटन भोजनार्जनादावपि ज्ञानिनां प्रवृत्त्यनुपपत्तेः । न चेष्टापत्तिः, प्रत्यक्षविरोधात् । न च दृष्टार्थेषु प्रवर्तमानस्यानधिकारिणोऽपि दर्शनानुरोधेन फलाभ्युपगमेऽप्यदृष्टार्थेषु शास्त्रैकसमधिगम्यं फलमनधिकारिणि न युज्यत इति वाच्यम् । दृष्टार्थेष्वप्यन्यत्र कृष्यादावनधिकारिणः फलानुपलब्धेः । दर्शनानुरोधेन क्वचिदनधिकारिण एव फलाभ्युपगमादपि फलव्यापकोपायाधिकारविशेषाभ्युपगमस्यैवाव्याहतत्वेन ज्यायस्त्वात् । आत्माभिमानानुगुणपुरुषार्थव्यवस्थाया दुरपह्नवत्वेन ज्ञानिनां शरीरविशेषाभिमानविरहे दृष्टार्थेष्वपि व्यवस्थितप्रवृत्त्यनुपपत्तेर्दुर्वारत्वाच्च ।

न च तत्त्वज्ञानानन्तरमनुवर्तमानमपि मनुष्याद्यभिमानं मिथ्येति मन्यमानस्य ज्ञानिनः श्रद्धाविरहात्, अश्रद्धस्य च श्रद्धया हुतं दत्तमित्यादिस्मृतेः विधिषु नाधिकार इति वाच्यम् । यदेव विद्यया करोति तदेव वीर्यवत्तरं भवतीति श्रुत्या श्रद्धारहितस्यापि कर्मणो वीर्यवत्ताया अनुमतत्वात् । मनुष्याद्यभिमाने श्रद्धानिवृत्तावपि कर्मणि श्रद्धानिवृत्तेः कारणाभावात् । फलसाधनतया विधानमेव हि तत्र श्रद्धानिबन्धनं तत्त्वज्ञानात् पूर्वमिव पश्चादपि कर्मणां फलसाधनताविधानस्याविशिष्टत्वात् । स्मर्यते हि 'पुण्यं प्रज्ञां वर्द्धयति क्रियमाणं पुनरित्यादि ।

अतो मिथ्याभूतेन परमार्थभूतेन वा मनुष्याद्यभिमानेन कृतं कर्म पुरस्तादिव ज्ञानात्परस्तादपि कल्पत एव शास्त्रीयफलायेति विधिबलात् ज्ञान्यपि वैदिकः कुतो न श्रद्दध्यात् ? अन्यथा श्रुतमततत्त्वस्य निस्संशयज्ञानोदयेन शरीरादिकं मिथ्यात्वेन मन्यमानस्य तत्साध्यनिदिध्यासनेऽपि श्रद्धानुदयेन तत्रानधिकारापत्त्या निदिध्यासितव्य इति विधेरानर्थक्यापत्तेः । न च ध्यानात्पूर्वं निस्संशयज्ञानं नोत्पद्यत इति वाच्यं; संशयस्य संशयसहस्य वा सामान्यज्ञानस्य सहस्रशोऽप्यभ्यासेऽपि निश्चयानुदयेन तादृशध्यानविधेरानर्थक्यस्य तदवस्थत्वात् । तस्मात् ज्ञानिनोऽप्यास्तिकस्य श्रद्धाधिकाराभ्युपगमावश्यंभावात् न कर्मणां रजस्तमोनिबर्हणेन संनिपत्योपकारकतया उपासनाङ्गत्वासंभवः । तदुक्तं—

**"स्वान्तध्वान्तप्रसूतं दुरितमपनयन् योगिनस्सत्त्वशुद्ध्यै-**
**सर्वो वर्णादिधर्मश्शममुखवत् संनिपत्योपकारो ।"** इति

एतेन वेदनस्य न यज्ञादिफलत्वं भामत्युक्तरीत्या असंभवादेव न तु विरोधादित्युक्तमप्यपास्तम् । उपदर्शितकर्मश्रद्धाधिकारभङ्गशङ्कानिबन्धन भामत्युक्तासंभवस्य च कर्मविरोध एव पर्यवसानाच्च । तत्प्रकारोऽपि शतदूषण्यां अन्यो वा कश्चिदिति पञ्चमकल्पविवक्षितस्स्यात् । तथापि वस्तुतः प्रपञ्चमिथ्यात्वे प्रमाणतात्पर्याभावस्यान्यत्र प्रपञ्चितत्वेन तदभिमाननिबन्धनः तत्कल्पोऽतिमन्दोत्थान एवेत्यानादरान्न विशिष्य निराकृत इति स्यात् ! शतदूषण्यां 'सहकारित्वेन च' अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनादित्यादि सूत्रोपादानात् विद्यायाः पूर्वोत्तरकालयोरपि विद्यार्थतया अग्निहोत्रादि कर्मानुष्ठानावश्यंभावं निर्णीतवता भगवता सूत्रकृतैव विद्याकर्मसहभावासंभवशङ्काऽपि समुन्मूलितेत्यपि सामान्यतस्सूचितं भवति । अत एव शङ्करभाष्येऽपि ज्ञानस्यैव हि प्रापकं सत्कर्म प्रणाड्या मोक्षकारणमित्युपचर्यत इत्युक्तमग्निहोत्राधिकरणे ।

तत्र व्याख्यातारस्त्वभिनिवेशिनोऽपि भामत्यादिषु सूत्रभाष्यस्वारस्यमन्यथाकर्तुमपारयन्तो विरुद्धानामपि विद्याकर्मणां वेणुज्वलनादिवत् साध्यसाधनभावमुपपादितवन्तः । तच्च कर्मणां भेदावलम्बितया आत्मैकत्वविद्याविरोधितामनभ्युपगच्छतामेव घटेतेत्यन्यदेतत् । एतावता नैष्कर्म्यसिद्धितूलिकादिवत् भामतीकल्पतर्वादिष्वपि विद्याकर्मविरोधः कण्ठोक्त्याऽभ्युपगत इति प्रतिपादितम् । एतेन कोऽत्र विरोध इत्युपक्रम्य शतदूषण्यां पञ्चधा विकल्पः, तन्निरासश्च निरालम्ब इत्यादि परीक्षकम्मन्यवचनं प्रतिक्षिप्तम् । एवं प्रथमाधिकरणादिषु भामत्यादौ यज्ञादीनां वेदनेच्छारूपविविदिषा साधनत्वसाधकवाक्यस्य पूर्वमुपदर्शितत्वात् तन्निरासन धात्वर्थवेदनसाधनत्वस्थापनमप्यत्र न निरालम्बनमिति वक्तुं शक्यम् । वस्तुतः प्रतिवक्तुमशक्येऽपि विषये केन तथोक्तमित्युक्तापलापो न परीक्षकभूमिकानुरूपः ।

## कर्मसाध्यवेदनस्वरूपनिरूपणम्

इष्यमाणं चेह वेदनं मोक्षसाधनमिति संप्रतिपन्नम् । तच्च परभक्तिरूपमुपासनमेव विशदतममिति पुरस्तादुपपादितम् । य एतद्विदुर-

मृतास्ते भवन्तीत्युक्तमोक्षसाधनवेदनस्यात्रैव प्रकरणे 'मनसैवानुद्रष्टव्यं' विज्ञाय प्रज्ञां कुर्वीत' इत्येवं हि विशेषविधायकानि वचनानि तथा द्रष्टव्य इत्यत्रापि तदेवाभिधीयत इत्येतदप्युक्तमेव। तत्रैव तमेतं वेदानुवचनेनेति यज्ञादीनां विनियोग इत्युच्यते। न चात्राद्वैतिनामपि न विप्रतिपत्तिरिति वक्तुं शक्यम्। अत एवोपासनोत्पत्तावपीति भामत्यां उपासनोत्पत्तावपि कर्मापेक्षाया निरस्तत्वात्। न च तमेतं वेदानुवचनेनेति कर्मयोगविनियोग इत्युपेमः। किं तु कर्मयोगज्ञानयोगसाधितात्मावलोकनशालिनः परमात्म-भक्तियोगावसरे तदङ्गतया यावदायुषं कर्मयोगातिरिक्तस्वशक्ययज्ञादि वर्णाश्रमादिधर्मविनियोग इति।

न चायं भक्तियोगेन कर्मणां समुच्चयोऽद्वैतभिरप्यनुमन्यते। ज्ञानिनां कर्माधिकारानभ्युपगमात्। न च विद्यां चाविद्यां चेति ईशोपनिषद्भाष्ये व्यक्तं चैतदित्युक्तं युक्तम्। तद्वाक्यस्य शङ्करभाष्ये देवलोकफलकापरमात्म ज्ञानकर्मसमुच्चयपरतया विवृतत्वात्। मोक्षसाधनं च परमात्मज्ञानमेव विशदतमभक्तिरूपं नायमात्मा प्रवचनेन लभ्य इत्यादिश्रुत्यादिप्रमाणशत-समधिगतमित्युक्तम्। अत एव प्रीतिरूपस्य तस्येष्यमाणतया स विजिज्ञासि-तव्यः, निदिध्यासितव्यः विविदिषन्ति यज्ञेनेत्यादौ सन्नन्तेन निर्देशः। इष्यमाणत्वेन परमपुरुषार्थसाधनत्ववत् स्वयं पुरुषार्थत्वस्यापि सूचनात् सन्प्रत्ययसार्थक्यम्। अविधेयज्ञानस्य च न मोक्षसाधनत्वमिति प्रागेव प्रपञ्चितम्। न केवलं व्यतिकरेण निर्देशस्थल एव विद्युपास्योरेकार्थत्वं, परं तु मोक्षसाधनप्रकरणे सर्वत्रैवेत्यपि पूर्वमेवोपपादितम्। तत एवात्मा वाऽरे द्रष्टव्य इत्यत्राविधेयमनुपासनात्मकं वेदनं, ब्रह्मजिज्ञासेत्यत्रानुष्ठान निरपेक्षमेव ज्ञानं च फलतया विवक्षितम्। अयमेव न्यायो विविदिषन्ती-त्यत्रापि। तत्र ध्रुवानुस्मृत्यपरपर्यायभक्तिविवक्षायां सन्प्रत्ययनैरर्थक्यमेकं दूषणमित्यादिवचनानां प्रत्युक्तत्वात् पुनरत्र न वक्तव्यमवशिष्यते।

### विविदिषन्तीत्यत्र अविधेयज्ञानविवक्षायां सन्प्रत्ययादिवैयर्थ्यम्

अथापि विविदिषन्तीत्यत्र विदिधातोरविधेयज्ञानपरत्ववादिनामेव सन्प्रत्ययनैरर्थक्यं दुर्वारमापद्यत इति वक्तुं युक्तम्। अविधेयज्ञानस्यापुरुष-

तन्त्रतया किमिच्छया ? न च प्रमाणतन्त्रं प्रत्यक्षमिच्छामन्तरेण नोत्पद्यते। तथाऽपि तस्य फलतया तत्र स्वत एव जायमानाया इच्छाया अनुवाद इति चेन्न; प्रयोजनाभावात्। स्वत एव जायमानाया इच्छायाः यज्ञादिसर्वापेक्षत्वोक्तेरयुक्तेश्च। फलेच्छाया विषयानुकूल्यधीमात्रजन्यत्वात्। तथाचास्मिन् पक्षे न सन्प्रत्ययैकमात्रवैयर्थ्यं, किं तु यज्ञेनेत्यादिश्रौतसर्वपदवैय्यर्थ्यं, 'सर्वापेक्षा च' सहकारित्वेन च 'अग्निहोत्रादि तु' इत्यनेकसूत्रविरोधः, तेषां वैय्यर्थ्यं चेति ध्येयम्।

न चेष्यमाणवेदनस्य भक्तिरूपत्वे तत्र यज्ञादीनां दृष्टोपकाराभावात् न साधनत्वसंभव इति वाच्यम्। विधिबलेनादृष्टोपकाराङ्गीकारे बाधकाभावात्। कषाये कर्मभिः पक्व इत्यादौ पापनिर्हरणाद्युपकारस्य श्रुतत्वाच्च। न च स्वयमफलाया भक्तेरत्र कर्मसाध्यत्ववर्णनं व्यर्थमिति वाच्यम्। अस्मिन् प्रकरणे 'य एतद्विदुरमृतास्ते भवन्ति' तमेवमन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतमित्यादिना मोक्षसाधनं परमात्मवेदनं प्रक्रम्य तस्य मनसैवानुद्रष्टव्यमिति विशदतमत्वं, "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः" "नानुध्यायात् बहून् शब्दान् वाचो विग्लापनं हि तदित्यादिना ओमित्येवं ध्यायथात्मानमन्या वाचो विमुञ्चथेत्यादाविव ध्यानरूपत्वं चाभिधाय अभयं वै ब्रह्म भवति य एवं वेदेति' मोक्षफलेनोपसंहारात् विहितस्य ध्यानस्य भक्तिरूपत्वं नायमात्माप्रवचनेन लभ्य इत्यादिश्रुत्यादिप्रमाणशतसमधिगतमित्युक्तं भाष्यादौ। अत एव फलवत्तया प्रकरणे विहिताया भक्तिरूपाया विद्याया विध्यन्ताकाङ्क्षायां तत्र 'तमेतं वेदानुवचनेनेति यज्ञादिविनियोगः इति युक्तं वक्तुं; नत्वविहिताया अफलाया विविदिषाया इति पूर्वमेवोक्तम्। तथा भक्तेर्ज्ञानसाधनत्वमिव मोक्षसाधनत्वमपि

भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्॥

"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन।
ज्ञातुं तत्त्वेन द्रष्टुं च प्रवेष्टुं च परं तप॥"

'भक्त्या लभ्यस्त्वनन्यया' इत्यादि गीतावचनैरपि सिद्धमित्यप्यावेदितम्। तेन भक्तेरफलत्वज्ञानमात्रफलकत्वाद्यापातधीवचनं प्रत्युक्तम्।

यत्तु—यज्ञेनेति तृतीयान्तं पदं साध्यक्रियामात्रोपलक्षणत्वात् उपासनापरमपीति। तन्न; क्रियामात्रोपलक्षणत्वे मानाभावात्। तथासति वेदानुवचनेन दानेनेति पदान्तरवैय्यर्थ्यापाताच्च। अत एव विविदिषन्तीत्यत्र विदि धातुना कर्मयोगभक्तियोगसाध्यं यद्वेदनं तद्विषयकेच्छाप्रतिबन्धकनिवृत्तिफलकतया यज्ञादिविधानमित्यप्ययुक्तम्। अन्वयाद्यनुपपत्तावसत्यां प्रकृतिप्रत्यययोरुभयोरपि वाच्यार्थपरित्यागेन लक्षणाश्रयणस्यान्याय्यत्वात्। भेषजेन बुभुक्षतीत्यादिप्रयोगसत्त्वोपगमेऽपि तत्रेष्यमाणभोजन एव प्रतिबन्धकरोगनिवृत्तिद्वारा भेषजादिसाध्यतान्वयेऽनुपपत्त्यभावात् न लक्षणावश्यकतेति प्रागेवोक्तम्।

अनारोग्यात्मकं प्रातिकूल्यमपनेतव्यमिति तावन्मात्रार्थं भेषजोपदेश इति शतदूषण्या अपि भोजनस्य भेषजसाध्यतायां द्वारप्रदर्शनमात्रे तात्पर्यं; न तु बुभुक्षायाः न वा तत्पदस्य लक्ष्यार्थप्रदर्शने। अतस्तन्न्यायेन विविदिषाश्रुतेर्नयने वेदनस्यैव प्रतिबन्धकरजस्तमोनिबर्हणद्वारा यज्ञादिसाध्यत्वं प्रतिपादितं भवति; न तु तदिच्छाप्रतिबन्धकनिवृत्तेः अपदार्थत्वात्। वेदनोच्छोद्देशेनेव तत्प्रतिबन्धकनिवृत्त्युद्देशेन यज्ञाद्यनुष्ठानेऽपि ततः पूर्वमुद्देश्यवेदनेच्छावश्यंभावस्य प्रदर्शितत्वेन यज्ञादिपूर्वभाविन्यास्तस्या यज्ञादिसाध्यत्वानुपपत्तेरुक्तत्वाच्च। अतो लक्षणाश्रयणेऽपीष्टसिद्ध्यभावात् अयोग्यतानिश्चयेन प्रत्ययवाच्येच्छायामन्वयासंभवेन इष्यमाणप्राधान्य प्राबल्यवशेन च प्रकृत्यर्थवेदन एव मोक्षसाधनत्वाधिगतभक्त्यवस्थदर्शन समानाकार ध्रुवानुस्मृतिरूपे यज्ञादिसाध्यत्वान्वयबोध इह भवितुमर्हति न तु तदिच्छायामित्यवोचाम। अतो भक्तीच्छाया निरतिशयपुरुषार्थापेक्षिणां स्वत एव संभवात् कर्मणां तत्साधनत्वोपन्यासो न युक्त इत्यप्रसक्तप्रतिषेधः। प्रकृत्यर्थभक्त्यात्मकवेदनसाधनत्वविवक्षायां च विविदिषाश्रुतेरिष्यमाण प्राधान्यान्न काचिदनुपपत्तिरित्यसकृदुक्तम्।

प्रीतिपूर्वकानुध्यानरूपभक्त्यवस्थवेदनस्यैव मोक्षरूपनिरतिशय पुरुषार्थसाधनत्वं न त्वप्रीतिरूपस्य वेदनमात्रस्य। प्रीतेश्च भोग्याकाराविर्भावतारतम्यवशात् तारतम्यमुक्तम्। अतस्सातिशयभक्तेर्ज्ञानमात्रहेतुत्वोपगमेऽपि निरतिशयप्रीतिरूपपरभक्तेः प्रसादमात्रद्वारेण मोक्षसाधनतैव शास्त्रैरधिगम्यते। न तु मोक्षसाधनज्ञानपूर्वभाव्यवान्तरव्यापारता।

अतः कर्मणा ज्ञाने जननीये प्रतिबन्धकनिरासविविदिषे इव भक्तिरपि ज्ञानपूर्वभाव्यवान्तरव्यापार इति वचनमविवेककृतमेव। अत एव यज्ञादिकर्मणामन्तःकरणशुद्धौ विनियोगमुपगम्य तद्द्वारा व्यवहितविविदिषा-साधनत्वमप्यभ्युपगच्छता तद्द्वारा वेदनसाधनत्वमप्यनुमन्यतां तत्पूर्वभाविनस्सर्वस्यापि यज्ञादिकर्मावान्तरव्यापारत्वोपपत्तेरिति शतदूषण्युक्तरीत्या यज्ञादीनां प्रतिबन्धकनिरासविविदिषाभक्तिरूपावान्तरव्यापारद्वारा अद्वैता-भिमतवेदनसाधनत्वमेवानुमन्यतामित्यद्वैताभिमतवेदनं प्रति द्वारतया परभक्ति-मनभ्युपगच्छन्तं प्रति आपादनमुन्मादविलसितमेव। उक्तपरभक्तिरूपवेदनस्य स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रियत्वात् स्वयंप्रयोजनतया पुरुषार्थत्वं; मोक्षसाधनतया पुरुषार्थसाधनत्वं चाभ्युपगतमुपपद्यते। नत्वेवमद्वैताभिमत-निर्विशेषवेदनमात्रस्य तत्साक्षात्कारस्यवेति निरर्थकं तदर्थतया निदिध्यास-नाभिधानमभिधातृणामभिनिवेशमेव विशदीकुरुते।

योगजप्रत्यक्षोपगमेऽपि न तस्य मोक्षसाधनत्वं; स्मृतिलम्भे सर्व-ग्रन्थीनां विप्रमोक्ष इति स्मृतेरेव मोक्षसाधनत्वश्रवणात्। तदनुरोधेन तस्मिन् दृष्टे परावरे 'इत्यादेरपि दर्शनसमानाकारस्मृतावेव तात्पर्यावधा-रणात् अनयोरैकार्थ्यायान्यतरोपचाराश्रयणावश्यम्भावे स्मृतेर्दर्शनाकारत्व-बोधन इव दृष्टेस्स्मृत्याकारत्वबोधने कस्यचिदप्यतिशयस्याभावेन न विपरि-वर्तप्रसङ्ग इत्यादिकमपि ह्युक्तमेव। दर्शनपदमात्रपरामर्शेऽपि मुख्यार्थपरि-ग्रहेण निर्वाहस्तु अद्वैतिनामपि न संभवति; तस्य चाक्षुष एव रूढत्वात्। तदुक्तं सर्वार्थसिद्धौ "दृशेःप्रत्यक्षविशेषरूढत्वा"-दिति। तस्य च ब्रह्मण्य-प्रसक्तेः औपचारिकार्थकल्पने च विरुद्धक्लृप्तित्यागेन वैशद्यार्थत्वक्लृप्तेरेव युक्तत्वात्। वाक्यजन्यप्रत्यक्षं च खपुष्पकल्पं; तस्य दर्शनरूपत्वं तु तत्सौर-भनिभमिति च प्रागेव प्रसङ्गे तत्र तत्र प्रदर्शितमनन्तरमेव प्रपञ्चयिष्यत इति कृतं प्रसक्तानुप्रसक्तेन। इह तु यन्मोक्षसाधनं वेदनमित्यन्यत्र निर्णीतं, तत्साधनत्वमेव यज्ञादीनां; तमेतं वेदानुवचनेनेति वाक्येन प्रतिपाद्यते; न तु विविदिषासाधनत्वमपीत्ययमर्थः प्राधान्येन प्रसाधित इति।

---

## शाब्दप्रत्यक्षभङ्गः

अथ किं प्रत्यक्षं यद्वाक्येनापि जन्यत इति कैश्चिदुच्यते ।

### परिभाषोक्तप्रत्यक्षलक्षणाक्षेपः

न च विषयावच्छिन्नचैतन्याभिन्नं वृत्त्यवच्छिन्नं चैतन्यं तदिति वाच्यम् । चैतन्यस्य निर्विशेषत्वं, नित्यत्वमेकत्वं, चाभ्युपगच्छतां स्वरूपेण विशिष्टरूपेण वा तद्भेदस्य जन्यत्वस्य च दुर्वचत्वेन तदनुपपत्तेः । न चागन्तुकावच्छेदकभेदात् अवच्छिन्ने तदुभयोपपत्तिरिति वाच्यम् । वस्तुतोऽवच्छेदकभेदस्याप्याद्वितीये तत्रानभ्युगमात्; व्यावहारिकतया तदभ्युपगमे च तस्यैव वृत्त्यात्मकावच्छेदकस्य साक्षात्प्रमाणजन्यत्वोपगमेन प्रत्यक्षप्रमात्वाश्रयणौचित्यात् तदवच्छिन्नचैतन्यपर्यन्तानुधावनवैफल्यापत्तेः । जडपरिणामरूपस्य तस्यार्थप्रकाशकत्वानभ्युपगमे च तुल्यन्यायेन तत्र चैतन्याभिव्यञ्जकत्वस्याप्यसंभवेन तद्रूपतदवच्छेदकत्ववाचोयुक्तेरप्ययुक्तेः । न च तदतिरिक्तेन संयोगादिवैशिष्ट्येनाप्यवच्छेदकत्वं संभवतीति वाच्यम् । विभिन्नावच्छेदकविशिष्टयोः क्वचिदप्यभेदायोगात् । न चोपाधिविशेषणयोर्भेदोपगमेन विभिन्नविशेषणविशिष्टयोरभेदासंभवेऽपि एकदेशस्य विभिन्नोपाध्यवच्छिन्नयोर्मठान्तर्वर्तिघटाकाशमठाकाशयोरिवाभेदो न विरुद्ध इति वाच्यम् । उपाधित्वेनाभिमतयोः क्वचिदुपहिते सामानाधिकरण्योपगमे तत एव विरोधाभावेन विभाजकत्वानुपपत्त्या तत्तदवच्छेदकभेदेन त्रिविधं चैतन्यमिति विभजनायोगात् । घटमठावच्छिन्नाकाशयोः व्याप्यव्यापक भूतयोरपि परिमाणतारतम्यावधारणेनाभेदाभिमानस्य बाधसंभवेन तदसिद्धेश्च । अन्यथा सोपाधिकनिरुपाधिकचैतन्ययोरपि तुल्यन्यायादद्वैते श्रुतिसूत्रादौ भेदव्यपदेशादेर्दुर्निर्वहत्वापत्तेः ।

किं च विषयाकारपरिणामस्य विषयदेशभिन्नतद्बहिर्देशाद्यवच्छेदेनैवाभ्युपगन्तव्यस्य न विषयेण सह सुवचमेकदेशस्थत्वमपि । स्थूलदेशमादाय तदुपपादने परस्परसंयुक्तघटशरावयोरपि तत्संभवेन तद्घटशरावाकाशयोरप्यभेदापत्तिः । अन्तःकरणस्य विषयसंयोगाय बहिः प्रसरणोपगमेऽपि विषया-

कारपरिणामोपगमे च न किंचित् प्रयोजनमस्ति येन कथंचिद्विषये समान-देशस्थत्वमाशङ्क्येत । न च बहिः प्रसृतस्य तेजसस्यान्तःकरणस्य विषय-देशमात्रे विश्रान्तिरिति वक्तुं शक्यं; येन तटाकोदकस्य सीमापरिवृतकेदारा-कारेणैव विषयाकारेण परिणाम इत्यभ्युपगम्येत ? केदारस्येव विषयस्याभिता वरणाभावात् । अत एव घटादिदर्शनकाले पार्श्वस्थपटादिदर्शनोपपत्तिः । अपि च चैतन्यस्यैवार्थप्रकाशकत्वमभ्युपगच्छतां किमन्तःकरणस्य वृत्त्यभ्युप-गमेन । विषयेन्द्रियादिसंनिकर्षे सति चैतन्यमेव प्रत्यक्षमित्यपि वक्तुं शक्यत्वात् । न चान्तःकरणपरिणामवृत्तिसद्भावे तस्या एव ज्ञानत्वादौ चानन्यथासिद्धं किंचित् प्रमाणं सुवचम् । येन प्रयोजनातिशयाभावेऽपि प्रमाणबलादभ्युपगम्येत ।

न च कामस्सङ्कल्प इत्यादिश्रुतिरेव तत्र मानमिति वाच्यं; कामस्सङ्कल्प इत्यादेरायुर्घृतमित्यादिवदनुपादानत्वेऽपि निमित्तत्वमात्रेणाप्युप-पत्तेरुक्तत्वात् । ज्ञानतद्विशेषादावन्तःकरणस्यासाधारणकारणत्वेन कारणत्वात् । अत एव तस्यान्तःकरणमिति प्रसिद्धिः । मनसा कामान् कामयत इत्यादौ करणताश्रवणमप्युपपद्यते । न च घटं जानामि विज्ञातारमरे केन विजानीयात् इत्यादिलोकवेदप्रयोगानुरोधेन स्वरूपचैतन्यातिरिक्तस्य तद्धर्मतया प्रतीय-मानस्य वृत्तिचैतन्यस्य सिद्धिरिति वाच्यम् । तस्यान्तःकरणवृत्तित्वानुपपत्तेः । आत्मधर्मतया हि तत्प्रतीतिः । न चासौ भ्रान्तिः; बाधकाभावात् । अन्यथा घटादिज्ञानस्यैवासिद्धिः । तस्यान्तः करणधर्मतायां साधकाभावो दर्शित एव । अतः परिभाषाद्युक्तमन्तः करणवृत्ति-तन्निर्गम-तत्परिणाम-तद्द्वारत्वादि प्रमाणगन्धविधुरमेव । अतो नोक्तविधं प्रत्यक्षम् । नापीन्द्रियजन्यज्ञानमेव ईश्वरज्ञानादावव्याप्तेरिति चेत्—अत्रोच्यते ।

## सिद्धान्तिनां प्रत्यक्षलक्षणम्

आत्मधर्मभूतमेव घटादिज्ञानं 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' 'अविनाशी वाऽरेऽयमात्माऽनुच्छित्तिधर्मा' नित्या एवात्मनो हि ते' इत्यादि-प्रमाणगणानुरोधेन तत्रात्मधर्मत्वस्य मुख्यज्ञानत्वस्य स्वरूपेण नित्यतायाश्च प्रागेव साधितत्वात् । तस्यैव हि प्रत्यक्षप्रमात्वादयोऽवस्थाभेदाः । तज्जन-कत्वेन चक्षुरादीनां मुख्यमेव प्रमाणत्वमित्युपगमे च न कश्चित् विरोधः ।

अतश्चक्षुरादीनां चैतन्योपाधिजनकत्वेन प्रमाणत्वमौपचारिकमित्युक्तिर्नियुक्तिका । इन्द्रियजन्यत्वं जन्यप्रत्यक्षस्य लक्षणमित्यक्षपादजैमिन्यादय आशेरते । प्रत्यक्षसामान्यस्य तु साक्षादनुभवत्वं लक्षणमिति प्रमेयसङ्ग्रहादिकृतः । तत्र साक्षात्त्वं साक्षात्करोमीत्यनुभवसिद्धो जातिविशेष उपाधिर्वा । उपाधिश्च ज्ञातकरणाजन्य-स्मृतिभिन्नज्ञानत्वं; लैङ्गिकत्व शाब्दत्व-स्मृतित्वरहितज्ञानत्वं वा । तच्चास्मदादीनां ज्ञाने इन्द्रियकरणक एव भवितुमर्हति, नत्विन्द्रियेतरकरणके । क्लृप्तसामग्रीविरहे कार्यतावच्छेदक साक्षात्त्व-संपत्त्ययोगात् ।

## प्रत्यक्षे इन्द्रियेतरकरणानङ्गीकरणम्

न च सामग्र्यन्तरं प्रत्यक्षविशेषे संप्रतिपद्यते । अभावप्रत्यक्षं चेन्द्रियान्वयव्यतिरेकानुविधानेनेन्द्रियजन्यमेव । न च तत्राधिकरणग्रहणोपक्षीणमिन्द्रियानुविधानमिति वाच्यं, तर्हि तुल्यन्यायेन गुणादिप्रत्यक्षेऽपि प्रमाणान्तरकल्पनापत्तेः । अधिकरणघटितेन्द्रियसंनिकर्षस्य च गुणवत् अभावेऽपि समत्वाच्च । भावग्राहिणामपीन्द्रियाणां सहकारिविशेषादभावग्राहकत्वमविरुद्धम् । अन्यत्र करणतया क्लृप्तेनैव प्रकृतेऽपि कार्यजनने संभवति तत्सहकारिणः करणत्वकल्पने गौरवमतिप्रसङ्गश्च स्यात् । अतोऽभावप्रत्यक्षेऽपि न तावदिन्द्रियाद्भिन्नाऽनुपलब्धिः कारणम् । सघटं भूतलमिति प्रत्यक्षवत् अघटं भूतलमिति प्रत्यक्षमपीन्द्रियेणैव करणेनानुपलब्धिसहकृतेन जन्यत इति न क्वचिदपि प्रत्यक्षे करणान्तरप्रसक्तिः । 'मनष्षष्ठानीन्द्रियाणि' 'इन्द्रियाणि दशैकं च' 'एकादशं मनश्चात्र' इत्यादिश्रुतिस्मृतिवचनैः इन्द्रियत्वेन प्रख्यापनात् अन्तःकरणस्य योगिप्रत्यक्षादौ करणत्वाभ्युपगमेऽपि नापूर्वकरणक्लृप्तिः । दिव्यादिव्यभेदसद्भावोपगमेऽपि इन्द्रियत्वानुगमाभ्युपगमात् । अत एव शमदमादिसंस्कृतं मन एवान्तःकरणमिति शाङ्करगीताभाष्यं प्रववृते । 'एषोऽणुरात्मा चेतसा वेदितव्यः' 'दृश्यते त्वग्र्यया बुद्ध्या' 'मनसैवानुद्रष्टव्यं' 'मनसैवेदमाप्तव्यं' इत्यादीनि प्रमाणानि च ।

योगिप्रत्यक्षस्येन्द्रियानपेक्षत्वपक्षेऽपि तदितरापेक्षाप्रसक्त्यभावेन नापूर्वकरणकल्पनावसरः । तदिह प्रत्यक्षं चेत् करणतयेन्द्रियसापेक्षं वा स्यादनपेक्षं वा न तु करणान्तरसापेक्षमपीत्युक्तं भवति । एतेन 'इदं हि न केवलं शाब्दं, किं तु आनुमानिकमपि प्रत्यक्षमित्युक्तन्यायेन प्रतिपाद्यते । उदाहि

यते च पर्वतो वह्निमानिति ज्ञानं पर्वतांशे प्रत्यक्षमनुमानजन्यमित्याद्युक्त'मप्यपास्तम् । पर्वतांशे प्रत्यक्षत्वोपगमे हि अनुमितेराकारो न वह्निरित्येतावन्मात्रं, किं तु पर्वतो वह्निमानित्याकारः इत्यनन्तरोक्तं स्ववाक्यमपि व्याहन्येत, प्रत्यक्षांशत्वेनोपगतस्यानुमित्याकारत्वानुपपत्तेः । पर्वतप्रत्यक्षस्यानुमानजन्यत्वोपगमे च 'तच्च व्याप्तिज्ञानं वह्निविषयकज्ञानांश एव करणं न पर्वतविषयकज्ञानांश'' इति परिभाषावाक्यमपि विरुद्ध्येत । तत्र प्रत्यक्षांशस्यानुमानजन्यत्वप्रतिषेधात् ।

वस्तुतस्तु—-विशेषेऽनुगमाभावात् सामान्ये सिद्धसाधनात्'' इत्युक्तरीत्या सामान्यस्य विशेषान्तरस्य च, साधनासंभवेन पक्षधर्मतासहकृत सामान्यव्याप्तिज्ञानबलेन साध्ये पक्षधर्मतारूपविशेषस्यैव साधनाभ्युपगमावश्यं भावेन पर्वतादिरूपपक्षांशेऽप्यनुमितित्वमेवाभ्युपगन्तुं युक्तं, न तु तन्मात्रे संनिकर्षसत्त्वेऽपि प्रत्यक्षत्वं, तद्घटिततदधिकार्थस्यैव व्याप्तिज्ञानबलेन भानावश्यंभावात् । अत एव प्रमाणविदः प्रत्यक्षसामग्र्यपेक्षया विभिन्ने विषयेऽनुमितिसामग्र्याः प्रबलत्वमाचक्षते । तत्र यदि पर्वतं पश्यामीत्यनुभवस्स्यात् स तर्हि पूर्वोत्तरतत्प्रत्यक्षविषयस्स्यात् नत्वनुमितावेवांशिकप्रत्यक्षविषयः । माषराशिप्रविष्टमष्यादौ माषत्वाभिमानवत् पूर्वोत्तरतत्प्रत्यक्षसन्दष्टतदनुमितावेव तत्प्रत्यक्षत्वाभिमानो वा स्यात् । न च तावन्मात्रेण पर्वतो वह्निमानित्यनुमितेः पर्वतांशे प्रत्यक्षत्वसिद्धिस्स्यात् । सन्निकर्षबलेन तत्र प्रत्यक्षमेवेति केषाञ्चिदभिनिवेशोऽपि सन्निकर्षाधीनतयाऽभिमते तत्रानुमानजन्यताया वक्तुमशक्यत्वेन प्रत्यक्षे इन्द्रियेतरकरणप्रतिषेधरूपप्रकृतार्थस्य न विरोधः ।

एतेन सन्निकृष्टेऽर्थे वाक्यादिनाऽपि प्रत्यक्षमेव जन्यत इति केनचिदुक्तमपि प्रत्युक्तम् । सन्निकर्षत एव प्रत्यक्षसंभवे तत्र वाक्यप्रवृत्तेरनर्थकत्वाच्च । एवं परोक्षज्ञानेष्वपि ज्ञानांशस्य विषयप्रकाशनवेलायामाश्रयं प्रत्यपरोक्षत्वाभ्युपगमेऽपि न तत्र करणान्तरापेक्षा । तदानीं तत्र स्वयंप्रकाशत्वोपगमात्, अन्यदा चान्यं प्रति च परोक्षत्वेनैवाभिमतस्य तस्य तदा करणान्तरवेद्यत्वोपगमेऽपि न क्वचित् क्षतिः । सर्वेषां तत्तत्स्वरूपचैतन्यस्य सर्वदा सद्भावभानोपगमेन तत्रासत्त्वापादकमभानापादकं वाऽऽवरणं न

कदाचिदुपेयते । अत एव स्वरूपसंविदः आवरणाभावादेव न तन्निवर्तनाय संवित्स्वप्रकाशेति वाक्यमपेक्ष्यते । किं तु स्वत एव सदा प्रकाशमानायास्स्वरूप-संविदो यस्स्वयंप्रकाशत्वरूपो धर्मस्तस्य स्वतः प्रकाशानुपगमेन तद्भानाय तदावरणनिवर्तनाय वा तद्वाक्यमपेक्ष्येत; यदि तत्स्वरूपतत्परं स्यात् ।

### संवित्स्वप्रकाशेतिवाक्यजन्यस्य परोक्षत्वमेव

तदधीनं च स्वप्रकाशत्वज्ञानं परोक्षरूपमेव न त्वपरोक्षात्मकं; अनन्याधीनप्रकाशत्वरूपस्वयंप्रकाशत्वस्य प्रत्यक्षेण ग्रहीतुमशक्यत्वात् । अन्यथा तत्र विवादस्यैवानुत्थानात् । अयोग्यधर्मविशिष्टस्य योग्यस्यापि प्रत्यक्षायोगात् । अन्यथा कार्तान्तिकवाक्यात् धर्माधर्मविशिष्टतयाऽप्यात्मनः प्रत्यक्षापत्तेः । न च स्वरूपगतस्य प्रत्यक्त्वस्येव तद्घटकतया स्वप्रकाशत्व-स्यापि स्वरूपेण भानोपगमावश्यंभावात् न तस्यायोग्यत्वमिति वाच्यम् । तथापि परोक्षसामग्रीघटकस्य वाक्यस्यापरोक्षहेतुत्वाङ्गीकारायोगात् ।

वस्तुतस्तु समीचीनोपपत्तिसहकृतप्रमाणशतसमधिगतस्संविदात्म-भेदो दुरपह्नव इत्यसकृदुक्तम् ।

तत्र स्वेतरसंविदात्मस्वरूपस्य स्वप्रत्यक्षायोग्यत्वेन संवित्स्वरूप-सामान्यस्य संवित्पदार्थस्य कथं प्रत्यक्षं भवितुमर्हति ? कथंतरामुक्तवाक्येन परोक्षसामग्रीघटकतया संप्रतिपन्नेन ? एवं धर्मभूतसंविदामपि पुरुषभेदेन व्यवस्थितविषयभेदेन परोक्षापरोक्षव्यवहारादिभेदेन च भेदस्य स्फुटप्रति-पन्नतया तथाविधसर्वसंविदामेकदा कस्यचिदपि पुरुषस्य प्रत्यक्षायोग्यत्वेन तादृशसंवित्परत्वेऽप्युक्तवाक्यस्य वाक्यार्थप्रत्यक्षजनकत्वं न संभवतीत्युक्तमेव शतदूषण्यादौ ।

न चात्रानुपहितैकमात्रसंविदि स्वयंप्रकाशत्वं प्रतिपिपादयिषितमिति वक्तुं युक्तम् । सामान्यपरत्वे संभवति विशेषपरतया संकोचस्यान्याय्यत्वात् संविदैक्यस्य निरस्तत्वाच्च । तथाचात्र प्रतिपिपादयिषितस्वप्रकाशत्वरूप-धर्मस्य तदाश्रयतयाऽभिमतनिखिलसंविद्व्यक्तीनां च तदानीं प्रत्यक्षासंभवाद-प्युक्तवाक्यस्य वाक्यार्थप्रत्यक्षजनकत्वं न संभवतीति सिद्धे परोक्षजनकत्वे कथमेतद्दृष्टान्तेन वाक्यान्तराणां प्रत्यक्षजनकत्वं साधयितुं शक्यं स्यात् ।

संप्रतिपन्न एव हि दृष्टान्तः प्रदर्शयितव्यः न त्वेवं विप्रतिपन्नः । अत एवोक्तं नरविषाणाङ्कुरप्रसाधने खरविषाणाङ्कुरनिदर्शनमिदमिति ।

### दशमस्त्वमसीत्यत्र परोक्षत्वमेव

एतेन दशमस्त्वमसीति वाक्यवदिति निदर्शनप्रदर्शनमपि प्रत्युक्तम् । तत्रापि वाक्येन परोक्षस्यैव जननोपगमात् । तत्र कस्यचिदपरोक्षत्वबुद्धिसत्त्वेऽपि तस्याः भ्रमरूपतायाश्शतदूषण्यामुपपादितत्वात् । न च भ्रान्तिमात्रात् विषयसिद्धिमनुमन्यामहे । न च दशमोऽहमिति ग्रहस्यापरोक्षत्वानुपगमे नाहं दशम इति अपरोक्षभेदभ्रमस्य बाधो न स्यात् न्यूनत्वेन परोक्षस्य प्रत्यक्षबाधकत्वोयोगादिति वाच्यम् । तत्र वाक्यश्रवणात्पूर्वमात्मनि दशमत्वग्रहस्यैव दशमभेदग्रहस्याप्यभावात् । सङ्ख्यान्तरपूरकत्वग्रहणे हि दशमभेदग्रहस्स्यात् । न ह्यात्मनि तत्र नवमत्वादिकं गृह्यते आत्मनस्तत्रासङ्ख्यानात् ।

### परोक्षेणाप्यपरोक्षभ्रमबाधः

तथा परोक्षेणापि शास्त्रजन्यज्ञानेन अपरोक्षदेहात्मभ्रमादेः बाधदर्शनाच्च । न हि देहात्मभ्रमनिवृत्त्यभावे देहान्तरानुभाव्यफलके बह्वर्थव्ययायाससाध्ये कर्मानुष्ठाने प्रवृत्तिरुपपद्येत । न च ज्ञानयोगादिरहितस्यापि वाक्यादेव देहाद्यतिरिक्तत्वेनाप्यात्मनः साक्षात्कारस्संपद्यत इत्युपगन्तुं शक्यं, ज्ञानयोगादिविधिवैयर्थ्यापत्तेः, चार्वाकादिदुर्वादिगर्वारवाणां प्रतिकथकप्रतिज्ञामात्रेण स्वयमेव विलयापत्तेः, परोक्षेणापि ज्वालाभेदानुमानेन ज्वालैक्य प्रत्यक्षबाधस्य सर्वाभ्युपेतत्वाच्च । अतो बाध्यबाधकभावे परोक्षत्वमपरोक्षत्वं वा न तन्त्रं, किं तु अप्रमाणकोटिनिवेशार्हत्वात् अविरुद्धविषयलाभाद्वा सावकाशत्वेन यदन्यथासिद्धं तत् बाध्यं, यच्चोक्तसावकाशत्वाभावेन स्वविषयमिथ्यात्वेऽनुपपन्नतयाऽनन्यथासिद्धं तत् बाधकमित्येव हि सर्वत्र बाध्यबाधकभावनिर्णय इति श्रीभाष्यादावुपपादितम् । तथा च दशमोऽहमिति परोक्षग्रहेणाप्यसंभाव्यमानान्यथासिद्धिना अन्यथासिद्धापरोक्षभेदभ्रमो बाधितुं शक्यत एव । एवं तत्त्वमसीत्यादावपि परोक्षग्रहेणैवापरोक्षभ्रमबाधस्संभवत्येवेति न तदन्यथाऽनुपपत्त्या शाब्दापरोक्षवादस्वीकारावश्यंभावः ।

## बाधकानुमानस्यापि विपक्षे बाधकाभावः

एतेनाद्वैतसिद्धौ 'अपरोक्षत्वं तत्त्वमस्यादिवाक्यजन्यज्ञानवृत्ति' इत्यनुमानस्य विपक्षेऽपरोक्षभ्रमबाधकत्वानुपपत्तिरूपबाधकसत्त्वेन अपरोक्षत्वं कर्मकाण्डजन्यज्ञानवृत्तीत्यनुमानात् विशेषवचनमपि प्रत्युक्तम् । अपरोक्षग्रहादेवापरोक्षभ्रमनिवृत्तिरिति निर्बन्धबलेन भेदभ्रमनिवर्तकस्यापरोक्षत्वोगमेऽपि तस्य क्लृप्तशक्तिकेन तदानीमपि व्याप्रियमाणेनेन्द्रियेणैव जननसंभवादिन्द्रियव्यापाराद्युपक्षीणतयाऽप्यन्यथासिद्धचर्हवाक्यजन्यत्वोपगमावश्यंभावाभावेन विपक्षे बाधकाभावस्य तदवस्थत्वाच्च । मनसश्चेन्द्रियत्वं श्रुतिस्मृतिशतसमधिगतं दुरपलपमिति प्रागेवोक्तम् । तस्य स्वात्मतत्संबद्धानुभवोपयोगानुपगमेऽपि योगेन परमात्मदर्शनादावुपयोगोऽपि न निषेद्धुं शक्यत इति प्रमाणत्वं दुरपह्नवम् । मनसैवानुद्रष्टव्यमित्यादिश्रुतिवाक्यानां स्वारसिकार्थमानसापरोक्षपरित्यागेन क्लिष्टार्थपरिग्रहे न कंचिदपि हेतुमुपलभामहे । न चैवमिन्द्रियजन्यत्वसंभवेऽपि वाक्यार्थापरोक्षस्य समतया भेदापरोक्षभ्रमनिवर्तकत्वं न संभवतीति वाच्यम् । अन्यथासिद्धितदभावाभ्यां वैषम्यस्यापि सुवचत्वात् । अन्यथा शास्त्रजन्यप्रत्यक्षस्याप्यबाधकत्वापत्तेः ।

## प्रत्यक्षस्य शास्त्रजन्यत्वेऽपि न प्राबल्यसंभवः

न च शास्त्रजन्यप्रत्यक्षमदुष्टहेतुकत्वात् भेदभ्रमबाधने समर्थमिति वाच्यम् । एकदोषप्रसूतत्वादेदर्शयिष्यमाणत्वादित्यादिना शतदूषण्यामेव शास्त्रजन्यप्रत्यक्षप्राबल्यस्य शतधा दूषितत्वात् । ऐतदात्म्यमिदं सर्वमित्युक्तस्योपसंहाररूपत्वात् तत्त्वमसीति वाक्यस्याप्राप्तार्थपरत्वाभावेन स्वजन्यज्ञान द्वारा भ्रमनिवर्तकत्वाप्रसक्तेः । तद्वाक्यार्थज्ञानमूलकोपासनप्रीणितभगवत्सङ्कल्प निवृत्तकर्मरूपकारणाभावादेवापरोक्षनिरपेक्षं सकलभ्रमनिवृत्त्युपपत्तेश्च । न च बाधकज्ञानादेव भ्रान्तिनिवृत्तिरिति नियमोऽस्ति । यथाऽऽहुः—

**न भ्रान्तिर्बाधकज्ञानान्नियमेन विनश्यति ।**
**न स्याद्धि भ्रान्तचित्तस्य सुषुप्तौ भ्रान्तिसंक्षयः ।।** इति ।

अतो वाक्यजन्यापरोक्षे न तावदुपपत्तिगन्धः । न च प्रमाणबलात् तदभ्युपगमः । प्रमाणलेशस्यापि तत्रानुपलब्धेः । न च तमसः पारं दर्शयति भगवान्

सनत्कुमार इति तत्र प्रमाणं, चाक्षुषवाचकस्य दृशिधातोस्तत्र लाक्षणिकत्वोपगमावश्यंभावेन विशदज्ञानमात्रविवक्षाभ्युपगमस्यैवात्र समुचितत्वात् । अधिकमग्रे ।

## वाक्यापरोक्षे परोक्तप्रमाणान्यथासिद्धिः

एतेन 'स्वाध्यायश्चक्षुः, वेदश्चक्षुः, अध्ययनमनननयनोऽस्य द्रष्टेत्यादिकमपि व्याख्यातम् । चक्षुष्ट्वस्य चाक्षुषजनकत्वस्य वा विवक्षाया असंभवेनान्यपरतायाः स्फुटत्वात् । नापि 'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यनेन तत्सिद्धिः । विज्ञानशब्दस्य ज्ञानशब्दपर्यायतया दृष्टप्रयोगस्यापरोक्षवाचकत्वाभावात् । विजिज्ञासितव्यमित्यादाविव तत्र विशब्दस्यार्थविशेषपरत्वोपगमेऽपि वैशद्यमात्रविवक्षयैव तदुपपत्तेः, अपरोक्षत्वविवक्षाभ्युपगमस्यानावश्यकत्वात् । सुनिश्चितार्था इत्यत्र सुशब्देनापि हि निश्चयस्याकम्पनीयतया दार्ढ्यमेवावगम्यते, न त्वपरोक्षत्वमित्यादिकमाचार्यैरेव प्रपञ्चितम् । दार्ढ्यं च निश्चयस्याबाध्यत्वं, संशयविपर्ययासहत्वं वा अत एव शङ्करभाष्ये वाक्यान्वयाधिकरणे 'निरपवादं हि विज्ञानं सर्वाकाङ्क्षानिवर्तकमात्मविषयमिष्यते, वेदान्तविज्ञानसुनिश्चितार्था इति श्रुते'रित्युक्तम् । तत्र 'संशये सति न सुनिश्चितार्थमात्मविज्ञानं भवेत् सुनिश्चितार्थं च ज्ञानं मोक्षोपायः श्रूयते-वेदान्तविज्ञान सुनिश्चितार्था' इतीति भामत्यामुक्तम् । भाष्ये निरपवादत्वमबाध्यत्वमिति कल्पतरावुक्तं च सङ्गच्छन्ते । अन्यथा प्रत्यक्षे सत्यपि क्वचित् संशयबाधोदयदर्शनात् उक्तवाक्यानामसङ्गतत्वापत्तेः । न ह्येवंविधातत्परवाक्यसहस्रोदाहरणेऽपि तावता शाब्दापरोक्षे किमपि प्रमाणमुपदर्शितं भवति । तत्रानन्यपरं च किञ्चिद्वाक्यं न क्वचिदुपलभ्यत इति कथमिहोदाहर्तुं शक्यं ? तस्मादप्रामाणिक एव शाब्दापरोक्षवादः ।

यानि च 'संवित्स्वप्रकाशा' दशमस्त्वमसीत्यादीनि वाक्यानि निर्दर्शितानि, तेष्वपि न स्वेष्टसिद्ध्यवकाश इति प्रतिपादितम् । तत्र ह्याद्यवाक्यस्य स्वरूपसंवित्परत्वे धर्मभूतसंवित्परत्वे वा तासां प्रत्येकं नानात्वस्य प्रामाणिकत्वेनैकसंविन्मात्रपरत्वं दुर्वचमित्यपि प्रागेवोपपादितम् । अतस्सर्वसंविदां तत्स्वप्रकाशत्वस्य च तदानीं कस्याप्यपरोक्षयोग्यताविरहात् तद्वाक्येन परोक्षमेव ज्ञानं जायत इत्यभ्युपेतव्यमित्यप्यभ्यधायि ।

द्वितीयवाक्येन च प्रागैन्द्रियकप्रत्यक्षाविषयस्यापि दशमत्वस्य वाक्येन प्रत्यक्षोपगमे धर्मवाँस्त्वमसीतिवाक्यतो धर्मस्यापि प्रत्यक्षापत्तिभिया परोक्षमेवानुमन्तव्यमित्यपि न्यरूपि । असंप्रतिपत्तिस्तूभयत्र तुल्या । अत्र चैन्द्रियकत्वातीन्द्रियकत्वादिविशेषोऽकिञ्चित्करः, वाक्यजप्रत्यक्षमेव ह्यापाद्यते, नत्विन्द्रियजन्यः । न चेन्द्रियजप्रत्यक्षविषयस्यैव वाक्यजप्रत्यक्षविषयत्वमिति नियमोऽस्ति । वाक्यजप्रत्यक्षस्यैव क्वचिदपि संप्रतिपत्त्यभावेनोक्तनियमासिद्धेः । तथाविधनियमोपगमे स्वप्रकाशतयेन्द्रियजप्रत्यक्षाविषयत्वेनाभिमतायास्स्वरूपसंविदो, वाक्यापरोक्षात्पूर्वं प्रत्यक्षाविषयत्वेनाभिमतस्य तत्त्वंपदार्थैक्यस्य च तत्त्वमसीत्यादिवाक्यजप्रत्यक्षाभ्युपगमानुपपत्तेः । तस्या अपीन्द्रियजप्रत्यक्षोपगमे दृश्यत्वमिथ्यात्वादिकमपि युष्माकमवर्जनीयमापद्येत, तथा च कूपखाते भूताविर्भावस्स्यात् । अतः प्रमाणानां क्लृप्तशक्तिरनतिलङ्घनीया । अन्यथा परोक्षज्ञानदशायामिन्द्रियेणापि परोक्षज्ञानस्यैव जननापत्तेः । शब्दप्रमाणस्य च परोक्षजननशक्तिमेव नैसर्गिकीं संप्रतिपद्यामहे ।

## विषयगतपरोक्षापरोक्षत्वयोरविरोधः

न चासौ परोक्षापरोक्षविषयभेदेनान्यथा भवितुमर्हति । प्रमाणान्तरेणापि निर्वोढुं शक्यस्य विषयगतापरोक्ष्यस्य शब्दशक्त्यन्यथाकरणनिबन्धनत्वायोगात् । अन्यथा श्रवणादशायामपि परोक्षाभ्युपगमानुपपत्तेः । विषयगते च परोक्षत्वापरोक्षत्वे न परस्पराभावरूपे, येनैकत्र विरुद्ध्येयातां, किं तु परोक्षविषयत्वापरोक्षविषयत्वरूपे एव । तथाविधे च ते एकत्रापि प्रमाणसंभेदादविरुद्धे एव ।

## परोक्तविषयापरोक्ष्यप्रतिक्षेपः

यत्तु—विषयगतमापरोक्ष्यं प्रमात्रभिन्नत्वमिति । तन्न; विषयस्य घटादेरचेतनस्य कथंचिदपि प्रमातृचेतनाभेदायोगात् । न चान्तःकरणावच्छिन्नचैतन्यं प्रमातृ; तदभेदश्च न तावदैक्यं, किं तु तत्सत्तातिरिक्तसत्ताकत्वाभावः । तथा च घटादेः स्वावच्छिन्नचैतन्येऽध्यस्ततया विषयचैतन्यसत्तैव घटादिसत्ता । अधिष्ठानसत्तातिरिक्ताया आरोपितसत्ताया अनङ्गीकारात् । विषयचैतन्यं चात्र प्रमातृचैतन्याभिन्नमिति तत्सत्तैव घटादिविषय-

सत्तैत्यभेदोपपत्तिरिति वाच्यम् । विषयचैतन्यप्रमातृचैतन्ययोर्विभिन्नोपाध्यवच्छिन्नयोरभेदायोगात् । न चोपाध्योरिह समानदेशस्थत्वसंभवात् न भेदकत्वमिति वाच्यम् । विषयदेशं प्रति वृत्तिनिर्गमोपगमादेव प्रत्यक्षोपपत्तौ अन्तःकरणनिर्गमाङ्गीकारे प्रयोजनाभावेनोपाध्योस्समानदेशस्थत्वाभावात् । परमार्थसति ब्रह्मण्यारोपितत्वेनाभिमतस्य प्रपञ्चस्य व्यावहारिकसत्तोपगमेन अधिष्ठानसत्तातिरिक्तारोपितसत्तानङ्गीकारस्य वक्तुमशक्यत्वाच्च । अन्यथा सत्तात्रैविध्यकल्पनानुपपत्तेः ।

वस्तुतस्तु—'याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यस्समाभ्य' इत्यादिप्रमाणशतस्वारस्यानुरोधेन विषयप्रपञ्चपारमार्थ्यस्य समर्थितत्वेन तत्रारोपकथाया अप्रसक्त्या अधिष्ठानाभिमतसत्तातिरिक्तसत्ताया अबाध्यत्वात्। प्रमातृचैतन्येन नोक्तपारिभाषिकाभेदस्यापि संभावनावकाशोऽस्ति । तस्मान्न प्रमात्रभेदो विषयगतमापरोक्ष्यं, किं तु यथोक्तमेव । तच्च परोक्षज्ञानान्तरविषयेऽप्यव्याहतमेवेत्युक्तम् ।

### संनिकृष्टेऽपि शब्दानुमानाभ्यां प्रत्यक्षासंभवः

यथोक्तापरोक्षविषयस्यापि सत्यपि संनिकर्षे शब्दानुमानाभ्यां परोक्षमेव जायते, शाब्दत्वानुमितित्वयोरेव तज्जन्यतावच्छेदकत्वात् । जन्यतावच्छेदकावच्छिन्नस्यैव सामग्र्या जननात् । अनुमित्यादीच्छायां सत्यां प्रत्यक्षसामग्र्यास्समानविषयेऽप्यनुमित्याद्यप्रतिबन्धकत्वस्य प्रमाणविदामभिमतत्वात् । तथा च साक्षात्वस्यैवापरोक्षलक्षणत्वोक्त्या तस्यानुमितित्व शाब्दत्वादिरहितज्ञानत्वरूपत्वेनानुमानशब्दादिजन्यज्ञाने दुर्घटत्वेन वाक्यादिजन्यज्ञानस्यापरोक्षत्वानुपपत्तेः । असत्यामिच्छायां प्रतिबन्धे तु प्रतिबन्धक प्रत्यक्षसामग्र्यैवापरोक्षसंभवे तत्र वाक्यानुमानादि न हेतुस्स्यात् । शुक्ताविदं रजतमिति भ्रमापरोक्षेऽपि अनुमितित्वशाब्दत्वादिरहितज्ञानत्वेनैव साक्षात्वमिष्यते नत्विदमाकारवृत्त्यवच्छिन्न रजताकारवृत्त्यवच्छिन्न चैतन्याभेदेन । अनुगतप्रयोजके संभवति अननुगतविभिन्नप्रयोजककल्पने गौरवात् । अन्तःकरणवृत्ति-तन्निर्गम-तदुपहितचैतन्यभेदादिकल्पनाया निरस्तत्वाच्च । तथा च करणविशेषजन्यत्वस्य प्रत्यक्षलक्षणत्वानुपगमेऽपि निरुक्तरूपस्य साक्षात्वस्य भ्रमप्रमासाधारण्येन नित्यानित्यसाधारण्येन च सर्वप्रत्यक्षानुगतस्य लक्षणत्वे-

नाभ्युपगन्तव्यस्य शब्दजन्यज्ञाने पूर्वोक्तरीत्या असंभव एव शाब्दप्रत्यक्षवाद-मुपरुणद्धि । शुक्तिरूप्य तदाविद्यकत्व-तदाकाराविद्यावृत्त्यादिकमसिद्धमेवेत्य-स्यान्यत्र विस्तरः ।

एवं सुखादिप्रत्यक्षस्यापि निरुक्तसाक्षात्वेनैव प्रत्यक्षत्वव्यपदेशः । अत एव सुखवर्तमानतादशायां त्वं सुखीति वाक्यजन्यं ज्ञानं न प्रत्यक्षं, वाक्यजन्यतावच्छेदकशाब्दत्वावश्यंभावेन निरुक्तसाक्षात्वाभावात् । पूर्वा-परोक्षसंभेदात् तत्रापि कस्यचिदपरोक्षत्वभ्रमः स्यात् । न तावताऽस्यापरो-क्षत्वसिद्धिस्स्यात् । अतो वाक्यजन्यं सुखादिज्ञानं परोक्षमेव । अपरोक्षं तु सुखादेः स्वप्रकाशतया न वाक्यसापेक्षमतो मनस इन्द्रियत्वनिराकरणेऽपि न सुखादेः वाक्यजप्रत्यक्षाभ्युपगमावश्यंभावः ।

वस्तुतस्तु मनस इन्द्रियत्वं तु प्रमाणशरणानां दुरपह्नवमित्युक्तमेवे-त्यन्यदेतत् । प्रत्यक्षत्वस्येन्द्रियजन्यत्वप्रयोज्यत्वानभ्युपगमेऽपि वाक्यादिघटि-तपरोक्षसामग्रयाः परोक्षशाब्दत्वादिप्रयोजकतायाः संमतत्वेन तथा समुत्पन्ने ज्ञाने तत्प्रयोज्यशाब्दादिपरोक्षताया अवर्जनीयत्वेन तद्विरुद्धमपरोक्षत्वं न संभवतीति संप्रत्युच्यते ।

न चासन्निकृष्ट एव विषये शब्दानुमानादेः परोक्षज्ञानजनकत्वनियम इत्युक्तमपि युक्तम् । शाब्दानुमितित्वाद्यवच्छिन्ने शब्दानुमानादेरुक्तरीत्या-व्यभिचारप्रसक्त्या करणत्वानापत्तेः । न चेष्टापत्तिरिति वक्तुं शक्यं, अनुमितिकरणमनुमानमित्यादिभवदीयपरिभाषादिवाक्यानामपि विरोधस्य दुरुद्धरत्वात् । न चासन्निकृष्टविषयत्वं कार्यतावच्छेदककोटौ निवेशनीयं, अतो न व्यभिचारप्रसक्तिरिति वाच्यं, तथासति तत्त्वमसीति वाक्यप्राथमिक-श्रवणदशायां कस्यचिदपि ज्ञानस्योत्पत्त्यनापत्तेः । संनिकृष्टविषयत्वेन शाब्दत्वावच्छिन्नस्य निदिध्यासनाभावेन प्रत्यक्षस्य चासंभवात् । ध्यानादि-परिकर्मित स्वान्तस्यैव हि वाक्यमपरोक्षं जनयतीति वस्सिद्धान्तः, अन्यथा ध्यानादिविधिवैयर्थ्यापत्तेः ।

न च ध्यानात्पूर्वमावरणेन भित्तिव्यवहितघटस्येव संन्निकर्षाभावात् असंनिकृष्टत्वेन तादानीमस्मदभिमतं परोक्षं शाब्दज्ञानमप्युपपद्यत एवेति वाच्यं, सर्वदा स्वयंप्रकाशमानस्य स्वात्मस्वरूपस्यावरणायोगात्, स्वरूपाति-

रिक्तस्य ऐक्यस्यानभ्युपगमात्, अभ्युपगमे तस्यावरणसंभवेऽपि वाक्येनैव तन्निवृत्तिसंभवात्, अन्यथा निदिध्यासनानन्तरमपि तदनापत्तेः।

दशमस्त्वमसीत्यादावपि ध्यानादिना विना दशमत्वाद्यावरणनिवृत्त्यनापत्त्या तत्प्रत्यक्षतानुपपत्तेः। अपि च संनिकृष्टविषये संनिकर्षेणैवापरोक्षजननसंभवे तत्र वाक्यादिपरोक्षसामग्र्या हेतुत्वकल्पनं निष्प्रयोजनमेव। संनिकर्षसंपादकतया वाक्याद्युपयोगविवक्षायां तु स्वजन्यज्ञानद्वारेणैव स वक्तव्य इति वाक्यादेः परोक्षज्ञान एव साक्षाद्धेतुत्वमुक्तं भवति। उत्तरभाविन्यपरोक्षे तु संनिकर्ष एव हेतुस्स्यादिति संनिकृष्टे विषये क्व वाक्यादिजन्यापरोक्षप्रसक्तिः? वाक्यादिकमावरणनिवर्तक वृत्त्युत्पत्त्युपक्षीणं आवरणनिवृत्त्यनन्तरभाविप्रत्यक्षे कथं निमित्तं स्यात्। न चावरणनिवृत्तिसापेक्षं प्रत्यक्षं ततः प्राग्भवितुमर्हति। अन्यथा वाक्यश्रवणात्पूर्वमपि तदापत्तेः। तत्रापि तदेव निमित्तमित्युपगमे विषयस्य संनिकृष्टत्वकथनं निरर्थकमेव हि स्यात्। असंनिकृष्टेऽप्युक्तरीत्या वाक्यत एव तत्संभवात्।

न च वाक्यसंनिकर्षयोः परस्परसहायेन तत्र प्रत्यक्षहेतुत्वमिति वाच्यम्। तथाऽन्यत्र क्वचिदपि अदृष्टेः। तथाऽभ्युपगमेऽपि तत्रैकतरस्य करणत्वकल्पनावसरेऽन्यत्र क्लृप्तशक्तिकस्य संनिकर्षस्य तत्प्रतियोगिन इन्द्रियस्यैव वा करणत्वकल्पनौचित्येन वाक्यकरणकत्वासिद्धेः। तथा च संविदैक्यवादिनाऽप्युपहिताकारेण परोक्षापरोक्षदिविभागस्य नासंनिकृष्टविषयत्वतदभावनिबन्धनत्वमुपगन्तुं शक्यं, किं तु वाक्यानुमानादिनिमित्तकत्वतदभावप्रयोज्यत्वमेव वक्तव्यम्। एवं सति वाक्यजन्यज्ञानस्य कथं प्रत्यक्षत्वं? अत्र प्रत्यक्षत्वं त्रिविधमित्यादिविभजनं त्वकिञ्चित्करमसम्बद्धं च। स्वरूपचैतन्यस्य वृत्त्यनुपधानदशायामिव वृत्त्युपधानदशायामपि स्वयंप्रकाशत्वानपायात् कथं परोक्षत्वं? वृत्तिविषयोपाध्यंशे क्वचित् परोक्षत्वेऽपि चैतन्यस्वरूपांशे सर्वत्रापरोक्षत्वस्याबाधितत्वात्। अतो न सर्वचैतन्यसाधारणं प्रत्यक्षत्वं धर्म इत्यद्वैतमतमित्युक्तं ह्यसम्बद्धमेव। स्वरूपांशे सर्वचैतन्यसाधारण्येऽपि प्रत्यक्षत्वस्य वृत्तिविषयोपाधिभेदात् तदंशे चैतन्यस्य परोक्षत्वापरोक्षत्वे अपि संभवत इति वक्तव्यम्। तत्र विषयाद्यंशे चैतन्यप्रत्यक्षत्वस्य करणभेदप्रयोज्यत्वानुपगमे वाक्यानुमानजन्यत्वाभावनिबन्धन-

त्वमेव वाच्यं, न तु प्रत्यक्षविषयोपाधिभेदनिबन्धनत्वमिति । अन्योन्याश्रयात् । अपरोक्षविषयत्वातिरिक्तविषयापरोक्षत्वस्य पूर्वमेव निरासात् ।

वस्तुतस्तु—अस्मदादिज्ञानपरोक्षत्वापरोक्षत्वयोः करणविशेषप्रयोज्यत्वं तत्तदन्वयव्यतिरेकानुविधानसिद्धम् । अतः प्रत्यक्षत्वपरोक्षत्वे न करणविशेषकृते इत्युक्तमयुक्तम् । विपरीतवासनानिवर्तकं संनिकृष्टविषये प्रत्यक्षं असंनिकृष्टविषये तु परोक्षमित्यव्यवहितस्ववचनेनैव विरोधाच्च । तत्र संनिकृष्टविषये प्रत्यक्षमित्यनेन संनिकर्षप्रयोज्यं प्रत्यक्षत्वमित्यस्य लाभेन तद्व्यापारकेन्द्रियप्रयोज्यत्वस्याप्युक्तप्रायत्वात् । तथा च तत्त्वमसि दशमस्त्वमसीत्यादावनिन्द्रियवाक्यजन्यज्ञानस्य वाक्यार्थविषये सर्वांशेऽपि परोक्षत्वमेव । मनननिदिध्यासनाद्यनन्तरभाविनस्तु परोक्षस्यापरोक्षस्य वा न वाक्यजन्यत्वमिति वाक्यजन्यवाक्यार्थापरोक्षकथायाः क्वावकाशः ? अविरुद्धांशभेदेन परोक्षत्वापरोक्षत्वसमावेशोपगमेऽपि रजतप्रत्यक्षे न विरुद्धशुक्तित्वे परोक्षस्यापत्तिरवतरेत्; अतस्तथाऽऽपादनमनुपपन्नमेव ।

### अपरोक्षविषये परोक्षोपगमेऽतिप्रसङ्गपरिहारः

एवमपरोक्षविषयेऽपि परोक्षप्रकाशोपगमे शुक्तित्वप्रकाशेऽपि रजतत्वावसायाविरोधस्स्यादिति केनचिदद्वैतिना प्रसञ्जितमनूद्य दूषितं शतदूषण्याम् । दुष्टेन्द्रियाधीनस्य रजतभ्रमस्य परोक्षत्वाभावेन शुक्तिज्ञाने सति प्रतिबन्धकसत्तया सामग्र्यभावेन चाप्रतिबद्धवाक्यसामग्रीजन्यपरोक्षसाम्याभावात् न तथाऽऽपादयितुं शक्यमिति भावः ।

### एकत्रैवाज्ञानद्वैविध्यनिरासः

अत्र यदुक्तं भावानवबोधादित्यारभ्य न हि वयं इदं रजतमिति भ्रमस्य परोक्षत्वानुपपत्तिं वदामः; न वा शुक्तिप्रकाशेन परोक्षेणाज्ञानस्यानष्टत्वात् शुक्तिभ्रमदशायां भ्रान्तिं वाऽऽपादयामः; येन शुक्तित्वग्रहेण प्रतिबन्धात् भ्रान्तिप्रसङ्गो वार्यते ? किं तु प्रातिभासिकेषु अभानापादकाज्ञानास्वीकारात् असत्वापादकाज्ञानपरिणामत्वस्यैव स्वीकारात् परोक्षज्ञानस्य चासत्वापादकाज्ञानमात्रनाशकत्वस्य स्वीकाराच्च परोक्षज्ञानेन तस्मिन्नज्ञाने निवृत्ते भ्रान्त्यनुदयमेव प्रसञ्जयामः; अयं च भ्रान्त्यनुदयप्रसङ्गस्स्वानिष्ट एवेति ।

तदसम्बद्धं—तथाहि कस्येह भावानवबोधः ? रजतावसायाविरोध-प्रसङ्ग इति वाक्यं रजतभ्रान्त्यनुदयप्रसञ्जनपरतया वर्णयतो वा ? किं वा रजतभ्रान्त्युदयप्रसङ्गपरमित्यनुसंधाय दूषयतो वा ? अविरोधप्रसङ्गे कथमनुदयः प्रसज्येत, विरोधे खल्वनुदयस्स्यादिति अनुदयं प्रसञ्जयत एव हि न केवलं भावानवबोधः किं तु शब्दार्थनवबोधोऽपि वक्तव्यः। तथा चक्षुर्व्यापारान्वयव्यतिरेकानुविधायिनो रजतभ्रमस्य परोक्षत्वमुपपन्नमिति विना प्रमादं को वा निश्शङ्कं ब्रूयात् ? किं च प्रातिभासिकेषु रजतादिषु किं विषयाज्ञानपरिणामत्वं स्वीक्रियते; किं रजताज्ञानपरिणामत्वं; शुक्त्यज्ञानपरिणामत्वं वा ? नाद्यः। रजताज्ञाने सति तत्प्रतिभासायोगात्। असति तु तत्परिणामस्यापि रजतस्यासत्त्वावश्यं भावात् न तत्प्रतिभासस्यात्। न द्वितीयः; शुक्तेः प्रातिभासिकत्वानभ्युपगमेन अभानापादकाज्ञानस्यापि स्वीकरणीयता तस्य-परोक्षेण निवृत्त्यनभ्युपगमात् अनिवृत्तेन तेन रजतभ्रमसंभवात् कथं रजत-भ्रमानुदयप्रसङ्गः ? न चासत्त्वापादकाज्ञानेनैव रजतभ्रम इति नियन्तुं शक्यं; नियामकाभावात् पारमार्थिकशुक्तेरसत्वापादकाज्ञानकल्पनाऽयोगात्, अभानापादकाज्ञानेनैव तदज्ञत्वव्यवहारस्य निर्वाहात् तदानीं नास्तीत्यादिव्य-वहाराणामप्यस्तित्वाद्यभानापादकाज्ञानत एव निर्वोढुं शक्यत्वाच्च। अधिक-मग्रे।

वस्तुतस्तु अनिर्वचनीयत्वेनाभिमते मानाभावादसत्वापादकमज्ञानं कुत्राप्यसिद्धमेवेति च सिद्धमन्यत्र। अपि चायं च भ्रान्त्यनुदयप्रसङ्गस्स्वा-निष्ट एवेति तु व्याहतवचनं; परानिष्टं हि प्रसञ्जनीयं न तु स्वानिष्टमेव। तथा चोक्तं स्वानिष्टं हि प्रसञ्जकं परानिष्टं प्रसञ्जनीयमिति तर्कतत्त्वव्यवस्था उभयमप्यत्र विपरीतमिति।

यत्तु—ब्रह्माज्ञानं त्रिविधं-असत्वापादकमनानन्दतापादकमभानापादकं चेति। तत्र श्रवणेन असत्वापादकमज्ञानमात्रं निवर्तते, मननेनानानन्दतापा-दकं; आभ्यामेव निदिध्यासनसहकृताभ्यामभानापादकाज्ञानस्यापि निवृत्त्या अखण्डकारा प्रत्यक्षवृत्तिर्जायते। तदानीमद्वैतिभिर्ब्रह्मणः परोक्षत्वं नाङ्गी क्रियते। अतः प्रत्यक्षतादशायां परोक्षत्वस्यैव प्रसञ्जकतया विवक्षितत्वात् प्रसञ्जकस्य स्वानिष्टत्वमुपपद्यत इति।

### प्रसञ्जकस्यानिष्टत्वायोगः

तन्न; प्रत्यक्षतादशायां परोक्षत्वस्य पराभीष्टत्वाभावेन प्रसञ्जकत्वानुपपत्तेः; स्वानिष्टं यत्पराभीष्टं तद्व्यापादकमिष्यते। अत एव "विपर्यये पराभीष्टं स्वाभीष्टे पर्यवस्यती"त्युच्यते।

न हि वयं प्रत्यक्षदशायामेव तद्विषये वाक्येन परोक्षमुपेमः; अपि तु तत्पूर्वापरदशयोः। प्रत्यक्षदशायां तु तत्प्रत्यक्षसामग्र्यैव पूर्वसिद्धया प्रत्यक्षान्तरमनन्तरभावि स्यात्; न तु वाक्यघटितया। प्रत्यक्षसामग्र्यां क्वचिदप्यन्यत्र वाक्यघटनानभ्युपगमाच्च। तद्दशायां श्रूयमाणमपि वाक्यं न किंचिज्ज्ञानं जनयति। ज्ञानानामयौगपद्यात्; परं तु तदुपरमे एव। तदाऽपि स्वशक्त्यपेक्षया परोक्षमेव। न च दर्शनानन्तरभाविना समानविषयज्ञानान्तरेण परोक्षसामग्रीजन्येनापि दर्शनात्मकेनैव भाव्यमिति नियमः। कमनीयवस्तु दृष्ट्वा तदेव चिन्तयतोऽपि पुनस्तद्दिदृक्षादृष्टेः। न हि दर्शनानन्तरभाविनश्चिन्तनस्यापि दर्शनात्मकत्वोपगमे पुनर्दिदृक्षा संघटयितुं शक्यते न हि सिद्धे पुनरिच्छोदियात्।

वस्तुतस्तु प्रत्यक्षसामान्यस्य सन्मात्रग्राहित्वं वदता श्रवणदशायां सन्मात्रप्रत्यक्षं; तत्सामग्री वा नाङ्गीक्रियत इति न वक्तुं शक्यं; तदानीमान्ध्याद्यनभ्युपगमात्। सन्मात्रमेव च तत्त्वमसीत्यत्र श्रवणदशायां तच्छब्देन प्रतिपाद्यत इत्युपगम्यते। तत्कथं प्रत्यक्षतादशायां परोक्षानङ्गीकार इत्युक्तिर्युज्यते? श्रवणदशायां परोक्षस्याङ्गीकारात्। न च श्रवणदशायां सन्मात्रप्रत्यक्षेऽपि न वाक्यार्थप्रत्यक्षमिति वाच्यं; तथाऽपि सन्मात्रस्य प्रत्यक्षे सत्यपि तस्य वाक्यजपरोक्षोपगमावश्यंभावेन प्रसञ्जकस्य स्वानिष्टताया वक्तुमशक्यत्वात् भवन्मते सन्मात्रातिरिक्तवाक्यार्थानभ्युपगमाच्च। ऐक्यस्यापि सन्मात्रस्वरूपानतिरिक्तत्वाभ्युपगमात्, अन्यथाऽद्वैतहानेः। अत एव श्रवणेनासत्त्वापादकाज्ञानमात्रं निवर्तते, मननेन अनानन्दतापादकाज्ञानमात्रमित्यादिवचनमप्यनुपपन्नं; विषयभेदानभ्युपगमेन निवर्त्यभेदानुपपत्तेः। सम्यक्श्रुतमतब्रह्मतत्त्वे अज्ञ इति व्यवहाराभावेनाज्ञानान्तरानुवृत्तिकल्पनायोगात्। 'आनन्दो ब्रह्म' 'यदेष आकाश आनन्दो न स्या' दित्यादिवाक्यश्रवणादेवानन्दत्वावधारणे अनानन्दतापादकाज्ञाननिवृत्तेरप्यवर्जनीयत्वेन मननप्रतीक्षा-

वश्यंभावाभावात् श्रवणात्पूर्वमस्तीति बुद्ध्यभावेऽपि नास्तीतिबुद्ध्यनियमेन श्रवणस्यासत्वापादकाज्ञाननिवर्तकत्वनियमस्यापि वक्तुमशक्यत्वात् सामग्र्य-भावादेवादर्शनोपपत्तौ अभानापादकाज्ञान तन्निवृत्त्यादिकल्पनागौरवाश्रयण-नैरर्थक्याच्च ।

यद्यपि श्रवणमननदर्शनानां प्रागभावरूपाः अज्ञानभेदास्सन्त्येव । तथाऽपि तेषामभानापादकत्व-मनानन्दतापादकत्वमसत्त्वापादकत्वं चाप्रामाणिकमनुपपन्नं चेत्युच्यते । तथा चाभानापादकाज्ञानस्य प्रयोजनाद्यभावेनानभ्युपगन्तव्यत्वात् प्रत्यक्षसामान्यस्य सन्मात्रग्राहित्वाभ्युपगमेन श्रवणदशायामपि प्रत्यक्षत्वेनाभ्युपगन्तव्यस्य सन्मात्रस्य परोक्षाङ्गीकाराच्च प्रत्यक्षदशायां परोक्षत्वस्य प्रसञ्जकत्वोपगमेऽपि न तस्य स्वानिष्टत्वमुपपादयितुं शक्यम् । प्रत्यक्षयोग्यविषये परोक्षप्रकाशरूपस्य यथाश्रुतवाक्यार्थस्य प्रसञ्जकत्वोपगमे तु सुतराम् ।

वस्तुतस्तु उक्तयथाश्रुतार्थस्यैव प्रसञ्जकत्वमुपगन्तुं युक्तम् । अन्यथाऽन्याधीनप्रत्यक्षदशायां तत एव भासमाने वाक्येन परोक्षस्येवापरोक्षस्याप्युत्पत्तेरनावश्यकत्वेन विपर्यये स्वाभीष्टपर्यवसानायोगात्, प्रत्यक्षार्हविषयस्य परोक्षप्रकाशविपर्ययेणापरोक्षप्रकाशपर्यवसाने हि तत्र हेत्वन्तरानुपलम्भे परिशेषात् वाक्यहेतुकत्वसिद्ध्या स्वाभीष्टसिद्धिरित्याशङ्कितुमप्यवकाशस्स्यात् । परमार्थतस्तु तथाऽपि नेष्टसिद्धिः; श्रवणदशायामुक्तप्रसञ्जकस्य स्वाङ्गीकृतत्वेन तद्विपर्ययस्य स्वेष्टत्वासंभवादित्यत्राभीधीयते—अतो गीर्वाणगुरुणाऽपि दुर्वारमेवेदं दूषणं, यत् प्रसञ्जकस्य स्वानिष्टत्वमिह न संभवतीति ।

## प्रसङ्गस्यानिष्टत्वासंभवः

अथ प्रसञ्जनीयस्य परानिष्टत्वमपि नेत्यप्युक्तं, प्रसञ्जनीयं च क्वचिदस्मदिष्टं आप्तोपदेशादिभिः शुक्तित्वप्रकाशेऽपि दुष्टेन्द्रियादिना कस्यचित् क्वचित् रजतावभासानुवृत्तेः; अन्यथा भवता बाधितानुवृत्तेर्दृष्टान्तस्याप्यभावप्रसङ्गादिति । क्वचित् विरोधिनि शुक्तितत्त्वप्रकाशे सत्यपि रजतावभासाभ्युपगमेन प्रसञ्जनीयस्य नास्मदनिष्टत्वसंभव इत्यत्रोच्यते । अनुवर्तमानश्चायं रजतावभासः सर्वज्ञानयाथार्थ्यवादिनां

अनिर्वचनीयख्यातिवादिनां च दुरपह्नव एवेति भावः। अत्र रजतावभासानुवृत्तेरिति सामान्यत एवोक्तत्वात् सर्वज्ञानयाथार्थ्यवादं स्वाभिमतं परित्यज्य अनिर्वचनीयाद्वैतिसंमतभ्रममभ्युपगम्य वदत्येवमिति शङ्कायाा इह नावकाशोऽस्ति। श्रीभाष्यादिषु सर्वज्ञानयाथार्थ्यवादस्य सम्यगुपपादितत्वात् न तस्य हठवादत्वममूढा वदेयुः। तत्रानिर्वचनीयख्यातेस्समूलमुन्मूलितत्वेऽपि परमते तत्त्वेन अन्यथाख्यातित्वेन वा रजतावसायाभ्युपगमावश्यंभावोक्तिमात्रेण न तत्र स्वसंमतिरपि दत्ता भवति।

बाधितानुवृत्तौ मिथ्याभूतस्य मिथ्यात्वेनैव प्रतिभासात् न भ्रम इत्युपगमेऽपि तन्न्यायेन रजतावभासस्यापि तथाविधस्याभ्युपगन्तव्यत्वात् न तस्य प्रसञ्जनीयत्वमुपपादयितुं शक्यम्। मिथ्याभूतस्य मिथ्यात्वेनाप्यधिष्ठानेऽभावेन तेन रूपेण ग्रहोऽपि भ्रम एव। रजतावसायाविरोधप्रसङ्ग इत्यत्र भ्रमानुदयप्रसङ्गपरतायाः प्रसक्तिरेव नास्तीत्युक्तम्। अतो बाधितज्ञानोदयप्रसङ्गपरत्वमेव वक्तव्यं; तच्च न संभवति। क्वचित् तदङ्गीकारेणानिष्टत्वाभावादिति खल्विह प्रतिक्षिप्यते। तस्मादत्र शतदूषणी यदि स्वीयं सर्वज्ञानयाथार्थ्यवादं परित्यज्य अद्वैतिसंमतं भ्रमं स्वीकृत्यैवं वदति तर्हि परोक्षे शुक्तित्वप्रकाशे भ्रमानुदयप्रसङ्गापादनं स्वानिष्टं परानिष्टं च। सर्वज्ञानयाथार्थ्यवाद एव स्वसिद्धान्त इति वादस्तु सर्वानुभवविरुद्धत्वात् हठवाद एव। परोक्षे शुक्तित्वप्रकाशेऽपि दुष्टेन्द्रियसंप्रयोगे रजतभ्रमापादनं न क्षोदक्षमम्। बाधितानुवृत्तिस्तु, जीवन्मुक्तानां मिथ्याभूतस्य मिथ्यात्वेनैव न तु सत्यत्वेनेति न तज्ज्ञानं भ्रम इत्याद्युक्तमापातधीविलसितमकिञ्चित्करमनुपपन्नं च। तत्र प्रत्यक्षयोग्यविषये परोक्षप्रकाशानभ्युपगमे विशेषतो दृष्टानुमानादिषु परोक्षप्रकाशानुपपत्तिरुक्ता।

प्रत्यक्षतादशायामेव तदनभ्युपगमे तु दशमस्त्वमसीति वाक्यश्रवणात्पूर्वमात्मनि दशमत्वादेरदर्शनेन परोक्षप्रकाशे बाधकाभावेन न तद्वाक्यतस्साक्षात्कारसंभव इत्यपि स्फुटमुक्तम्। सति चैवं सन्निकृष्टे विषये युगपत्प्रत्यक्षत्वपरोक्षत्वयोरसामवेश इति खल्वद्वैतिनां समयः; तमन्यथाकृत्य शतदूषण्यादूषणं नाद्वैतिनां दूषणमिति यदुच्यते; तत्र वक्तुरान्ध्यमेवापराध्यति। अत एव प्रागदर्शनदशायां दशमत्वादेः दशमस्त्वमसीति वाक्यात्

परोक्षमेव स्यान्नत्वपरोक्षमित्यत्र मौनमेवावलम्बितम् । एवमयं घट इति प्रत्यक्षदशायामन्योक्तेनायं घट इति वाक्येनापि प्रत्यक्षमेव जायत इत्युपगमे स्वतोऽपरोक्षार्थविषयत्वादितिहेतुविशेषणवैयर्थ्यं स्यादित्युक्तं; तत्राप्यश्रुतिमेवाभिनीयायं घट इति वाक्यमपि प्रत्यक्षदशायां प्रत्यक्षमेव जनयतीति निश्शङ्कमुच्यते; उक्तहेतुविशेषणवैयर्थ्यं प्रति न किञ्चिदुक्तम् । 'अपि संराधने' सूत्र शाङ्करभाष्येऽपि श्रुतिस्मृतीरुदाहृत्य योगिनस्संराधनकाले परमात्मानं पश्यन्तीत्युक्तं; तन्न्यायात् अन्यार्थदर्शनमपि तेषां संभावितमेव; न त्वसंभावितमिति वक्तुं शक्यं स्यात् । 'दिव्यं ददामि ते चक्षुः तत्सर्वं धर्मवीर्येणेत्यादिकमपि तत्र दुरपह्नवं प्रमाणमस्ति ।

## योगिप्रत्यक्षसाधनम्

यद्यप्यनुमानादिना धर्मे योगिप्रत्यक्षं साधयितुमशक्यं; विपक्षे बाधकाभावात् । तथाऽपि शास्त्रबलेन तत्सिद्धौ न कश्चिद्विरोधः । तदुक्तं सर्वार्थसिद्धौ—

यथौपनिषदस्त्वीशो नानुमानेन सिद्धयति ।
तथा योगी च शास्त्रेण केवलेन प्रसिद्धयतु ।। इति

शास्त्रसिद्धयोगिप्रत्यक्षविषयत्वेऽपि धर्मस्य न चोदनालक्षणत्वविरोधः । शास्त्रानिरपेक्षतत्प्रत्यक्षसिद्धिरेव शास्त्रज्ञैर्निषिद्धयते । अत एव तं त्वौपनिषदमित्युपनिषदेकगम्यत्वोक्तेरपि न विरोधः साङ्ख्य-जैन-सौगतादिधर्मतत्त्वविषये स्पष्टतरार्थवेदविरोधादेवानादरः; न तु योगिदर्शनमूलकतया, तदुक्तंशङ्करभाष्येऽपि-तस्माद्वेदविरुद्धे विषये स्मृत्यनवकाशप्रसङ्गो न दोष' इति । तस्मात् योगिप्रत्यक्षमात्मनीव तदितरप्रपञ्चे धर्मे च विषये संभावितमेव चेति प्रमाणशरणैरभ्युपगन्तव्यम् ।

तथा च यथोक्तप्रत्यक्षदशायामेव यदि योगिनः तत्प्रभावानभिज्ञ पुरुषोक्तज्योतिष्टोमादिवाक्यतोऽपि प्रत्यक्षमेव जायत इत्युपेयते; तदाऽपरोक्षजनकत्वस्य सर्ववाक्यादिसाधारण्यात् तत्त्वमस्यादिवाक्यपरिशेषासिद्धिः, अपशूद्रनयविरोधादिप्रसङ्ग इत्यादिकं दूषणमुक्तम् ।

तदेतत्परिहर्तुमपारयता यदत्रोक्तं धर्मस्य योगिप्रत्यक्षविषयत्वमुभयसंमतमिति वचनं न सांप्रतं; योगजप्रत्यासत्तिं च न वयं स्वीकुर्मः,

अन्यथा योगिप्रत्यक्षविषयत्वेऽपि प्रधानकारणवादादेर्निराकरणमप्रामाणिकमेव स्यात् ।

जैनसौगतादिधर्मस्यापि सर्वधर्मत्वं स्यात्, तेषामपि योगित्वात् । भगवत्पादादियोगिप्रोक्तानामपि योगमहिम्ना प्रामाण्ये शतदूषण्या तद्दूषणा-योगात् । योगिप्रत्यक्षतादशायामाप्तोपदेशलिङ्गादिभिरपि योगिप्रत्यक्षमेव स्यात् । योगिप्रत्यक्षाङ्गीकारे योगमहिम्ना निर्विशेषात्मसाक्षात्कारस्यापि उपदेशानुपपत्तिदूषणं नावतरेदपि इत्यादि ।

तत्सर्वं व्याहतमसम्बद्धं च—योगिप्रत्यक्षस्य प्रमाणगणसमधिगत-त्वाभिधानात् पूर्वं शङ्करभाष्य एव योगिप्रत्यक्षसंमतिप्रदर्शनात् योगिप्रत्य-क्षोपगमेऽपि वेदविरोधादेव प्रधानकारणताया जिनसुगतादिधर्मतत्त्वव्यवस्था-याश्च निराकरणोपपत्तेरुक्तत्वात् । अत एव शतदूषण्यां भगवत्पादाद्युक्ति-दूषणानां प्रामाणिकत्वानपायात् शास्त्रेषु क्वचित् योगिप्रत्यक्षासिद्धिवचन-स्यानुमानतस्तदसिद्धौ तात्पर्यस्य निरूपितत्वाच्च । तथा च योगिप्रत्यक्ष-सिद्धौ तद्दशायामाप्तोक्तज्योतिष्टोमादिवाक्येनापि प्रत्यक्षस्यैवोपगमे च तत्त्वम-सीत्यादिवाक्यपरिशेषासिद्ध्यादिदूषणजातमभिहितमपरिहार्यमेव स्यात् ।

योगिप्रत्यक्षोपगमेऽपि तेन निर्विशेषात्मसाक्षात्कारप्रत्याशायास्तु नाल्पीयानप्यवकाशस्स्यात् । सदेव हि योगिभिस्साक्षात्क्रियते नत्वसत् ।

यच्च योगिभिरुक्तमपि वेदविरोधादसदिति निर्णीयते, तत्र न योगजप्रत्यक्षमुपगम्यते, किं तु भ्रम एव; तदंशे योगिनामपि दोषमूलक इति । निर्विशेषात्मयोगपुरुषोत्तमयोगयोश्शशशृङ्गगोशृङ्गयोरिव वेदादि-प्रमाणविरोधाविरोधादिबहुविधवैषम्यस्य स्फुटत्वेन निर्विशेषप्रत्यक्षमिव पुरुषोत्तमयोगिप्रत्यक्षमपि कतिपयाननुमतिमात्रेण निरसितुं शक्यमिति न मन्तुं युक्तम् । न हि दिवाभीत-बिडालादि निमीलनादादित्यप्रकाशितं जगदस्तमियात् । अतस्तत्प्रतिबन्द्या न निर्विशेषयोगिप्रत्यक्षसाधनं शक्यं भवति । निर्विशेषयोगश्च निर्विशेषत्वश्रवणादिना संपादनीयः; श्रवणं चोपदेशात्, उपदेशश्चोपदेष्टव्यार्थनिर्णयादेव भवेत् । निर्विशेषत्वनिर्णये तत्साक्षात्कारे वा शिष्यादिविशेषोऽपि न प्रतिपद्येत; शिष्याद्यप्रतिपत्तौ च न ह्यनुन्मत्त उपदेष्टुं, प्रवर्तेत इति निर्विशेषत्वोपदेशानुपपत्त्याऽपि हि तद्योगोऽनुपपन्नः ।

एवं निर्विशेषे योगिप्रत्यक्षासंभवेऽपि विषयान्तरे तत्संभवो दुरपह्नवः। स्मृत्यनवकाशदोषप्रसङ्गादित्यत्र वेदविरुद्धे विषये स्मृत्यनवकाशप्रसङ्गो न दोष इति शङ्करभाष्येऽपि योगजप्रत्यक्षस्य नाप्रामाण्यमिष्यते; परं तु वेदविरुद्धे विषये तेषामपि योगजप्रत्यक्षमेव नास्ति किं तु भ्रान्तिरेवेत्याशयस्यैवाभ्युपेतुं समुचितत्वात्। अयं चाशयः 'इतरेषां चानुपलब्धे'रित्यनन्तरसूत्रविवरणावसरे श्रीभाष्ये प्रपञ्चितः। अतो विषयान्तरेऽपि योगिप्रत्यक्षसिद्ध्या तद्दशायां तत्प्रतिपादकवाक्येनापि योगिनः प्रत्यक्षाभ्युपगमे वाक्यार्थप्रत्यक्षजनकतायाः वैदिकलौकिकसर्ववाक्यसाधारण्याभ्युपगमावश्यंभावेनापशूद्राधिकरणविरोधप्रसङ्गादिदूषणजातस्यापरिहार्यतयाऽपरोक्षदशायामपि वाक्यान्तरस्यापरोक्षजनकत्वानुपगमे तुल्यन्यायेन तत्त्वमसीत्यादिवाक्यतोऽप्यपरोक्षाभ्युपगमायोगेन न वाक्याधीनवाक्यार्थापरोक्षसिद्ध्यवकाशः।

किं च श्रवणदशायामेव वाक्यतोऽपरोक्षे प्रत्यक्षविरोधः; मनननिदिध्यासनानर्थक्यं च। निदिध्यासनानन्तरं वाक्यस्य श्रवणमेव नास्ति पूर्वंश्रुतस्यानुवर्तने च न किञ्चिदस्ति मानं; अतोऽपि न वाक्यादपरोक्षम्। मनननिदिध्यासनाद्युपयोगस्तु मानसापरोक्षे तज्जातीये वेति व्यक्तमाकरे। 'मनसैवानुद्रष्टव्यं' मनसैवेदमाप्तव्यमित्येवं हि श्रूयते न तु क्वचिदपि वाक्येनापि द्रष्टव्यमिति।

तमसः पारं दर्शयतीत्यादीनि शाब्दापरोक्षवाद्युदाहृतानि वाक्यानि शाब्दज्ञानं परोक्षमेव विशदतया प्रतिपादयन्तीत्यधस्तादत्रैव प्रपञ्चितम्। 'यतो वाचो निवर्तन्ते' इत्यादाविवान्यत्रापि क्वचित् वाङ्मनोनिवृत्तिश्रवणेऽपि प्रक्रान्तगुणपरिच्छेदविषयविशेषपरत्वं रजस्तमोमलिनाशुद्धकरणावस्थाविशेषपरत्वं वाऽऽश्रयणीयमिति संप्रतिपन्नमेव। अन्यथा पूर्वापरप्रकरणविरोधस्य पूर्वोक्तश्रुत्यादिविरोधस्य चानिवार्यत्वात्।

### आनन्दवल्ल्यामपरोक्षगन्धाभावः

आनन्दवल्लीप्रकरणग्रहणं चात्र गृह्णतो वाक्यापरोक्षवादिनो विपरीतफलम्। 'ब्रह्मविदाप्नोति परमित्युपक्रान्तवेदनं यदाह्येवैष एतस्मिन्'···अभयं

प्रतिष्ठां विन्दते इत्यत्र प्रतिष्ठापदेन विशेषणादुपासनरूपमिति प्रागेव प्रतिपादितम् । विद्वान् न बिभेतीति पूर्वापरवाक्यतोऽपि फलैक्यात् वेदनप्रतिष्ठयोरर्थैक्यमवगम्यते । तेनात्रोपास्यब्रह्मणस्सविशेषस्यैव विषयत्वं; न तु चिन्मात्रं ज्ञेयमात्रमिति व्याहृतोक्तिविषयनिर्विशेषस्येति च स्फुटीकृतं पुरस्तादेव । प्रतिष्ठात्मकोपासनस्यैव मानसस्याप्यतिविशदस्यात्राभयसाधनत्वश्रवणात् मोक्षसाधनत्वं न तु वाक्यजन्यस्यापरोक्षस्यावगम्यत इति वाक्यापरोक्षतन्मोक्षसाधनत्वयोर्नहि किञ्चिदिहावलम्बनं संपादयितुं प्रतिपादयितुं वा शक्यम् । न ह्यत्रोपासनाभिधायिप्रतिष्ठापदवत् प्रत्यक्षप्रत्यायकोऽक्षरलेशोऽप्युपलभ्यते । वेदनोपासनयोः पर्यायतत्वतात्पर्येण व्यतिकरेण प्रयोग उपनिषदश्शैलीति प्रपञ्चितम् । अपरोक्षेणैवापरोक्षभ्रमनिवृत्तिस्स्यादिति नियमोपगमेऽप्युपासनाधीनमानसापरोक्षणैव भ्रमनिवृत्तिस्स्यात् न वाक्यापरोक्षमपेक्षणीयमत्र । वस्तुतस्तु नास्त्येव स नियमः; आमुष्मिकफलकर्मानुष्ठातॄणां शास्त्रजन्यज्ञानेनैव परोक्षेणापरोक्षदेहात्मभ्रमनिवृत्तेर्दर्शनादित्युक्तमधस्तादेव ।

### शास्त्रज्ञानात् सूक्ष्मशरीरात्मभ्रमानिवृत्तिरित्यस्य निरासः

यत्तु—अत्र देहात्मभ्रमो मात्रयैव कर्मानुष्ठातॄणां निवर्तते । सूक्ष्मशरीरात्मभ्रमस्य परोक्षज्ञानेनानिवृत्तेरिति ।

तत् उपहास्यं; शास्त्रेणैवावसेये सूक्ष्मशरीरे आत्मातिरेकस्य धर्मिग्राहकमानसिद्धत्वेन तच्छरीरात्मभ्रमस्यैवासिद्धेः । शास्त्रजन्यपरोक्षज्ञानेन प्रत्यक्षस्थूलशरीरात्मभ्रमस्यैव निवृत्तावभ्युपगतायां परोक्षसूक्ष्मशरीरात्मभ्रमनिवृत्तेः कैमुतिकन्यायसिद्धचर्हाया अभ्युपगमे विवादायोगात्; परोक्षज्ञानेनापरोक्षस्थूलशरीरात्मभ्रममात्रनिवृत्त्युपगमेऽपि अनिवार्येण व्यभिचारेणोक्तनियमासिद्ध्या सूक्ष्मशरीरात्मभ्रमानुवृत्तिसाधनवैफल्याच्च । अतः परोक्षेणाप्यपरोक्षभ्रमो निवर्तते,

> **भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
> **क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥**

इत्यत्र दृष्टइत्यनेन मुख्यार्थचाक्षुषाभिधानायोगेन उपचाराश्रयणे 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष' इति श्रुत्यनुरोधेन विशदतमध्रुवानुस्मृति-

विवक्षैव समुचितेति प्रागेव प्रत्यपादि । उक्तविधोपासननिष्पत्त्यैव, सकलभ्रमाणां तन्मूलाखिलकर्मणां तदधीनतापत्रयाणां च भगवत्प्रसादद्वारा आत्यन्तिकी निवृत्तिर्भवति नात्रापरोक्षापेक्षा । अत एव शुक्तिरूप्याद्यभ्युपगमेऽपि तद्वत् साक्षादविधेयज्ञाननिवर्त्यत्वाभावेन कर्म-तदारब्धप्रपञ्चादीनां मिथ्यात्वशङ्काया नावकाशोऽस्ति ।

वस्तुतस्तु शुक्तिरूप्यादिदृष्टान्तासिद्ध्या ज्ञाननिवर्त्यस्य मिथ्यात्वमित्येवासिद्धं; मिथ्यात्वेनाभिमतानां काचकामलादीनां ज्ञानेतरभेषजेनैव निवृत्त्या मिथ्याभूतस्य ज्ञाननिवर्त्यत्वनियमोऽपि नेति निरूपितमन्यत्र । वेदान्तेषु स्मृतिपुराणसूत्रेषु च ब्रह्मेतरप्रपञ्चस्यापि सत्यत्वमेवावगम्यत इति साधितमनेकत्र ।

दृश्यत्वानुमानेन मिथ्यात्वसाधने तु ब्रह्मणोऽपि मिथ्यात्वं प्रसज्येत । संसारस्य मिथ्यात्वे तन्निवृत्तिस्वरूपनिर्वचनमप्यशक्यमापद्येतेति च शतदूषण्यामेव विशदमुपपादितम् । अतस्संसारप्रपञ्चो न मिथ्याभूतः किं तु सत्य एव । अत एव तज्ज्ञानं न भ्रमः; भ्रमस्यापि सविषयस्य न विरोधिविषयकज्ञानेनैव निवृत्तिरिति नियमः कारणनिवृत्त्याऽपि निवृत्तिसंभवात् सुषुप्तिपूर्वभ्रमस्य विरोधिज्ञानेन निवृत्त्ययोगाच्च । संस्कारसाधारण्येनोत्तरभाविन आत्मधर्मस्य निवर्तकत्वोपगमे च सर्वभ्रमनिवर्तनार्थं वाक्यसापेक्षैक्यापरोक्षगवेषणवैफल्यात् उपासनात्मकपरोक्षज्ञानेनैवाखिलभ्रमनिवृत्तिरनुमन्यतां कृतमपरोक्षान्वेषणेन ।

एतेन ज्ञानपदेनाधिष्ठानसाक्षात्कारो विवक्ष्यते न तु ज्ञानमात्रं । यत्किञ्चिदधिष्ठानज्ञाननाश्यमेव मिथ्या तदितरज्ञाननाश्यं तु व्यावहारिकं सत्यमित्युक्तमप्यपास्तम् । सुषुप्तिपूर्वभ्रमविषयशुक्तिरजतादेः मिथ्यात्वानुपपत्तेः; अधिष्ठानज्ञानमन्तरेणापि सुषुप्तिकाले तद्विनाशात् । न च सुषुप्तिकालेऽपि प्रतिभासं विना प्रातिभासिकमनुवर्ततेति युक्तं; एवं मिथ्याभूतस्य निवर्तकं ज्ञानमेवेति नियमस्यैवाभावे कथमपरोक्षविशेषनियमस्स्यात् ? येन परोक्षसामग्र्याऽप्यपरोक्षं कल्प्येत ? संसारस्य मिथ्यात्वमपि नास्ति; प्रतीयमाने सत्यत्वे बाधकाभावात् । दृश्यत्वानुमानस्यापि ब्रह्मणि व्यभिचरितत्वाच्चेत्युक्तम् ।

## दृश्यत्वहेतोः व्यभिचारस्य दुर्वारता

यत्तु—धर्म्यन्यूनसत्ताकस्यैव दृश्यत्वस्य हेतुत्वात् ब्रह्मणि च तदभावान्न व्यभिचार इति। तन्न साधु। ब्रह्मेतरसर्वमिथ्यात्वसिद्धेः पूर्वं सत्ताभेदानधिगमात् ब्रह्मणि उक्तविशिष्टहेत्वभावनिश्चयस्याप्ययोगेन व्यभिचारज्ञानस्य दुर्वारत्वात्। अधिकमग्रे।

यच्च—ब्रह्मज्ञानजन्याविद्यानिवृत्तिस्तु पारमार्थिकं व्यावहारिकं वा स्वरूपमिति। तच्च न चारु। अविद्यानिवृत्तेः पारमार्थिकत्वे ब्रह्मानतिरिक्तत्वपक्षे ब्रह्मज्ञानजन्यत्वायोगेन ब्रह्मवदनादित्वापत्तेः; अतिरिक्तत्वपक्षेऽद्वैतविरोधात्, व्यावहारिकत्वपक्षे बाध्यत्वावश्यंभावेन नित्यत्वानुपपत्तेश्च।

## मिथ्यार्थस्य स्वरूपप्रच्युतिनिरासः

यदप्युक्तं—स्वरूपच्युतिरेव ध्वंस इति विप्रतिपन्नमिथ्यार्थं विहाय कुत्र वा शतदूषण्या दृष्टं? वस्तुस्वरूपत्वं तु यद्यमिथ्याभूतस्यैव तर्हि ब्रह्मण एवामिथ्यात्वात् तत्र च प्रच्युतेरसंभवात् कुत्र वा व्याप्तिरियमधिगता वस्तुस्वरूपस्यैव प्रच्युतिः न प्रतिभासमानमिथ्यार्थस्येति? वयं तु पश्यामः मिथ्यार्थस्यैव प्रच्युतिः शुक्तिरूप्यादौ दर्शनात् न तु वस्तुस्वरूपस्येत्यादि। तदप्यपेशलं-शुक्तिरूप्यं विनष्टं रज्जुसर्पः प्रध्वस्त इत्येवं प्रामाणिकप्रयोगस्य क्वचिदप्यदर्शनात्। घटो नष्टः पटो ध्वस्त इति हि प्रयोगो दृश्यते। अतोऽवगम्यते प्रतिभासमानमात्रासंभाव्यमान एवार्थः नाशध्वंसपदवाच्य इति। स च स्वरूपप्रच्युतिरूप इति शब्दार्थतत्त्वविदः।

स्वरूपस्यासत्यत्वे च न तस्य प्रच्युतिर्वक्तुं शक्यते। अत एव शुक्तिरजतादेः नाशाद्यप्रयोगः। घटादिप्रपञ्चस्वरूपस्य सत्यत्वं संप्रतिपन्नमेव सर्वेषामन्यत्र सुगतानुयायिनः। न हि कस्यचिद्विप्रतिपत्तिमात्रेण शब्दार्थविपरिवर्तंशङ्कितुं शक्यः। बहूनामविगीतप्रयोगत एव शब्दार्थव्यवस्थापनात्। अत एव घटादिर्नष्ट इत्यादिप्रयोगस्सङ्गच्छते। तत्रैव स्वरूपप्रच्युतिरेव नाशादिर्न तु प्रतिभासमानमात्रस्याप्रतिभासोऽपीति दृष्टम्। एवं च संसारस्यापि यदि मिथ्यात्वमिष्यते तर्हि तत्प्रध्वंसार्थमपरोक्षमपक्षितमिति न शक्यते वक्तुमिति ह्युच्यते शतदूषण्यां। यथोक्तं—प्रध्वंसो

हि स्वरूपस्य प्रच्युतिः प्रतिपाद्यते; स्वरूपसत्यत्वाभावे कस्य प्रच्युतिरुच्यत इति इति। प्रतियोगिरूपकारणसत्त्वे हि तद्ध्वंसस्स्यादिति भावः। अतो मिथ्यार्थस्यैव प्रच्युतिरिति पश्याम इति निमील्यवचनम्।

यच्चान्यदुक्तं—निवर्त्यनिवर्तकभावस्थले कार्यस्य निवृत्तेः पूर्वत्वं, कारणस्याधिष्ठानज्ञानस्य परत्वमित्यपूर्वेयं कार्यकारणभावव्यवस्था शतदूषणीकाराणामिति।

तच्च भ्रमनिबन्धनमनुक्तोपालम्भनं—तत्र यद्यपि उत्तरज्ञानमात्रमपि संस्कारवत् पूर्वज्ञाननिवर्तकमिष्यते। तथाऽपि यत्किंचिदविरुद्धविषयात् परोक्षज्ञानादपि पूर्वज्ञाननिवृत्त्युपपत्तौ विरुद्धविषयप्रत्यक्षज्ञानान्वेषणं निष्फलमित्येव हि अस्मिन् प्रकरणे वाक्यानुपूर्वी दृश्यते। तथा च पूर्वज्ञानस्य उत्तरज्ञानरूपकारण(निवर्तक)ानन्तरमेव निवृत्तिरुच्यते न तु निवृत्तिरूपकार्यस्य कारणात्पूर्वत्वमिति सर्वेषामपि सुगममेव। तथाऽपि पूर्वज्ञाननिवृत्तीत्यत्र पूर्वं कारणात्पूर्वं ज्ञाननिवृत्तिरिति व्योमोहो महानहो जात इव महामहोपाध्यायानामपीत्यनुपहसता न केनचिदपीहावस्थातुं शक्यम्।

एवं मिथ्यात्वाभिमतसंसारनिवृत्त्यर्थमपरोक्षज्ञानमपेक्षणीयमित्यत्र संसारनिवृत्तिशब्दविवक्षितार्थविकल्पतृतीयशिरोभूतप्रतिभासमानमिथ्यार्थविषयकज्ञानकारणोच्छेदार्थमपरोक्षमिति पक्षस्य दूषणावसरे भ्रान्तिज्ञानकारणानुच्छेदे यथावस्थितप्रत्यक्षज्ञानानुदयात् न ह्यङ्गुल्यवष्टम्भतिमिरादिदोषेष्वनुवर्तमानेषु चन्द्रैकत्वसाक्षात्कारसंभव इति शतदूषणी; यत्तु इह निमित्तकारणोच्छेदस्य मिथ्यार्थनिवृत्तिरूपत्वानङ्गीकारात् दोषोच्छेद एवाविद्यानिवृत्तिरिति कल्पस्य शतदूषणी स्वकपोलकल्पितस्य विकल्पासहत्वात् कारणोच्छेदपदेनोपादानकारणोच्छेदस्यैव विवक्षितत्वेन नात्र दोषलेशोऽपीति परास्यते। तदपि भ्रमविजृम्भितम्। अपरोक्षसाध्यतया भ्रमकारणोच्छेदपदेन भ्रमोपादानमात्रोच्छेदविवक्षायामपि प्रागपरोक्षात् भ्रमोपादानकारणानुच्छेदेऽपि यथोक्तयथावस्थितप्रत्यक्षदुर्भिक्षदोषस्य तदवस्थत्वात्। अन्यथा तदुच्छेदार्थप्रयत्नवैफल्यापत्तेरनिवार्यत्वात्।

## अज्ञानस्य भ्रमोपादानत्वनिरासः

किं च संसारनिवृत्तिस्वरूपमिह विचार्यते—तत्र संसारभ्रमकारणोच्छेदरूपं तदिति कल्पोऽत्र निरस्यते। धर्मभूतज्ञानावस्थाविशेषभ्रमोपादानं च पूर्वावस्थज्ञानमेव स्यात् न त्वज्ञानं; ज्ञानाज्ञानयोरैक्यायोगात्। उपादानस्य च उपादेयैक्यावश्यंभावात्। न चाज्ञानपरिणामो भ्रमः, स्वयंप्रकाशस्य जडपरिणामत्वानुपपत्तेः, वृत्तेर्ज्ञानत्वे मानाभावस्योक्तत्वाच्च। पूर्वावस्थज्ञानं च मृदिव घटशरावयोः भ्रमप्रमयोस्साधारणोपादानं; दोषादिकमेव भ्रमासाधारणकारणमतस्तत्प्रयुक्तमेव तत्कार्यस्य ज्ञानस्य भ्रमत्वमिति तदुच्छेदरूपत्वमेव भ्रमभासमानमिथ्यार्थनिवृत्तेस्संभावितमित्याशयेन संभाविताखिलकल्पविकल्पावसरे निमित्तसाधारणभ्रमकारणोच्छेदरूपत्व विकल्पनेऽपि न कश्चित् दोषः। दोषोच्छेदश्च प्रतिबन्धकाभावरूपतया यथावस्थितापरोक्षसामग्रीघटकः। न च सामग्रीघटकस्याभावे सति कार्यमुक्तापरोक्षमुत्पद्येत; न वा तदनुत्पत्तौ तत्प्रयोज्यतयाऽभिमतोक्तसामग्रीघटकदोषोच्छेदस्संपत्स्यत इति नित्यसंसारप्रसङ्गोऽप्यत्र दुर्निवारस्स्यात्। एवं विकल्पितेषु त्रयाणामुक्ता दोषानिवारयितुं न शक्यन्ते इत्युपपादितं; चतुर्थकल्पं तु अनङ्गीकारपराहतमिति स्वयमेव परित्यज्योपरि धावन्ति।

## पञ्चमषष्ठादिविकल्पशिरोऽवलम्बनेऽपि नापरोक्षावश्यंभावः

यत्पुनः पञ्चमषष्ठकल्पयोः परोक्षज्ञानेन विषयापहार, विषयसत्यताध्यवसायशैथिल्याद्यसंभवात् अपरोक्षोपपादकत्वं मन्यते; तदपि शास्त्रजन्यपरोक्षेण स्थूलदेहात्मभ्रमो निवर्तत इति पूर्वतनस्ववचनेनैव व्याहन्यते। न हि देहातिरिक्तात्मविस्रम्भरहितानां स्वर्गार्थकर्मानुष्ठानमुपपद्यते। न च तत्रापि शास्त्रेणापरोक्षमेव जायत इत्युपेयते। अतस्तयोरपि कल्पयोर्नापरोक्षमपेक्षितव्यम्। सप्तमे तु कल्पे तस्य असांव्यवहारिकत्वेन तदर्थोपायापेक्षैव नास्ति, किमुतापरोक्षस्येति न ततोऽप्यपरोक्षक्लृप्त्यवश्यंभाव इत्युक्तम्।

यत्तु-असांव्यवहारिकत्वेनोक्तस्य सप्तमकल्पस्य "निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षित" इति वार्तिकबलात् ब्रह्मरूपत्वेनोत्थापनं;

तदनुपपन्नं, ब्रह्मणस्स्वतस्सिद्धत्वेन तत्सिद्ध्यर्थमपरोक्षाद्युपायानपेक्षणात् । न च निवृत्तित्वविशिष्टरूपेण ब्रह्मणस्साध्यत्वमविरुद्धमिति उक्तं युक्तम् । निर्विशेषे ब्रह्मणि निवृत्तित्वविशेषस्याप्ययोगात् । न च व्यावहारिकसद्भावे न विरोध इति वाच्यं, संसारनिवृत्तिदशायां तदनभ्युपगमात् । पञ्चमप्रकाराविद्यानिवृत्तिपक्षश्च पूर्वमेव प्रतिक्षिप्तः । तत्सिद्धं संसारनिवृत्तेस्सर्वथैवापरोक्षापेक्षा नास्तीति ।

## अपरोक्षमन्तराऽपि संसारभ्रमनिवृत्तिः

कथंचिदपरोक्षेणैव संसारनिवृत्तिरित्यभ्युपगमेऽपि तत्र वाक्यजन्यत्वसिद्धेर्न कश्चिदवकाशः । वाक्यस्याप्यापरोक्ष्ये विद्वेषशीलत्वादित्युक्तम् । यद्यपि शब्दः सूक्ष्मं व्यवहितं विप्रकृष्टमतीन्द्रियं च बोधयितुमीष्टे इत्यङ्गीकुर्मः । तथाऽपि यत्र कुत्रचिदपि स्वार्थेऽपरोक्षं जनयितुं प्रभवतीति नानुमन्यामहे । 'तं त्वौपनिषदमित्यादिश्रुतयश्च परोक्षज्ञानमेवाभिप्रेत्य प्रवर्तन्ते । तस्मात् प्रत्यक्पराङ्मुखत्वमिन्द्रियस्य प्रत्यक्षप्रत्यनीकत्वं शब्दस्य च तुल्यमेव । अतो नोभयमपि तत्र करणं स्यात् ।

वस्तुतस्तु बाह्येन्द्रियाणामेव प्रत्यक्पराङ्मुखत्वं स्यात् न त्वन्तःकरणस्य मनसैवानुद्रष्टव्यमित्यादिश्रुतेः प्रत्यगर्थदर्शनकरणत्वावगमात् । अतीन्द्रियत्ववचनस्य बाह्येन्द्रियाभिप्रायेण निर्वाहोऽवसेयः । अतो मानसमेव तदपरोक्षं स्यात् न तु वाक्यजन्यम् ।

परमार्थतस्तु परोक्षमेवापरोक्षाकारं, अदृष्टद्वारा सत्यस्यापि संसारस्य निवर्तकमित्युक्तमेव ।

मिथ्यार्थभ्रमनिवृत्तिविवक्षायामपि ज्वालैक्यप्रत्यक्षबाधकं ज्वालाभेदानुमानं निदर्शितम् । तत्र संनिकृष्टे विषये पर्वतो वह्निमानित्यादाविव अनुमानेनापि प्रत्यक्षप्रमाया एवोदयान्न परोक्षेण प्रत्यक्षाभिभवः कुत्रापि इति वचनं परिभाषादितदीयग्रन्थतोऽपि विरोधोद्घाटनेन पूर्वमेवैदृशवचनान्तर निरसनेनैव प्रत्युक्तम् । प्रत्यक्षेणैव प्रत्यक्षभ्रमनिवृत्तिरिति पक्षेऽपि इन्द्रियाधीनप्रत्यक्षस्य समत्वात् न निवर्तकता, किं त्वागमिक प्रत्यक्षस्यैव निर्दोषत्वेन प्रबलस्येतिवादस्तु एकदोषप्रसूतत्वादेर्दर्शयिष्यमाणत्वादिति शतदूषण्या

निराकृतः । अत्राद्वैतसिद्धिप्रत्यक्षबाधोद्धारप्रकरणाद्युक्तव्यवस्थामुपदर्शयता यदुक्तं—वेदेन्द्रियप्रत्यक्षयोरेकाविद्यारूप दोषमूलकत्वेऽपि आगन्तुकदोषस्यैवा प्रामाण्यप्रयोजकत्वस्य काचकामलादौ दर्शनात् अपौरुषेयवेदजन्यप्रत्यक्ष-स्यैन्द्रियकप्रत्यक्षेण न साम्यगन्धोऽपीति ।

## अविद्याया अप्रमाण्यप्रयोजकत्वं

तद्वार्तं । वेदजन्यप्रत्यक्षस्य शशशृङ्गवदसिद्धेः । श्रुतिविहित-वेदार्थ ध्यानादिपरिकर्मितमनोऽधीनप्रत्यक्षस्यागन्तुककाचकामलादिमूलकत्वा-भावेन वेदजन्यप्रत्ययतुल्यशीलस्य आगन्तुकतत्तत्कर्मविशेषाख्यदोषमूल-संसारापरोक्षभ्रमापेक्षयाऽधिकबलत्वसंभवेन तद्बाधकताया निष्प्रत्यूहत्वात् परस्य ब्रह्मण एव भ्रमापादकतयाऽभ्युपगतस्याविद्याख्यदोषस्याप्रामाण्य प्रयोजकताया अवर्जनीयत्वाच्च । एतेनागमिकं प्रत्यक्षमेव प्रबलत्वान्मोक्ष-साधनं; न त्वैन्द्रियकं प्रत्यक्षमित्युक्तमपि प्रत्युक्तम् । आविद्यिकवेदमूलत्वे-नाभिमतस्य प्राबल्यसंभावनायोगात् अविद्येतरदोषगन्धनिरपेक्षैन्द्रियकप्रत्यक्ष-संभवस्यापि दर्शितत्वाच्च ।

## उपासनाधीनापरोक्षस्य मोक्षहेतुत्वेऽपि न क्षतिः

यद्यप्यपरोक्षज्ञानमेव मोक्षसाधनमिति नास्माकमभिमतं, किं तु अपरोक्षसमानाकारं ध्रुवानुस्मृतिरूपं प्रीतिरूपापन्नं परोक्षज्ञानमेव तथेति । तथाऽप्युक्तविधपरोक्षज्ञानस्य फलतयाऽपरोक्षज्ञानमपि भगवत्प्रसादेन संभवीत्युपगम्यते । यत् परज्ञानमिति संप्रदाये प्रसिद्धं; तच्चोपासिताधिक-गुणविभूतिकब्रह्मगोचरं कतिपयक्षणानुवर्ति । अपरोक्षोपायाभिनिवेश परवशजनमनस्समाधानाय तदुपायत्वाभ्युपगमेऽपि व्यापारकरणत्वोपगम इवास्माकमनुष्ठानवर्त्मनि नातीव विरोधः । तत्सिद्धयेऽस्मदभिमतोपाय-विशेषानुष्ठानावश्यंभावात्, तस्य चापरोक्षस्य फलशैघ्र्यापादकताया स्स्वीकृतत्वाच्च । शाब्दापरोक्षं मोक्षसाधनमित्येतत्तु बलीवर्दक्षीरं बलसंव-र्द्धकमितिवत् अहृदयेनाप्यभ्युपगमानर्हमयोग्यार्थकमप्रामाणिकं स्वपरानुष्ठान-मार्गविरुद्धं दुर्निर्वहं चेति । अनेनैवाभिप्रायेण यत्पुनरपरोक्षज्ञानस्य मोक्ष-हेतुत्वं श्रुतिसिद्धमिति तावन्मात्राभ्युपगमेऽपि न नः काचित् क्षतिः ।

यत्तु शब्दादेव शब्दस्यापरोक्षधीहेतुत्वं दर्शितं तदतिहास्यं; अन्यपरत्वस्याकुमारं प्रसिद्धेरिति शतदूषणी अवतीर्णा स्यात्; न तु स्वमतं विस्मृत्य यथा परो मन्यते, अभ्युपगमेऽपीति वचनव्यक्त्याऽनभ्युपगमस्य स्फुटीकृतत्वात् । अत एवात्र चण्डमारुतस्य न प्रवृत्तिः । निगदव्याख्यातेषु व्याख्याप्रवृत्तेर्वैफल्यात् । वाक्यव्युत्पत्तिविकलानां व्याख्यानवाक्यतोऽप्यर्थानवबोधेनानवस्थितेरेव प्रसक्तेः ।

### ब्रह्मापरोक्षोपगमेऽद्वैतिनामेव दृश्यत्वसिद्धया महती क्षतिः

एतेनात्र शतदूषणी सत्यमात्मानं विस्मरति, चण्डमारुतमपि स्वीयदोषोद्घाटनं स्वस्यैवातिहासायेति मत्वा तूष्णीमास्त इत्युक्तमपि प्रत्युक्तम् । "वस्तुतोऽदृष्टसहकृतमनोऽधीनयोगिप्रत्यक्षमादाय वाक्यपरिशेषासिद्धेरेवेह विवक्षाया वक्ष्यमाणत्वाच्च । तावन्मात्राभ्युपगमेऽपि न नः काचित् क्षतिरिति शतदूषण्या अद्वैतिनामेव महती क्षतिरिति सूचितम् । तद्विवरणं तु—प्रत्यक्षं ब्रह्मगृह्णाति यदि च ब्रह्मदृश्यता अब्रह्मालम्बनत्वे तु कथं नु बलवत्तरमित्यतो भवति । न चात्र वृत्तिव्याप्यत्वमवलम्ब्य कथंचिन्निस्तारो भवति । वृत्तेर्ज्ञानत्वस्य विषयग्रहणस्य च प्रमाणाभावेन पूर्वमेव निरस्तत्वात् । स्वयंप्रकाशधर्मभूतज्ञानसद्भाव एव प्रमाणानां प्रदर्शितत्वात् । अत एव स्वरूपचैतन्यरूपफलव्याप्यत्वस्य घटादावप्यभ्युपगमावश्यंभावाभावेन तत्रापि दृश्यत्वाभ्युपगमानुपपत्तिरपि प्रदर्शिता । अतो धर्मभूतज्ञानावस्थाविशेषविषयत्वमेव दृश्यत्वमित्युपेतव्यम् । तच्च वेदान्तालम्बनत्वे ब्रह्मणोऽपि दुर्वारम् । अनालम्बनत्वे वेदान्तप्रत्ययस्य न बलीयस्त्वं; निरालम्बनानुमानवत् यत्किञ्चिद्बाधकत्वं वा स्यात् । अतो वेदान्तात् ब्रह्मणि परोक्षप्रत्यय एव जायते । न केवलं वेदान्तात्, किन्त्वन्यतोऽपि, न त्वपरोक्षमित्यभ्युपगम एवाद्वैतमते ब्रह्मणो दृश्यत्वमिथ्यात्वव्यावृत्तिः; ब्रह्मात्मैक्यविज्ञानेन संसारतद्भ्रमादिनिवृत्तिश्चोपपादयितुं कथंचित् शक्येत न त्वन्यथेति भावः ।

अत एवात्मसाक्षात्कारस्य मोक्षसाधनत्व एवाद्वैतिनामाग्रह इत्यत्रत्योक्त्या स्वयमेवाद्वैतिनाऽपरोक्षमोक्षसाधनत्ववादे आग्रहएव प्रवर्तकः; न तु प्रमाणानुसार इति निगूढं स्वहृदयमवशात् प्रकाशितम् । 'तदुक्तप्रमाणाना-

मन्यपरत्वमाकुमारं प्रसिद्धे' रिति ह्युक्तम् । यथाश्रुतग्राहिणा आगमस्य चक्षुष्ट्वं परं नानुमन्यते इति कथं वक्तुं शक्यं ? तदनुमतौ ऐन्द्रियिकमेव तदपरोक्षं स्यात् नत्वनैन्द्रियिकम् । श्रुतिस्मृती तु विप्राणामितिवचनस्य निर्विशेषवाक्यमात्रपरतया संकोचस्तु निर्मूल एव । असंकोचे तु धर्मादि-बोधकवाक्यानामपि नयनत्वापत्त्या धर्मांशेऽपि तज्जमपरोक्षं प्रसज्येत । चक्षुर्वत् विशदज्ञानजनकत्वात् गौणचक्षुष्ट्वोपगमे च तदधीनज्ञानस्यापि विशदतमत्वेन गौणापरोक्षताया उपगतप्रायतया शब्दतो मुख्यापरोक्षासिद्ध्या-ऽभीष्टहानिरभ्युपगन्तव्यैव स्यात् । एतेन चक्षुर्वत् विशदज्ञानजनकत्वात् गौणचक्षुष्ट्वे वा न हानिरित्युक्तमपास्तम् ।

## सुनिश्चितेत्यत्र सुपदसार्थक्यम्

वेदान्तविज्ञानसुनिश्चितार्था इत्यत्र सुनिश्चयः नापरोक्षरूपः; किं तु अकम्पनीयनिश्चयः—अकम्पनीयव्यवसाय इति हि शतदूषणी । निरपवादं हि विज्ञानमिति शङ्करभाष्यं; निरपवादत्वमबाध्यत्वमिति कल्पतरुवाक्यं; संशये सति न सुनिश्चितार्थमात्मविज्ञानं भवेदिति भामतीवाक्यं च पूर्वमेव प्रदर्शितम् । अत एव निश्चयत्वस्य कम्पनीयत्वस्य च परस्परं विरोधात् विज्ञानेति विशब्देनापि ज्ञानेऽकम्पनीयत्वावगमात् अपरोक्षाविवक्षायां सुपदवैयर्थ्यमित्युक्तमप्यपास्तम् । निश्चयत्वस्य कम्पनीयत्वस्य च विरोधो-पगमे बाध्यत्वनिश्चयत्वसंशयादि विरोधस्याप्युपगन्तव्यतया पूर्वोप-दर्शितशङ्करभाष्यतदनुयायिग्रन्थसंदर्भासङ्गतेरपरिहार्यत्वात्; विज्ञानपदार्थात् सुनिश्चितपदप्रकृत्यर्थस्य भेदे अभेदे वा विशब्देन सुशब्दस्य कृतकरत्वा-प्रसक्तेश्च । भेदे हि विशब्दो ज्ञान एवाकम्पनीयत्वादिविशेषमवगमयेत् न तु निश्चये; अभेदे तु 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीत्या-दाविवानुप्रयोगेऽपि पूर्वप्रयोगाधिगतविशेषगमकपदावश्यंभावादेव हि विशब्द-स्थाने इह सुशब्दः प्रयुक्त इतीहार्थान्तरविवक्षायाः क्वावकाशस्स्यात् । तत्सिद्धं वाक्यापरोक्षगमकं नचेकमपि श्रुत्यक्षरमस्तीति ।

## प्रयोगदूषणम्

तत्त्वमसीति वाक्यजन्यज्ञानत्वादिति प्रयोगे च श्रोतव्यइत्युक्तश्रव-णाधीनपरोक्षज्ञानेऽनैकान्त्यमुक्तम् । मनननिदिध्यासनसहकृतवाक्यजन्यज्ञान-

त्वादिति हेतुविशेषणे हेतोरन्यतरासिद्धिः। निदिध्यासनादिसहकृतवाक्य-जन्यज्ञानस्यास्माभिरनभ्युपगमात्। नह्येकस्यां सामग्र्यां निदिध्यासन मनन वाक्यादिघटनमस्मदिष्टम्। दृष्टान्ततया निर्दशिते तद्वाक्यश्रावणप्रत्यक्षे विषयतया वाक्यजन्यत्वसत्त्वेऽपि निदिध्यासनसहकृतवाक्यजन्यत्वाभावात् साधनवैकल्यं च। निदिध्यासनपूर्वभाविश्रवणदशोत्पन्नतद्वाक्यजन्यज्ञाने उक्तहेतोरसिद्ध्या भागासिद्धिश्च पक्षस्यापि तथाविधज्ञानत्वेन विशेषणे च उक्तरीत्या आश्रयासिद्धिस्स्यात्। तस्मादिहानैकान्त्यं परिजिहीर्षताऽसिद्ध्यादि-कमेव संपादितं भवति। वक्ष्यमाणसोपाधिकत्वेनानैकान्त्यस्य दुष्परिहरत्वात्।

अग्निहोत्रादिवाक्यजन्यज्ञानेऽप्येवं प्रयोगस्य वक्तुं शक्यत्वादति-प्रसङ्गश्चोक्तः। न च बाधादप्रयोजकत्वाद्वा तदसंभव इति युक्तम्। तदुभयस्य तत्त्वमसीत्यादिवाक्यजज्ञानत्वादिति प्रयोगेऽपि तुल्यत्वात्। मिथ्यार्थनिवृत्तेरपरोक्षैकसाध्यताया निरस्तत्वेन विपक्षे बाधकाभावात् तदुक्तं **परिहारस्य च समत्वादिति**। अत एव प्रकारान्तरेण हेतुविशेषणेऽपि न निस्तारस्स्यात् अर्थजन्यत्वमुपाधिरित्युक्तत्वात्। तत्र साध्यव्यापकत्व-साधनाव्यापकत्वे परेणापि ह्यभ्युपगम्येते; अतस्तेनोपाधिना हेतोस्साध्यव्य-भिचारित्वानुमाने न विवादपदमस्ति, व्यापकव्यभिचारिणो व्याप्यव्यभि-चारित्वावश्यंभावात्। अन्यथा साध्योपाध्योर्व्याप्यव्यापकभावानुपपत्तेः। तथा चोपाधेस्साध्यव्यापकत्वादिविषये स्वाभ्युपगमस्य भङ्गस्स्यात्।

एवं साध्यव्यापकोपाध्यभावेन साध्याभावसाधनेऽपि उक्तरीत्या स्वाभ्युपगमभङ्गादिरेव विपक्षे बाधकस्तर्को निराबाधस्स्यात्। अतस्तथाऽप्यु-पाध्यभावेन साध्यभावसाधनेऽप्यप्रयोजकशङ्का विपक्षे बाधकाभादित्युक्तं त्वत्यन्ताप्रयोजकं; तत्त्वमसीत्यादिवाक्यजन्यज्ञानत्वादिति परोक्तप्रयोगस्यैवा-प्रयोजकताया उक्तत्वात्। यत्तु—स्थाप्यानुमाने नाप्रयोजकत्वं; विपक्षे 'तं त्वौपनिषदं पुरुषं पृच्छामीत्यादिवाक्यवैयर्थ्यापत्तेः बाधकतर्कस्य विद्यमान-त्वादिति।

## तं त्वौपनिषदमित्यस्य सार्थक्यम्

तदसत्—

'तं चेन्मे न वक्ष्यसि मूर्धा ते विपतिष्यतीति शाकल्यशापार्थमुक्त-प्रश्नवाक्यस्य प्रवृत्तत्वेन शाब्दापरोक्षानभ्युपगमेऽपि वैयर्थ्याप्रसक्तेः।

मन्यपरत्वमाकुमारं प्रसिद्धे' रिति ह्युक्तम् । यथाश्रुतग्राहिणा आगमस्य चक्षुष्ट्वं परं नानुमन्यते इति कथं वक्तुं शक्यं ? तदनुमतौ ऐन्द्रियिकमेव तदपरोक्षं स्यात् नत्वनैन्द्रियिकम् । श्रुतिस्मृती तु विप्राणामितिवचनस्य निर्विशेषवाक्यमात्रपरतया संकोचस्तु निर्मूल एव । असंकोचे तु धर्मादि-बोधकवाक्यानामपि नयनत्वापत्त्या धर्मांशेऽपि तज्जमपरोक्षं प्रसज्येत । चक्षुर्वत् विशदज्ञानजनकत्वात् गौणचक्षुष्ट्वोपगमे च तदधीनज्ञानस्यापि विशदतमत्वेन गौणापरोक्षताया उपगतप्रायतया शब्दतो मुख्यापरोक्षासिद्धया-ऽभीष्टहानिरभ्युपगन्तव्यैव स्यात् । एतेन चक्षुर्वत् विशदज्ञानजनकत्वात् गौणचक्षुष्ट्वे वा न हानिरित्युक्तमपास्तम् ।

## सुनिश्चितेत्यत्र सुपदसार्थक्यम्

वेदान्तविज्ञानसुनिश्चितार्था इत्यत्र सुनिश्चयः नापरोक्षरूपः; किं तु अकम्पनीयनिश्चयः—अकम्पनीयव्यवसाय इति हि शतदूषणी । निरपवादं हि विज्ञानमिति शङ्करभाष्यं; निरपवादत्वमबाध्यत्वमिति कल्पतरुवाक्यं; संशये सति न सुनिश्चितार्थमात्मविज्ञानं भवेदिति भामतीवाक्यं च पूर्वमेव प्रदर्शितम् । अत एव निश्चयत्वस्य कम्पनीयत्वस्य च परस्परं विरोधात् विज्ञानेति विशब्देनापि ज्ञानेऽकम्पनीयत्वावगमात् अपरोक्षाविवक्षायां सुपदवैयर्थ्यमित्युक्तमप्यपास्तम् । निश्चयत्वस्य कम्पनीयत्वस्य च विरोधो-पगमे बाध्यत्वनिश्चयत्वसंशयादि विरोधस्याप्युपगन्तव्यतया पूर्वोप-दर्शितशङ्करभाष्यतदनुयायिग्रन्थसंदर्भासङ्गतेरपरिहार्यत्वात्; विज्ञानपदार्थात् सुनिश्चितपदप्रकृत्यर्थस्य भेदे अभेदे वा विशब्देन सुशब्दस्य कृतकरत्वा-प्रसक्तेश्च । भेदे हि विशब्दो ज्ञान एवाकम्पनीयत्वादिविशेषमवगमयेत् न तु निश्चये; अभेदे तु 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीत्या-दाविवानुप्रयोगेऽपि पूर्वप्रयोगाधिगतविशेषगमकपदावश्यंभावादेव हि विशब्द-स्थाने इह सुशब्दः प्रयुक्त इतीहार्थान्तरविवक्षायाः क्वावकाशस्स्यात् । तत्सिद्धं वाक्यापरोक्षगमकं नचैकमपि श्रुत्यक्षरमस्तीति ।

## प्रयोगदूषणम्

तत्त्वमसीति वाक्यजन्यज्ञानत्वादिति प्रयोगे च श्रोतव्यइत्युक्तश्रव-णाधीनपरोक्षज्ञानेऽनैकान्त्यमुक्तम् । मनननिदिध्यासनसहकृतवाक्यजन्यज्ञान-

त्वादिति हेतुविशेषणे हेतोरन्यतरासिद्धिः। निदिध्यासनादिसहकृतवाक्य-जन्यज्ञानस्यास्माभिरनभ्युपगमात्। नह्येकस्यां सामग्र्यां निदिध्यासन मनन वाक्यादिघटनमस्मदिष्टम्। दृष्टान्ततया निर्दशिते तद्वाक्यश्रावणप्रत्यक्षे विषयतया वाक्यजन्यत्वसत्त्वेऽपि निदिध्यासनसहकृतवाक्यजन्यत्वाभावात् साधनवैकल्यं च। निदिध्यासनपूर्वभाविश्रवणदशोत्पन्नतद्वाक्यजन्यज्ञाने उक्तहेतोरसिद्धया भागासिद्धिश्च पक्षस्यापि तथाविधज्ञानत्वेन विशेषणे च उक्तरीत्या आश्रयासिद्धिस्स्यात्। तस्मादिहानैकान्त्यं परिजिहीर्षताऽसिद्धयादि-कमेव संपादितं भवति। वक्ष्यमाणसोपाधिकत्वेनानैकान्त्यस्य दुष्परिहरत्वात्।

अग्निहोत्रादिवाक्यजन्यज्ञानेऽप्येवं प्रयोगस्य वक्तुं शक्यत्वादति-प्रसङ्गश्चोक्तः। न च बाधादप्रयोजकत्वाद्वा तदसंभव इति युक्तम्। तदुभयस्य तत्त्वमसीत्यादिवाक्यजज्ञानत्वादिति प्रयोगेऽपि तुल्यत्वात्। मिथ्यार्थनिवृत्तेरपरोक्षैकसाध्यताया निरस्तत्वेन विपक्षे बाधकाभावात् तदुक्तं **परिहारस्य च समत्वादिति**। अत एव प्रकारान्तरेण हेतुविशेषणेऽपि न निस्तारस्स्यात् अर्थजन्यत्वमुपाधिरित्युक्तत्वात्। तत्र साध्यव्यापकत्व-साधनाव्यापकत्वे परेणापि ह्यभ्युपगम्येते; अतस्तेनोपाधिना हेतोस्साध्यव्य-भिचारित्वानुमाने न विवादपदमस्ति, व्यापकव्यभिचारिणो व्याप्यव्यभि-चारित्वावश्यंभावात्। अन्यथा साध्योपाध्योर्व्याप्यव्यापकभावानुपपत्तेः। तथा चोपाधेस्साध्यव्यापकत्वादिविषये स्वाभ्युपगमस्य भङ्गस्स्यात्।

एवं साध्यव्यापकोपाध्यभावेन साध्याभावसाधनेऽपि उक्तरीत्या स्वाभ्युपगमभङ्गादिरेव विपक्षे बाधकस्तर्को निराबाधस्स्यात्। अतस्तथाऽप्यु-पाध्यभावेन साध्यभावसाधनेऽप्यप्रयोजकशङ्का विपक्षे बाधकाभादित्युक्तं त्वत्यन्ताप्रयोजकं; तत्त्वमसीत्यादिवाक्यजन्यज्ञानत्वादिति परोक्तप्रयोगस्यैवा-प्रयोजकताया उक्तत्वात्। यत्तु—स्थाप्यानुमाने नाप्रयोजकत्वं; विपक्षे 'तं त्वौपनिषदं पुरुषं पृच्छामीत्यादिवाक्यवैयर्थ्यापत्तेः बाधकतर्कस्य विद्यमान-त्वादिति।

## तं त्वौपनिषदमित्यस्य सार्थक्यम्

तदसत्—

'तं चेन्मे न वक्ष्यसि मूर्धा ते विपतिष्यतीति शाकल्यशापार्थमुक्त-प्रश्नवाक्यस्य प्रवृत्तत्वेन शाब्दापरोक्षानभ्युपगमेऽपि वैयर्थ्याप्रसक्तेः।

नचौपनिषदपदेन उपनिषज्जन्यापरोक्षविषयत्वमेव विवक्षितमिति वाच्यं; उपनिषदेकगम्यत्वमात्रस्यैव तत्र विवक्षितत्वेनापरोक्षप्रसक्तेरेवासत्त्वात् । तदेव हि सूत्रितं भगवता बादरायणेनापि **शास्त्रयोनित्वादिति** । एवमेव हि शङ्करभाष्येऽपि व्याख्यातमौपनिषदमितीदं पदं य औपनिषदः पुरुष अशनायादिवर्जित उपनिषत्स्वेव विज्ञेयो नान्यप्रमाणगम्यस्तमिति । आनन्दगिरीये च औपनिषदत्वं पुरुषस्य व्युत्पादयतीति उपनिषत्स्वेव विज्ञेय इति भाष्यवाक्यमवतारितम् ।

तथा समन्वयाधिकरणे तं त्वौपनिषदं पुरुषं पृच्छामीति च औपनिषदत्वविशेषणं पुरुषस्योपनिषत्सु प्राधान्येन प्रकाशमानत्व उपपद्यते इति भाष्यविवरणावसरे मानान्तरागम्यतया वेदान्तैकवेद्यत्वे श्रुतिमुदाहरति **तं त्वेति** कल्पतरावुक्तम् । एवं योगप्रत्युक्त्यधिकरणे 'एतेन सर्वाणि तर्कस्मरणानि प्रतिवक्तव्यानि; तान्यपि तर्कोपपत्तिभ्यां तत्त्वज्ञानायोपकुर्वन्तीति चेदुपकुर्वन्तु नाम; तत्त्वज्ञानं तु वेदान्तवाक्येभ्य एव भवति 'नावेदविन्मनुते तं बृहन्तं' 'तं त्वौपनिषदं पुरुषं पृच्छामीत्येवमादिश्रुतिभ्य इत्येव शङ्करभाष्यम् । तथा 'तरति शोकमात्मवित्' इत्यत्र आत्मज्ञानतरणीयशोकस्य सत्यत्वात् मिथ्यार्थावभासस्यापि परोक्षज्ञाननिवर्त्यताया ज्वालाभेदानुमाननिदर्शनेनोपपादितत्वाच्च नापरोक्षपरत्वकल्पनावश्यंभावः । एवमन्यपरतया संप्रतिपन्नस्य वाक्यस्य शाब्दापरोक्षाभावे वैयर्थ्यापादनमुन्मादनिबन्धनमेव स्यात् अतो विपक्षे बाधकं मृग्यमेवोक्तानुमानस्येति कृतं चर्वितचर्वणेन ।

एवं चोक्तसाधकानुमाने विपक्षे बाधकाभावेनाप्रयोजकत्वस्य उक्तोपाधिना सोपाधिकत्वस्य च दुष्परिहरत्वेन तदुभयस्य प्रत्यनुमाने सत्त्वेऽपि तुल्यतया तेन प्रतिरोधसिद्धेर्न विरोधः । दशमस्त्वमसीत्यादि वाक्यादपरोक्षप्रसङ्ग एव नास्तीति निरूपितत्वात् प्रत्यनुमाने व्यभिचारापादनं तु न शक्यमेव ।

यत्तु—असंनिकृष्टविषयकत्वस्योपाधित्वादिति । तन्न; साधनाव्यापकत्वसहितसाध्यव्यापकत्वासंभवात् । तथा हि असंनिकृष्टेत्यत्र संनिकर्षः किं प्रतियोगिको विवक्षितः किमात्मनः ? उतवृत्तेः ? अथेन्द्रियस्य ? नाद्यः;

तत्त्वमसीति वाक्यार्थस्यात्मनोऽभिन्नत्वेन आत्मना संनिकर्षायोगादसंनिकृष्टत्वापत्तेः। सम्बन्धस्य भेदव्याप्यत्वोपगमात्। अत एव हि संविदो न फलव्याप्यत्वमिति ब्रूथ। तथा च पक्षेऽपि विद्यमानत्वात् न साधनाव्यापकता। न द्वितीयः; प्राथमिकश्रवणाधीनपरोक्षदशायामपि तत्त्वमसीति वाक्यार्थस्यान्तरात्मनश्शरीरान्तरुत्पन्नपरोक्षवृत्त्या संनिकर्षाविरोधेनासंनिकृष्टत्वायोगात् न साध्यव्यापकत्वमुपाधेस्स्यात्। अत एव न तृतीयोऽपि। आत्मनि बाह्येन्द्रियसंनिकर्षाप्रसक्तेः। मनसश्च त्वयेन्द्रियत्वानुपगमात्। अतोऽसंनिकृष्टार्थविषयत्वं नोपाधिः। उपाधित्वेऽपि तस्य तादृशो वा प्रकृते न विरोध इत्युक्तमेव। साधकानुमानेऽप्युपाधेस्सत्त्वेन समतया प्रतिरोधाविरोधात्।

एवमन्येषामप्यत्रान्योक्तानामनुमानानां प्रतिरोधस्य दुर्निवारत्वात् अनुमानबलादपि वाक्यापरोक्षं दुस्साधमेव। विस्तरस्तु शतदूषण्याम्।

एतेन विगीतं ज्ञानं साक्षात्कारि-स्वप्रकाशार्थोपदेशरूपत्वात् स्वतः प्रत्यक्षार्थविषयत्वाद्वेति प्रयोगोऽपि निरस्त एव। तत्र मनननिदिध्यासनसहकृतश्रवणजन्यं वाक्यार्थज्ञानं पक्षतया विवक्षितमिति यदुक्तं तत्रापि निदिध्यासनानन्तरं श्रवणान्तरानुपदेशात् निदिध्यासनस्य वाक्यसहकारित्वानभ्युपगमाच्चाश्रयासिद्धिरित्युक्तप्रायम्। ज्ञाने उपदेशरूपत्वायोगात् स्वरूपासिद्धिश्च। तदेव मुख्योपदेश इत्युक्तमप्ययुक्तम्। आचार्यकर्तृकस्य अप्राप्तपरमहितार्थबोधनस्यैवोपदेशरूपत्वात्। न हि श्रुतमतनिध्यातविषयेऽनुवादरूपस्य केनचिदुक्तस्य स्वयमेवानुसंहितस्य वा वाक्यस्य तज्जन्यज्ञानस्य वोपदेशरूपत्वममुख्यमपि संभवति किमुत मुख्यमिति।

एवं श्रवणमात्रजनिते मननमात्रजनिते च वाक्यार्थपरोक्षज्ञाने साक्षात्कारित्वरूपसाध्याभावेऽपि स्वप्रकाशात्मरूपप्रत्यक्षार्थविषयत्वरूपहेतोस्सत्त्वादनैकान्त्यम्।

एवं शतदूषण्युक्तदूषणपरिजिहीर्षया हेत्वादिविशेषणे दूषणान्तरमप्यवार्यमापद्यते। साधकानुमानप्रत्यनुमानयोस्साम्येन परस्परप्रतिरोधे सति प्रत्यनुमानं प्रति प्रत्यनुमानान्तरेण स्थाप्यानुमानस्थिरीकरणार्थं प्रत्यव-

स्थानमनवस्थापादकमेव स्यात् । तत्सिद्धं तत्त्वमस्यादिवाक्यात् न कदाचिदप्यपरोक्षमिति ।

## योगिप्रत्यक्षस्य दुरपह्नवता

यद्यपरोक्षमेव मोक्षसाधनमित्याग्रहः तर्हि तत् ध्यानसंस्कृतमनसैव सम्पादनीयमित्युक्तं, यन्मनसा न मनुते इत्यादेः, यद्वाचाऽनभ्युदितमित्यादिवत् केवलकरणप्रवृत्तिनिषेधपरत्वात् । योगिप्रत्यक्षं तु सौगतादीनां-ज्ञानमिवाप्रमाणमित्यास्तिकगोष्ठ्यां न वक्तुं शक्यं; असति विरोधे शास्त्रैकगम्यविषयेऽपि स्मृत्यादिवत् वेदमूलकतया प्रामाण्यस्य निरपवादत्वात् । अत एव—

**वेदान्तवाक्यजज्ञान भावनाजा परोक्षधीः ।**
**मूलप्रमाणादार्ढ्येन न भ्रमत्वं प्रपद्यते ॥**

इति कल्पतरुकारः । श्रीरामायणे

**रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ।**
**तत्सर्वं धर्मवीर्येण यथावत् संप्रश्यति ॥**

इत्यन्तमुपादाय प्रकाशाप्रकाशार्थप्रतिपादनपरमित्यर्थवर्णनं चासमग्रदृष्टिनिबन्धनं; तत्सर्वमित्यादेरर्थानुपवर्णनात् । तत्र हि धर्मवीर्येण संप्रपश्यतीत्यस्ति न तु वेदवाक्येनेति न वा वेदवाक्यमिति; किं तु यद्वृत्तं तत्सर्वमिति । न धर्मवीर्येणेति श्रुतकरणविशेषावरुद्धे दर्शनेऽश्रुतवाक्यादिकरणान्तरकल्पनं युज्यते । अतो योगिप्रत्यक्षस्यापि वाक्यजन्यत्वेनैव प्रत्यक्षत्वमित्युक्तमाग्रहप्रयुक्तमेव ।

यद्यपि श्रीरामायणं परतत्त्वपरमहितादिविषये वेदोपबृंहणतया वेदवाक्यार्थपरोक्षाधिगमसापेक्षप्रमाणमेव । तथापि तदीयावतारदशाभाविपरतत्वरूपगुणविभूतिविशेषहसितभाषितचेष्टिताद्युपाख्याने नारदोपदेशसहितप्रजापतिप्रसादप्रसूतयोगजप्रत्यक्षसापेक्षमेव प्रमाणमिति तदुपक्रमप्रकरणसिद्धम् । अतस्तथाविधविशेषविषयेऽपि वेदवाक्यसापेक्षमेव प्रवृत्तमिति न युक्तमुपगन्तुम् । अतो वेदोपबृंहणत्वेन वेदवाक्यमूलकत्वावश्यंभावात् अत्र-

मूलतयोक्तं दर्शनं वेदवाक्यमूलकं; योगसहकृतवाक्यमूलकमेव वा स्यादिति कल्पनाया नावकाशः। तमसः पारं दर्शयतीत्यत्रापि वाक्येनेति न श्रूयते। अतस्तत्र प्रत्यक्षविवक्षायामपि न वाक्यापरोक्षगमनिकासिद्धिः; अनुग्रहत एवापि तत्संभवात्।

वस्तुतस्तु न तत्र प्रत्यक्षं विवक्षितं; किं तु विशदोपदेश एवेति पूर्वमेवोक्तम्। ध्रुवास्मृतिः; स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इति ह्यस्याव्यवहितं पूर्ववाक्यं, तत्र परोक्षस्मृतिरेव हि मोक्षसाधनमिति प्रदर्शितं; न तु दर्शनमिति। अतस्तदनन्तरवाक्ये दर्शनमुदपादयदित्यर्थवर्णनं पूर्वसंदर्भविरुद्धं विफलमेव हि स्यात्।

एवं न केवलं वाक्यापरोक्षे साधकमानाभावः, बाधकमपि हि मानमस्ति मनसैवानुद्रष्टव्यमिति हि श्रूयते। तत्रैवकारेण ब्रह्मदर्शने मनोभिन्नकरणान्तरव्यवच्छेदकेन वाक्यस्यापि व्यवच्छेदात्। अत एवमितरव्यवच्छेदकैवकारावतंसितस्यापि मनसेति पदस्य विवक्षितं मनसः करणत्वं शब्दसहकारितामात्रेण न तु प्राधान्येनेति व्याख्यानं मौर्ख्यनिबन्धनमेव। मनसेति श्रुतस्य मनसोऽप्राधान्यमेवकारव्यवच्छिन्नस्य चाश्रुतस्य वाक्यस्य प्राधान्यं च कल्पयता आत्मनो दृढपूर्वश्रुतत्वमेव हि प्रख्याप्यते। अतो मनोमात्रकरणकं दर्शनमेव ब्रह्मणि प्रामाणिकं; तदपि न मोक्षसाधनं, किं तु दर्शनसमानाकारध्रुवानुस्मृतिरूपभक्तिरेव। मानसापरोक्षसाधनं त्वन्यथासिद्धिप्रदर्शनाय। तदुक्तं—'यद्यपि योगिप्रत्यक्षं फलमात्रमित्यस्मन्मतं; तथाऽपि तदधीनायाः परिशेषासिद्धेरन्यथासिद्धेश्चोपन्यासो नानुपपन्न इति।

एतेन धर्मवीर्यफलभूत योगिप्रत्यक्षमपि ध्रुवानुस्मृतिवत् मोक्षसाधनमिति शतदूषण्यनुवदतीति वचनं परास्तम्। अन्यथैव शतदूषण्याशयस्य तद्वाक्येनैवाधुना स्फुटीकृतत्वात्। अत एव विनाऽप्युपासनं योगमहिम्नैव मोक्षसिद्धिरित्युपासनवैयर्थ्यमिति भावानभिज्ञस्य चोद्यमपि प्रत्युक्तम्। उपासनं विना प्रत्यक्षमात्रेण कस्यचिदपि मोक्षानभ्युपगमात्। धर्मवीर्यार्जितप्रत्यक्षस्यापि उपासनं विना निष्पत्तेरनभ्युपगमाच्च। ध्रुवानुस्मृत्यैव हि सर्वग्रन्थिमोक्षस्समाम्नायते। तत्रैव तस्मिन् दृष्ट इत्यनेन दर्शनसमानाकारत्वमुपदिश्यत इति सोपपत्तिकमुक्तम्। बन्धस्य च सत्यत्वादुपासनादेव निवृ-

त्यर्हत्वमभिहितं, मिथ्यात्वेऽपि परोक्षनिवर्त्यत्वमविरुद्धमिति च सनिदर्शनमुपपादितम् । अनुमानानि च आभासीकृतानि, प्रत्यनुमानैः प्रतिरुद्धानि च । श्रुतिवाक्यानामान्यपर्यं च स्फुटमिति च प्रत्यपादि । बाधकवाक्यमप्यशक्यपरिहारमुपदर्शितम् ।

तदेवं प्रमाणोपपत्त्यभावात् प्रमाणवाक्यविरोधाच्च शाब्दापरोक्षे निर्मूलिते उपासनप्रद्वेषिणां वाक्यजन्यपरोक्षेणैव मोक्षस्याभ्युपगन्तव्यतया श्रुतवेदान्तानां संसारानुवृत्तिदर्शनविरोध इत्यादयश्शतदूषणीदर्शिता दोषा दुष्परिहारा एव स्युः । न हि दूषित दूषयिष्यमाणबल्बजपक्षान्तरकक्षीकारेणैव विवादविषये दूषणपरिहारः कर्तुं शक्यः । विवादविषयस्यैकस्य स्थापने तदितरैः तदुपपादकैः स्संप्रतिपन्नैरेव हि भवितव्यम् । अन्यथा सर्वैस्सर्वमपि साधयितुं शक्येतेति न स्वमतस्यैव परिशेषस्स्यात् । अतस्संप्रतिपन्नसाधकाभावात् बाधकसत्त्वाच्च वाक्यापरोक्षमिति यत् तत् खपुष्पकल्पमेवेति सिद्धमेव ।

---

## साधनचतुष्टयपूर्ववृत्तत्वभङ्गः

साधनचतुष्टयपूर्ववृत्तत्वभङ्गवादे शारीरकाविरोधाध्यादिसिद्धस्य नित्यानित्यवस्तुविवेकादेः पूर्ववृत्तत्वाभिधानेऽन्योन्याश्रयः। सौगतवैशेषिकादिशास्त्रसिद्धस्य तु शारीरकविरुद्धस्यानपेक्षिततत्वेन न तथात्वौचित्यम्। साङ्ख्यहितैषिपित्राद्युपदेशादेव तत्सिद्ध्युपगमे च ततएव निर्विशेषात्मानात्मविवेकस्यापि सिद्ध्या तत्र श्रोतव्यविशेषपरिशेषाभावेन शारीरकारम्भवैयर्थ्यं चेत्यादिदूषणानि शतदूषण्यामुद्भावितानि। तत्रान्योन्याश्रयस्त्वेवं संगृहीतः। वेदान्तश्रवणे सिद्धे नित्यानित्यविवेकधीः, नित्यानित्यविवेकेन वेदान्तश्रवणं त्विति। अयमेव वादान्ते साधनचतुष्टयपूर्ववृत्तत्वमतापेक्षया कर्मविचारपूर्ववृत्तत्वमते विशेषकथनावसरे प्रयोजनाधिक्यं, मिथस्संश्रयाद्यभावश्च विशेष इत्यत्र मिथस्संश्रयपदेन स्मारितो न त्वन्यादृशः।

## मिथस्संश्रयपदार्थोऽन्योन्याश्रय एव न परोक्तः

अत एव मध्ये च अतो हेत्वन्तरात् नित्यानित्यवस्तुविवेकोऽयमाशामोदकायते। तेनैव तद्वृत्तेति तु मिथस्संश्रयः पुनरुन्मज्जति। एतदभिप्रायेण भाष्यं नित्यानित्यवस्तुविवेकादयश्च मीमांसाश्रवणमन्तरेण न संपत्स्यन्ते इत्यादीत्यनेनापि अन्योन्याश्रयरूपएव हि मिथस्संश्रयो विवृतः।

एवं सति प्रयोजनाधिक्यं मिथस्संश्रयाद्यभावश्च विशेष इत्यत्र यदुक्तं नित्यानित्य वस्तुविवेकस्य इहामुत्रार्थफलभोगविरागहेतुत्वं इहामुत्रार्थफलभोगविरागस्य शमदमादिसम्पद्धेतुत्वं, तस्या मुमुक्षाहेतुत्वं चेति मिथस्संश्रयभावो न संभवति। कथंचनमिथस्संश्रयभावेऽपि तद्विवक्षायां प्रयोजनाभावः, स्वमते त्विहामुत्रार्थफलभोगविरागस्य मुमुक्षाहेतुत्वसंभवात् मिथस्संश्रयाभावः। एवं तयोरेव ब्रह्मविचारहेतुत्ववर्णनेन कर्मविचारपूर्ववृत्तत्वसूचनमधिकं प्रयोजनमतस्साधनचतुष्टयस्य ब्रह्मविचारपूर्ववृत्तत्वं न युक्तमिति शतदूषण्याशय इति। तत्कथं सङ्क्रमयितुं शक्यं? नित्यानित्यवस्तुविवेकादिचतुष्टयब्रह्मविचारयोः परस्परापेक्षायां हि मिथस्संश्रयस्तत्रोक्त इत्युपर्शितं, न

तु नित्यानित्यवस्तुविवेकादेः उत्तरोत्तरान्योन्यहेतुत्वेऽपि सः। नह्युत्तरोत्तरस्य स्वनिरपेक्षपूर्वपूर्वान्यान्यापेक्षामात्रेण मिथस्संश्रयः संभवदुक्तिकः मिथःपदस्य परस्परपदपर्यायित्वात्। साधनचतुष्टयपूर्ववृत्तत्ववादिनामवर्जनीयः परस्परापेक्षालक्षणः अन्योन्याश्रयो दोषः कर्मविचारपूर्ववृत्ततामते न प्रसज्यत इत्ययं हि विशेषो मिथस्संश्रयाद्यभावपदेन विवक्षितः। अतस्तत्पदस्य पूर्वपूर्वगतायामुत्तरोत्तरहेतुतायामाशयवर्णनमिहासंबद्धमेव।

तत एव कथंचिन्मिथस्संश्रयभावेऽपि तद्विवक्षायां प्रयोजनाभाव इत्युक्तमसम्बद्धतरम्। कर्मविचारपूर्ववृत्तत्वमते कथंचिदपि तद्दोषप्रसक्त्यभावात्, परमते तद्विवक्षायाः परमतनिरसनौपयिकतया प्रयोजनवत्तरत्वात्, शतदूषण्यां प्रयोजनाधिक्यपदस्यान्यपरतायास्तत्रैव पूर्ववाक्यत एवाधिगतत्वाच्च। एवं स्वमते तु इहामुत्रफलभोगविरागस्य मुमुक्षाहेतुत्वसंभवात् मिथस्संश्रयाद्यभाव इति कथनमप्यत्रासम्बद्धतमम्। मुमुक्षाहेतुत्वासंभवस्य मिथस्संश्रयाद्यनापादकत्वेन हेतुत्वसंभवस्य मिथस्संश्रयाद्यभावप्रयोजकत्वकथनासङ्गतेः।

एतेन मिथस्संश्रयाद्यभावस्त्वस्मदनुकूलो न तु प्रतिकूलः; इहामुत्रार्थफलभोगविरागो हि परलोकविद्वेषिणां रोगविशेषग्रस्तानां च नित्यानित्यवस्तुविवेकराहित्येऽपि बहुशो दृश्यते; न तु कर्मफलानित्यत्वनिर्णयमात्रेण। अतो मिथ आश्रयाश्रयिभावं विना समप्राधान्येनैव नित्यानित्यवस्तुविवेकादयोऽधिकारिविशेषणं स्वीक्रियन्ते इत्युक्तमपि प्रत्युक्तम्। अन्योन्याश्रयपरतयाऽत्र प्रयुक्तस्य पदस्य प्रधानतदुपकारकभावपरतामाश्रित्य शाखाचङ्क्रमणस्यासंबद्धप्रलापत्वात् कर्मविचारपूर्वत्वपक्ष एव हि मिथस्संश्रयाद्यभावविशेष इत्युच्यते स कथं साधनचतुष्टयवादिभिरस्मदनुकूल इति वक्तुं शक्यः? इहामुत्रफलभोगविरागे च कर्मफलानित्यत्वनिर्णय एव हि सर्वसाधारणं कारणं स्यात्। परलोकविद्वेषस्य रोगविशेषस्य च सर्वसाधारण्यायोगात् हेत्वन्तरसंभवेऽपि तृणारणिमणिन्यायादन्यस्यापि प्रमाणबलात् हेतुत्वसिद्धौ विरोधाभावात्। अन्यथा विनाऽपि मुमुक्षां प्रवचनादिरागमात्रेण केषांचित् ब्रह्मविचारदर्शनात् मुमुक्षुत्वस्याप्यधिकारिविशेषणत्वानुपपत्तेश्च।

## साधनद्वयपूर्वत्वोपगमेऽपि तस्य विवक्षाऽनर्हता

यद्यपि ऐहिकामुष्मिकफलभोगवैराग्य-मुमुक्षुत्वयोः पूर्ववृत्तत्वं संभवितुमर्हतीत्युपगम्यते; न तु नित्यानित्यवस्तुविवेक-शमदमादिसाधनसंपदोरिव तदसंभवीत्युच्यते; तथाऽपि अथशब्दस्य तत्परत्वं परं नाभ्युपगम्यते। तदुभयपूर्वतायाः कर्मविचारपूर्वताभिधानतोऽपि लाभेन पुरुषप्रवृत्तिक्रमविशेषसूचनादिप्रयोजनाधिक्येन च कर्माधिगमपूर्ववृत्तत्वतात्पर्याश्रयणमेव समुचितमिति प्रदर्शितत्वात्। यत्र प्रयोजनाधिक्यं; अनन्यथासिद्धत्वं च तदेव सति संभवे शब्देन विवक्षणीयं; नत्वन्यथासिद्धाल्पप्रयोजनाभिनिवेशेन बहुलप्रयोजनमनन्यथासिद्धमपि परित्यक्तव्यं; अतस्साधनद्वयानन्तर्यमप्यथशब्देन विवक्षाया अनर्हमेवेति प्रतिपादने कथं तच्छ्लाघाधिगमेन मोदावकाशः; येनोच्यते शतदूषणी साधनद्वयानन्तर्यं शिरसा श्लाघत इति। श्लाघतां वा तावता कस्ते लाभस्साधनचतुष्टयानन्तर्यवादिनः; नह्यर्धाङ्गीकारमात्रादभिमतसिद्धिः। नित्यानित्यवस्तुविवेकादिसिद्धेश्शास्त्रारम्भात् प्राक् घटयितुमशक्यत्वात्। न च 'तद्यथेह कर्मचितो लोकः क्षीयते' परीक्ष्य लोकानित्यादिवेदान्तवाक्याध्ययनेन तत्सिद्धिः। अध्ययनमात्राधीनप्रतीतेरापातरूपतया 'अक्षय्यं ह वै चातुर्मास्ययाजिन इति कर्मफलनित्यत्वापातप्रतीतिप्रतिरोधेन वैराग्याद्यहेतुत्वात्। शास्त्रान्तरादिश्रवणावकाशस्तु शतदूषण्यामेव सोपपत्तिकं प्रतिरुद्धः।

## प्रत्यक्षानुमानतो नित्यानित्यवस्तुविवेकायोगः

यदुक्तं—प्रत्यक्षानुगृहीतेनानुमानेन न्यायेन वा नित्यानित्यवस्तुविवेक इति। तन्न; अस्मदादीनां नित्यानित्यसामान्यप्रत्यक्षायोगात्; अतस्तदनुमानाद्यप्रवृत्तेः। न च कृष्यादिफले प्रत्यक्षं; तद्दृष्टान्तेन प्रत्यक्षायोग्येऽनुमानं चेति प्रत्यक्षानुमानाभ्यां तत्सिद्धिरिति वाच्यम्। तर्हि पुत्रजन्मज्ञानादिफलसन्तोषे प्रत्यक्षं; तद्दृष्टान्तेनान्यत्र ज्ञानफलसामान्येऽनुमानं चेति प्रत्यक्षानुमानाभ्यां ज्ञानफलस्याप्यनित्यत्वमिति विवेके नित्यपरिशेषायोगेन नित्यविवेकस्य प्रसक्त्यनापत्तेः। विपक्षे बाधकाभावस्तूभयत्र तुल्य एव। न च ज्ञानफलानित्यत्वानुमाने सत्यं ज्ञानमित्यादिश्रुत्या बाधस्संभवतीति वाच्यं; पूर्वानुमानेऽपि 'अपाम सोमममृता अभूम' त्यादिश्रुत्या बाधस्य

वक्तुं शक्यत्वात्; तत्परत्वातत्परत्वयोर्विचारात् प्रागवधारयितुमशक्यत्वात्। न च नित्यानित्यपदयोस्सत्यानृतपरतया ऐहिकफलादेः प्रत्यक्षेणानृतत्वेऽनुभूते तदधिष्ठानतया विगीतं सदधिष्ठानकं असत्यत्वात् गन्धर्वपुरीवदित्यनुमानेन सामान्यतः किमप्यस्तीति नित्यविवेकोऽपि स्यादिति वाच्यं, ऐहिकफलादेरनित्यत्वेऽप्यसत्यत्वे प्रमाणाभावात्। येन तदधिष्ठानेन केनचित् सत्येन भाव्यमित्युच्येत ? असत्यविषयेऽपि हि दोषदोषाश्रयादिमिथ्यात्वमभ्युपगच्छतामधिष्ठानमिथ्यात्वेऽपि न क्षतिरिति वदन्ति। अधिष्ठानतया सामान्यतः कस्यचित् सिद्धावपि तस्य पुरुषार्थत्वासिद्धौ नोपादेयता स्यात् यतो मुमुक्षा जायेत। एतेन 'आच सत्यलोकादाचा वीचेः जायस्व म्रियस्वेति विपरिवर्तमानं तापत्रयविपरीतमात्मानं जीवलोकं च विलोक्य अस्मिन् संसारमण्डले अनित्याशुद्धिदुःखात्मकं प्रसंख्यानमुपावर्तते ततोऽस्यैतादृशात् नित्यानित्यवस्तुविवेकलक्षणात् प्रसंख्यानात् इहामुत्रार्थभोगविरागो भवतीत्युक्तमपि प्रत्युक्तम्। उक्तप्रसंख्यानस्यानित्यवस्तुविवेकरूपत्वेऽपि नित्यवस्तुविवेकरूपत्वासंभवात् सांसारिकफलेऽनित्यत्वावधारणेऽपि नित्यफलान्तराविवेके मत्तकाशिन्यलाभन्यायेन वैराग्यासंभवात् आच सत्यलोकादाचावीचेरवलोकनस्यास्मादृशां दुर्घटत्वात् प्राग्भवीयादैहिकाद्वा कर्मणो विशुद्धसत्वस्य पुरुषधौरेयस्य सुघटत्वेऽपि तस्य विचारमन्तरेणैवाध्ययनमात्रादेव ब्रह्मज्ञानस्यापि संभवेन शास्त्रारम्भतदधिकारवैयर्थ्यात्, पुरुषविशेषासाधारणविशेषणीभूतस्य त्रैवार्णिक सर्वाधिकारिकशास्त्रारम्भाधिकारिविशेषणत्वायोगाच्च। अत एव विनाऽपि कर्मविचारं बाल्य एव ध्रुवादीनामिव इहामुत्रार्थफलभोगविरागसंभव इत्युक्तमपि अपास्तम्।

**पदं त्रिभुवनोत्कृष्टं जिगीषोस्साधुवर्त्म मे।**
**ब्रूह्यस्मत्पितृभिर्ब्रह्म ह्यन्यैरप्यनधिष्ठितम्॥**

इत्यादौ ध्रुवादेरमुत्रार्थफलविशेषरागस्यैवाभिधानाच्च। यच्च—तृतीयाध्यायाद्यपादेन कर्मफलानित्यत्वनिर्णय इति। तच्चान्योन्याश्रयदोषग्रासविस्मरणविलसितम्।

## विवेकस्य संभावनात्मकत्वे दूषणम्

यदपि—इदमनित्यमित्यनित्यत्वनिर्णयो नित्यं किञ्चिदस्तीति संभावनामात्रं च नित्यानित्यवस्तुविवेकः। अङ्गीकृतं चैतत् शतदूषणीकारैरपि

यत्कर्मफलानित्यत्वनिर्णयेन ब्रह्मानित्यत्वसंभावनामात्रेण चेहामुत्रफलभोग-विराग इतीति ।

तदपि न । इदमिति स्वदृष्टफलमात्रेऽनित्यत्वनिर्णयेन कर्मफलसामान्ये वैराग्यायोगात् अन्यस्यानित्यत्वे च प्रत्यक्षाद्यसंभवस्य दर्शितत्वात् नित्यानित्यविवेक इत्यत्र विवेकपदस्यैकस्यैव नित्यविषये संभावनामात्रत्वमनित्यविषये निर्णयरूपत्वमिति वैरूप्यानौचित्यात् । उभयत्रापि संभावनारूपत्वे संशयरूपत्वेन वैराग्यजननयोग्यतानुपपत्तेः, तथा च न केवलं शतदूषण्यामुक्तं, किं तु तथोक्तं भामत्यामेव 'अथ विवेको ज्ञानमात्रं न निश्चयः, तथा सति एष विपर्यासादन्यस्संशयस्स्यात् । तथा च न वैराग्यं भावयेत्, अभावयन् कथं ब्रह्मजिज्ञासाहेतुरिति ।

शतदूषण्यां च नित्यानित्यवस्तुविवेको वैराग्यहेतुरिति नोपेयते, किं तु कर्मविचाराधीनकर्मफलाल्पास्थिरत्वनिर्णयसहितब्रह्मानन्तस्थिरफलत्वज्ञानात् कर्मफले वैराग्यमिति । तदपि न विद्यानुष्ठानौपयिकमुत्कटमिष्यते किं तु श्रवणमात्रौपयिकमनुत्कटमेवेत्यस्ति स्फुटो विशेषः । ततो न भवदुक्तस्य शतदूषणीसंवादलाभसंभावनावकाशः । यदि नित्यानित्यवस्तुविवेकपदं शतदूषण्युक्तकर्मफलानित्यत्वनिर्णयसहितब्रह्मज्ञाननित्यफलत्वापातधीपरतया कथंचिद्योजयितुमिच्छसि तर्हि आगतोऽसि मदीयं मार्गं, तदुपायतया कर्मविचारस्यैव पूर्ववृत्ततामनुसन्धत्स्व, संयताञ्जलिः । अन्यथा उक्तविधनित्यानित्यवस्तुविवेकादेश्शारीरकाधिकारिविशेषणतयाऽभिमतस्य साधकान्तराभावात् शारीरकेणैव तत्संपादने अन्योन्याश्रयो दुर्निवार इत्यभ्युपगन्तव्यमेव ।

### कर्मविचारस्य पूर्वत्वे नान्योन्याश्रयप्रसक्तिः

न चैवं श्रुतप्रकाशिकायां कर्मविचारस्य शारीरकतृतीयाध्यायचतुर्थपादेन सङ्गतत्वाभिधानादथशब्देन तदानन्तर्यविवक्षायामप्ययमन्योन्याश्रयो दुर्वार एवेति वाच्यं, शारीरकतृतीयचतुर्थसङ्गतस्यापि कर्मविचारस्य बहुग्रन्थसाध्यत्वेन पृथक्कृत्य अर्थक्रमादिना पूर्वमेव कृतत्वाभिधानेन तदानन्तर्यविवक्षायामुक्तदोषप्रसक्तेरेवाभावात् । न ह्येवमविरोधाध्यायादिसाध्यस्य

नित्यानित्यवस्तुविवेकादेरपि पृथक्कृत्य पूर्वमेव निरूपणं शक्यं दर्शयितुं, येन परिहारतौल्यमप्याशंक्येत ।

किं चानन्तरमेव श्रुतप्रकाशिकायामेवं वेति कल्पान्तरावलंबनादस्मिन् कल्पे न नैर्भर्यमिति हि स्फुटमधिगम्यते, अतोऽपि न प्रतिबन्द्यवकाशः । तस्मात् नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयानन्तर्यस्याथशब्देन विवक्षायामन्योन्याश्रयस्य दुष्परिहरतया कर्मविचारानन्तर्यमेव विवक्षणीयम् । तत्र यदुक्तं—धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेरिति । तत्रानधीतवेदान्तस्य साधनचतुष्टयरहितस्यापीदानीं प्रवचनादिरागेण ब्रह्मजिज्ञासा दृश्यत इति प्रतिबन्दिरुक्ता ।

### अधिगतकर्मणामेव ब्रह्मविचारेऽधिकारः

वस्तुतस्तु हृदयाद्यवदानेष्विव भागद्वयविचारयोरपि क्रमो विवक्षित एव । तत्र श्रौतक्रमस्येव अर्थमुख्यप्रवृत्तिक्रमादेरप्यनतिलङ्घनीयत्वेन तत्संभवस्य शतदूषण्यामुपपादितत्वात्, श्रौतक्रमस्यापि प्रदर्शयिष्यमाणत्वाच्च, फलजिज्ञास्यभेदाच्चेत्यस्य षट्काध्यायपादादिष्विव अवान्तरफलविषयभेदेऽपि अनुगतफलविषयसंभवस्य प्रागेव प्रतिपादनेन प्रत्युक्तत्वात् नैकशास्त्र्यविरोधिता । अत एव न तत्र सर्वाधिकारिसाधारण्याभावश्शङ्कनीयः । कृतकर्मविचाराणामेवाधिकारित्वोपगमेनान्येषामनधिकारित्वस्येष्टत्वात् । अन्यथा दूषणार्थमेव ब्रह्मजिज्ञासमानानां वेदबाह्यानामप्यधिकारित्वापत्तेर्दुर्वारत्वात् ।

संभवति च स्वभावत एवाल्पफलविरक्तानामपि ब्रह्मचर्यादेव संन्यस्तानां च कर्माक्षयफलवाक्याधीनापातप्रतीतिमतां कर्मविचारे प्रथमप्रवृत्तिः; न ह्यक्षयफलविषयेऽपि तेषां विरागः स्यात् । अन्यथा तेषां मुमुक्षुत्वस्यापि दुर्घटत्वापत्तेः । अपि चैतेषामपि वेदनाङ्गकर्मज्ञानाँ स्वाश्रमधर्म विनियोगक्रमादिविज्ञानार्थं हेयोपादेयकर्मस्वरूपविवेकार्थं च कर्मविचार आवश्यक इति पूर्वमेवोक्तम् । वेदप्रामाण्य-भेद-विनियोगादिन्यायाः कर्मविचारसिद्धा एव शारीरकेऽप्युपजीव्यन्ते न तु तत्रैव व्युत्पाद्यन्त इत्यपि पूर्वमेव सयुक्तिकमुपपादितम् ।

ब्रह्मविद्याधिकारिणामपि देवानां स्वयंप्रभातवेदत्वेन यदि न कर्मविचारस्स्यात् तर्हि ब्रह्मविचारोऽपि न स्यादेव, निश्चिते विचारानर्थक्यात्। यदि तत्र न निश्चयस्तर्हि कर्मण्यपि तथैवेति कर्मविचारोऽपि स्यादेव। कर्मानुष्ठानं च तेषां 'देवा वै सत्रमासत' इत्यादौ श्रूयत इत्यप्युक्तमेव। कर्मविचारकर्तुर्जैमिनेः क्वचित् विसंवादस्य शारीरके तदनुवाद तत्प्रतिक्षेपादितोऽधिगमेऽपि तस्यान्यपर्यंसाधनेन परकलितसौधादिशेषपूरणवत् विरुद्धैकदेशोद्धारेण संहिततत्वसंपादनेन वा नार्थैक्यविरोध इति च प्राचां विरोधपरिहारप्रकारोऽपि प्रागेव प्रदर्शितः। अतस्सर्वाधिकारिसाधारणं पूर्ववृत्तमिह कर्मविचार एव भवितुमर्हति।

न च तथाप्येकत्रैव जन्मनि कर्मविचारो न नियन्तुं पार्यत इत्युक्तं युक्तम्। आनन्तर्यश्रवणविरोधात्। न च जन्मान्तरीणकर्मणां वेदनाद्यङ्गता, जन्मान्तरानुष्ठानस्य निश्चेतुमशक्यत्वात्। अत एव जन्मान्तरीणकारीरीष्ट्यादिभिरेव वृष्टिर्भविष्यतीति मत्वा वृष्टिमपेक्षमाणा न तूष्णीं तिष्ठासन्ति। अतो जन्मान्तरानुष्ठितकर्मभिरुपकारो भविष्यतीति मन्यमानेन न तावत् परित्यक्तकर्मणैव वेदनमावर्तयितुं युक्तं; किं तु तदानीमनुष्ठितकर्मणैवेति विभावनीयम्।

यत्तु—ब्रह्ममीमांसाधिकारिविशेषणं हि साधनाध्याये तदनन्तरप्रतिपत्त्यधिकरणेन इहामुत्रार्थफलभोगविरागः, शमदमाद्युपेतस्स्यादित्यधिकरणेन शमदमादिसंपत्, इहामुत्रार्थफलभोगविरागाक्षिप्तनित्यानित्यवस्तु विवेकः सार्वत्रिकफलकामश्च ब्रह्मविचारसाधनतयाऽधिकारिविशेषणतया च प्रतिपाद्यन्ते न तु कर्मविचार इत्युक्तं; तत्तु—स्वमात्रव्याधातकं; कर्मविचारस्योत्तरत्राप्रतिपादनं हि न पूर्ववृत्तत्वविरोधि; किं तु तदनुकूलमेव-अन्योन्याश्रयाद्यनापादकत्वात्, उत्तरत्र प्रतिपादितानां नित्यानित्यवस्तुविवेकादीनां पूर्ववृत्तत्वोपगम एव तत्प्रसङ्गस्य दुर्वारत्वात्।

## कर्मविचारस्य ब्रह्मविचारोपयोगिता

पूर्वमेव विचारितानां कर्मणां अत्र वक्तव्यं विनियोगविशेषमात्रमुच्यते सर्वापेक्षा चेत्यादाविति न कर्मणामत्यन्ताप्रतिपादनं; न वा तद्वि-

चारपूर्वत्वे कश्चित् दोषः प्रसञ्जयितुं शक्यते। कर्मविचारस्य पूर्वत्वाभाव एव हि दोषस्स्यात्, अनधिगतानां कर्मणां विनियोगानुपपत्तेः। तत्तदाश्रम-धर्माणामेव वेदनाङ्गत्वोपगमात् न संन्यासवेदनविरोधः। जन्मान्तरकर्मणा मनिश्चयादिदानीं न कर्मत्यागो युज्यत इत्युक्तं; जातायामपि विविदिषायां तदुच्छेदभिया न त्याज्यमाप्रयाणात्कर्म। वस्तुतो वेदनाङ्गत्वमेव कर्मणा मित्यन्तिमवेदनं यावत् यथाशक्त्यनुष्ठानमवर्जनीयमिति प्रागेव प्रतिपादितम्। उद्गीथोपासननियमाभावेऽपि तद्विचारो ब्रह्मविचारान्तर्गतः कर्मज्ञानसापेक्ष एवेत्येतदपि न कथंचिदप्यपह्नोतुं शक्यं, निर्विशेषब्रह्म तद्वेदनं च न वेदान्त-वेद्यमित्यसकृदावेदितम्।

एतेन न्यायरक्षामण्युक्तरीत्या ब्रह्मविद्यामाश्रित्य फलसाधनानां सगुणोपासनानामपि न सर्वब्रह्मविचाराधिकारिष्वपेक्षा वर्तत इत्युक्तमप्य-पास्तम्। सगुणोपासनातिरिक्तब्रह्मविद्याया एवासिद्ध्या तयोराश्रयाश्रयि भावोक्तेरेवायुक्तेः। सगुणोपासन एव तृतीयतृतीये गुणोपसंहारो विचारितः। तत्रैव कर्मापेक्षा मुक्तिफलत्वं च तृतीयचतुर्थे उच्यते इति तत्र कर्म-स्वरूपाधिगमः 'प्रदानवदेव तदुक्त' मित्यादिविचारे संकर्षाद्यधिगमश्चा-पेक्षित एव।

अतो ब्रह्मविचारात् कर्मविचार एव पूर्ववृत्तः वक्तव्यः। तत्र कर्मविचारात् कर्मानुष्ठानमिव ब्रह्मविचारात् विद्यानुष्ठानमन्यदेव तत्र विचारयोः पूर्वापरकालभावित्वनियमेऽप्यनुष्ठानयोरेककालीनत्वमेवानुमन्यते।

### कर्मणां वेदनोपयोगः

अयमर्थः यथाकृत्स्नकर्मविचारं परिसमाप्य ब्रह्मविचार आरभ्यते न तथा कृत्स्नकर्मानुष्ठानसमाप्त्यनन्तरमेव विद्यानुष्ठानमुपक्रम्यते; किं तु प्रत्यहमाप्रयाणात् विहितानि कर्माण्यनुतिष्ठतैव तदनवरुद्धावान्तरकालभेदे विद्याऽप्यनुष्ठीयत इति विद्याविरोधिमनोमलनिबर्हणमुखेन विद्यासिद्ध्यर्थेन कर्मणा विद्याऽव्यवहितेनैव भाव्यम्। अन्यथा निवृत्तस्यापि मलस्य निवर्तका सन्निधाने पुनरावृत्त्यापत्त्या विद्यासिद्ध्ययोगात्। अतस्तत्तत्कालीनकर्मणैव तत्तत्काले विद्यासिद्धिः। तथा च विद्यासिद्धिमिच्छता यावदायुषं कर्म

कर्तव्यमेव; तथा हि श्रूयते—'स खल्वेवं वर्तयन् यावदायुषमिति । अत एव ब्रह्मविदग्रेसरा जनकादयः कर्मनिष्ठा एव प्रसिद्धाः ।

यत्तु—अकरणे प्रत्यवायपरिहारार्थं नित्यनैमित्तिककर्ममात्रानुष्ठानं हि तेषामिति । तन्न; जनकस्य ब्रह्मनिष्ठस्यैव 'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।' 'ब्रह्मविद्यामधिष्ठाय' 'तर्तुं मृत्युमविद्यये'ति ब्रह्मविद्या-सिद्धयर्थतयैव कर्मानुष्ठानाभिधानात् 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दती'ति गीताशङ्करभाष्येऽपि स्वकर्मणा तमीश्वरमाराध्य ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं विन्दतीत्युक्तम् । तथा च वेदनसाधनं कर्मेति संप्रतिपन्नं, तस्य विनियोग एव शारीरके क्रियते न स्वरूपं, स्वरूपं तु कर्मविचारादेवाधि-गन्तव्यम् । न चानधिगते स्वरूपे विनियोगोऽधिगमयितुं शक्य अतोऽपि 'धर्मजिज्ञासायाः प्रागपि ब्रह्मजिज्ञासोपपत्तेरिति यदुक्तं तन्न युक्तमेव ।

### ब्रह्मविचारनिरूपितविनियोगानां कर्मणां कर्मविचारादेव स्वरूपाधिगमः

यत्तु-कर्मविचारे यज्ञादिपदार्थविचारो न कुत्रापि कृत इति । तन्न; चतुर्थे प्रयुक्तिप्रसङ्गेन 'यजति चोदना द्रव्यदेवताक्रियं समुदाये कृतार्थ-त्वात् तदुक्ते श्रवणाज्जुहोतिरासेचनाधिकस्स्यादित्यादौ यागहोमादिस्वरूपस्य विचारितत्वात् ।

एतच्च मीमांसाभागयोः क्रमविशेषव्यवस्थापनार्थं प्रदर्शितं; ऐकशास्त्र्यं तु स्वाध्यायरूपैकव्याख्येय व्याख्यानत्वेनेति पूर्वमेव प्रपञ्चितम् । अत एवोपकारकत्वमात्रं पूर्वस्य संभाव्यते न तु ततस्तयोरैक्यं; अन्यथा सर्वानन्तरत्वात् ब्रह्मजिज्ञासायाः तत्पूर्वभाविभिरास्तिकनास्तिकनिबन्धै स्सर्वैरप्यैक्यमापद्येतेत्याद्युक्तमप्यपास्तम् । ब्रह्मजिज्ञासायास्स्वाध्यायाध्ययन-कर्मविचारेतरास्तिकनास्तिकग्रन्थानन्तर्याभावात् तदुपकार्यत्वासंभवाच्च ।

एवं केवलकर्मणैवाक्षय्यफले संभवति तदर्थं न कर्मसमुच्चितेऽ-धिकश्रमसाध्ये ब्रह्मणो ज्ञाने तद्विचारे च कश्चित् प्रवर्तेत; किं तु प्रथमतः कर्मण्येव; ज्ञाते तु तत्फलानित्यत्वे तत्समुच्चिते ज्ञानेऽपीति । अतः पूर्वमेव कर्मफलक्षयित्वज्ञानेन भाव्यं तदर्थमपि कर्मविचारस्य पूर्ववृत्तत्वमावश्यकम् । उक्तं च शतदूषण्यां 'कर्माणि तु निरूपिते न्यायपरिश्रान्तचेतस्तया

उत्तरोत्तरातिशयितकर्मविधानादिभिः कर्मणामल्पास्थिरफलत्वमवसायेत्यादिना कर्मविचारस्य शारीरकारम्भौपयिकत्वम्। एतेन जैमिनीयकर्मविचारे द्वादशलक्षण्यां षोडशलक्षण्यां वा कर्मफलानित्यत्वं न कुत्रापि न्यायतो निर्णीतं; ब्रह्ममीमांसातृतीयाध्यायप्रथमपादेनैव हि निर्णीतमित्युक्तमपि प्रत्युक्तम्।

## कर्मफलानित्यत्वनिर्णयः

पूर्वपक्षसिद्धान्तरूपेण कर्मफलानित्यत्वविचाराभावेऽपि कर्मविध्यादि स्वरूपनिरूपणादेवार्थतस्तन्निश्चयसंभवात्।

तथोक्तं तत्त्वटीकायामपि ज्योतिष्टोमाग्निहोत्रादिस्वरूपनिरूपणे हि यथोपायं गुरुलघुस्वर्गभेदक्लृप्तिस्स्यात्' ज्योतिष्टोमोऽग्निष्टोम इत्यनेन ज्योतिष्टोमस्याग्निष्टोमरूपत्वे निश्चिते च तत्साध्यस्य स्वर्गस्य यावदग्निष्टोमेनोपाप्नोतीत्यादिना देशकालादिपरिच्छेदनिश्चयः तत्रावृत्तिविधिरप्यनावृत्तस्य फलाल्पत्वे लिङ्गमित्यादिना प्रत्यब्दं चातुर्मास्याद्यावृत्तिविधौ निरूपिते चातुर्मास्यानां क्षय्यफलत्वनिश्चयो भवति। यदि चातुर्मास्यानामक्षय्यफलत्वं तदा पुनस्तदनुष्ठानवैयर्थ्यप्रसङ्गादित्यादिकं भावप्रकाशिकायामुक्तम्।

एवमर्थसिद्धमेवाभिप्रेत्य कर्मविधिस्वरूपे निरूपिते कर्मणामल्पास्थिरफलत्वं दृष्ट्वेति श्रीभाष्यं प्रवृत्तं-तस्मिन्नेव विषये पूर्वपक्षसिद्धान्तरूपेण तु विचारस्साधनाध्यायाद्यपादेऽपि हि न दृश्यते। शारीरशास्त्रश्रवणौपयिककर्मफलवैराग्यसंपादकः कर्मफलानित्यत्वनिर्णयः कर्मविचारसाध्यः। साधनाध्यायाद्यपादसाध्यस्तु मोक्षोपायप्रवृत्तित्वरौपयिकोत्कटवैराग्यापादकः कर्मफलानां निरयतुल्यत्वधीसध्रीचीनानित्यत्वनिर्णय इति न पौनरुक्त्यमिति व्यक्तमाकरे।

अतश्शास्त्रश्रवणौपयिक वैराग्यापादकानित्यत्वनिर्णयस्य अन्योन्याश्रयप्रसक्त्या साधनाध्यायसाध्यत्वायोगात्, तत्र प्रत्यक्षानुमानादिप्रवृत्तेश्च पूर्वमेव निरस्तत्वात्, मध्ये शास्त्रान्तरश्रवणावकाशलाभस्य शतदूषण्यामेव निराकृतत्वाच्च कर्मविचारसाध्यत्वमेव परिशेषादभ्युपगन्तव्यं, न तु लोकत एव कर्मफलानित्यत्वनिर्णय इति।

कर्मविचारादुक्तरीत्या कर्मफलानामनित्यत्वे निश्चिते च सति तदनन्तरमेव 'तद्यथेह कर्मचितो लोकः क्षीयते, परीक्ष्य लोकान् कर्मचिता-नित्यादीनि वाक्यानि प्रागापातधीजनकान्यपि निरूपितसंवादादेव यथाश्रुता-र्थानि निश्चीयन्त इति न ततः प्रागनित्यत्वनिश्चयसंभव इत्युक्तम् ।

यत्तु—अनुपदमुदाहृतानीमानि वाक्यानि असन्दिग्धार्थकानि, अत एव मीमांसाद्वये कुत्रापि न विचारितानीति नापातधीजनकानि किं तु प्रागपि निर्णायकान्येवेति । तन्न, 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं' अपाम सोमममृता अभूमेत्यादिवाक्यानामपि प्रथममसन्दिग्धार्थकत्वे निश्चा-यकत्वे पश्चात् परस्परप्रतिरोधानुसंधानेन उभयत्र संदेहस्यावर्जनीयत्वात्, उक्तसंदेहस्य च कर्मस्वरूपावृत्त्याद्यभिधायकवाक्यान्तरविचारेणैव निराससंभ-वेन उक्तवाक्यविषये पृथग्विचारस्य वैफल्यादेवाकरणोपपत्तेश्च ।

एतेन 'अक्षय्यं ह वै चातुर्मास्ययाजिनस्सुकृतं भवति' 'अपाम सोम-ममृता अभूम' इत्यादि कर्मफलनित्यत्ववचनानि स्तुतिमात्रपराणि न स्वार्थ-पराणीति कृत्स्नवेदाध्यायिभिर्वेदान्ताध्यायिभिर्वा निस्संदेहमवगतानीति कर्मविचारे ब्रह्मविचारे वा तदवलम्ब्य विचाराकरणादेवावगम्यत इत्युक्तम-प्यपास्तम् ।

## पुरुषप्रवृत्तिक्रमप्रतिबन्धकनिवृत्तिसूचनम्

वेदान्तमात्राध्यायिनामुक्तवाक्यश्रवणस्यैवाप्रसक्त्या निरुक्तावगत्य-नुपपत्तेः । 'तद्यथेह कर्मचितो लोकः क्षीयत' इत्यविचारितवाक्यस्यापि स्तुतिपरत्वावगतेरापत्तेश्च । अतः कर्मविचारात् प्रागुभयत्रापि संदेहसह एव ग्रहः, अथापि 'अत्के चेत् मधु विन्देत किमर्थं पर्वतं व्रजेत्' 'इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरे' दिति न्यायात् कर्ममात्रेण चेदमृतत्वं लभ्येत कः पुनः कर्माङ्गकात् कर्मसमुच्चिताद्वा ज्ञानादमृतत्वं लिप्सेतेति कर्मण्येव प्राक् प्रवृत्तिरिति पुरुषप्रवृत्तिक्रमविशेषः शतदूषण्यामुपदर्शितः । एतत्सूच-नादपि कर्मविचारपूर्ववृत्तत्वकथनस्य प्रयोजनातिशयः इत्यप्युक्तम् ।

तथा प्रथमतः कर्मापि अनन्तस्थिरफलतया साङ्गवेदाध्ययनादापा-ततः प्रतिपन्नं, तत्र च यावता बाधो नाभिगम्यते तावदुक्तन्यायात् कर्मणि

तद्विचार एव वा पुरुषप्रवृत्तिस्स्यात् न तु ब्रह्मविचारे। कृते सु कर्मविचारे उक्तरीत्या बाधनिश्चयात् उक्तापातप्रतीतेस्तद्विषयताविशिष्टकर्मणो वा निवृत्तावेव ब्रह्मविचारः प्रवर्तते। अत उक्तापातप्रतीतिविषयतापन्नं कर्म ब्रह्मविचारप्रतिबन्धकमित्यर्थसिद्धम्। तन्निवृत्तिसूचनमपि कर्मविचारपूर्ववृत्तत्वकथनस्यापरं प्रयोजनं भवति। तदप्युक्तं अनन्तस्थिरफलतया प्रथममापातप्रतीतकर्माख्यप्रतिबन्धकनिवृत्तिसूचनेन निर्विघातब्रह्मविचारारम्भद्योतनादिति।

## कर्मणां ब्रह्मविचारप्रतिबन्धकत्वम्

एतेन अत्र यदुक्तं 'अधीतसाङ्गवेदस्य' 'तमेतं वेदानुवचनेनेति वाक्यमपि जानतः कथमापाततोऽपि कर्मणः प्रतिबन्धकत्वावगमः? कर्मविचारे केन वा न्यायेनान्तवदस्थिरफलत्वं कर्मणः साधितं? 'अक्षय्यं ह वै' 'अपाम सोम' मित्यादिवाक्यानि तन्नित्यतामेव हि दर्शयन्ति। सति चैवं कथमनन्तस्थिरफलतया प्रथमावगतकर्मप्रतिबन्धकनिरसनेन निर्विघातो ब्रह्मविचारस्संभाव्यत इति। तत्सर्वं दत्तोत्तरं-विद्याङ्गभावेनान्वययोग्यस्यापि कर्मणः प्रथमतः स्वातन्त्र्येणाबाधितानन्तस्थिरफलजनकत्वापातधीविषयतया पूर्वोक्तन्यायात् ब्रह्मविचारे पुरुषप्रवृत्त्यनुत्पादप्रयोजकत्वात् तत्प्रतिबन्धकत्वं वस्तुतो विद्यत इत्युक्तेरविरोधात्। कर्मविचारे कर्मविधिस्वरूपादिनिरूपणेनोक्तविधया कर्मणामक्षय्यफलत्वबाधे अक्षय्यं ह वै इत्यादिवाक्यानामन्यपरत्वनिश्चयेनोक्तप्रतिबन्धकनिवृत्त्या नित्यफललिप्सया ब्रह्मविचरारम्भो निर्विघातस्संपद्यत इत्यत्रानुपपत्तेरभावाच्च। एवं कर्मविचारस्थन्यायोपजीवनादपि ब्रह्मविचारस्य तदानन्तर्यमेवोपगन्तुमुचितमित्युक्तम्।

यत्पुनरुक्तं—बादरायणेन स्वतन्त्रं स्वापेक्षितसर्वन्यायकलापास्सूत्रिता इति, तत् पूर्वमेव शास्त्रैक्यवादे युक्तिभिस्समूलमुन्मूलितं। बादरायणेन जैमिनीयोपजीवने शङ्करभाष्यमपि प्रमाणमित्यनेकत्र तदीयवाक्योदाहरणेनापि तत्र प्रदर्शितम्। युक्तियुक्तं वचो ग्राह्यमिति न्यायेन शिष्योक्तस्यापि साधुत्वे तदुपजीवनमपि सर्वज्ञानामपि प्रामाणिकानां न दोषाय स्यात्। अत एव साक्षादप्यविरोधं जैमिनिः' संपत्तेरिति जैमिनिस्तथा हि दर्शयतीत्या-

दावनेकत्र जैमिन्युक्तोपजीवनमुपपद्यते, तथा 'अवस्थितेरिति काशकृत्स्न' इत्यादौ सर्वज्ञस्यापि ऋष्यन्तरोक्त्युपजीवनं च । अधिकमन्यत्र ।

अतस्सिद्धान्तसिद्धाञ्जन-परिमलादिवचनं स्वभाष्यविरुद्धं, सूत्राक्षर स्वारस्यपरिपन्थि, निर्युक्तिकं, सूत्रकारशैलीविपरीतं चेति निरभिनिवेशाना-मनुपादेयमेव । एवं ब्रह्मविचारनिरूपणीयापवर्गसाधनोपासनापेक्षितानभि-संहितफलसहकारिवर्गस्वरूपनिश्चयस्य कर्मविचाराधीनस्यैवोपजीवनादपि तस्य पूर्ववृत्तत्वमुचितमित्यावेदितम् ।

## कर्मविचारस्य साक्षाद्ब्रह्मविचारोपयोगः अपरोक्षमोक्षोपायत्ववादः सूत्रानारूढश्च

यच्चात्रापवर्गोपायत्वं साक्षादपरोक्षज्ञानस्य, तदुपायत्वमुपासनस्य, तदुपायत्वमनभिसंहितफलकर्मण इति बहुशः पूर्वमावेदितत्वात् अपवर्गोपाय-जिज्ञासायां तदुपायभूतसङ्कर्षकाण्डानन्तर्यमेव स्यात् न तु कर्मविचारानन्तर्य-मिति । तच्चापाततः-नित्यानित्यवस्तुविवेकादेः मुमुक्षादिव्यवहितस्यापि पूर्ववृत्तत्ववादिनां व्यवहितपूर्ववृत्तत्ववचनस्य दूषयितुमशक्यत्वात्, कर्मानु-बन्धिदेवतागोचरसङ्कर्षकाण्डान्तस्य कृत्स्नस्यापि विचारस्यैव कर्मविचारत्वा-भ्युपगमस्य दर्शितत्वेन सङ्कर्षकाण्डानन्तर्यस्यानिष्टत्वायोगात् शारीरकतृतीय-चतुर्थयोरेव साक्षात् मुक्तिफलोपासनविचारेण तत्रैव विषयसमर्पकतया शारीरकाद्यद्विकस्यैव सहकारिवर्गप्रतिपादकतया कर्मविचारस्य कृत्स्नस्याप्यु-पयोगेन व्यवहितत्वाभावात्; मुक्तिफलत्वेन प्रकृताया एव विद्याया 'आवृ-त्तिरसकृदुपदेशात्' 'लिङ्गाच्च' 'ध्यानाच्च' 'आप्रयाणात् तत्रापि हि दृष्ट' मित्यादिभिस्सूत्रैरुपासनरूपत्वाभिधानवत् अपरोक्षरूपताबोधने सूत्राक्षरलेश-स्याप्यदर्शनेन मुक्त्युपायापरोक्षवादस्य शारीरकविरुद्धत्वाच्च ।

यदप्यध्ययनविधेः कर्मकाण्डाध्ययनमात्रपरतासाधनदुराशया प्रस-ञ्जितं—अधीत्य स्नायादित्यत्र कृत्स्नवेदार्थविचारानन्तरं समावर्तनविधाने असञ्जातमोक्षाभिलाषस्याप्यसमावृत्तस्यैव ब्रह्मविचाराधिकारस्स्यात् न तु सञ्जातमोक्षाभिलाषस्य गृहस्थादेरिति 'सञ्जातमोक्षाभिलाषस्यानन्तस्थिर-फलब्रह्मजिज्ञासा ह्यनन्तरभाविनीति श्रीभाष्योपरोध इति ।

तदप्यपेशलम्—कृत्स्नविचारस्याध्ययनविध्यन्तर्भावोपगमेऽपि अध्ययनक्रमेण प्रथमतः कर्मविचारानन्तरं तत्फलानित्यत्वनिर्णयेन तदानीमेव परिशेषान्नित्यफले मोक्ष एव प्रेक्षावतामभिलाषजननावश्यंभावेन सञ्जातमोक्षाभिलाषस्यैवानन्तरं ब्रह्मजिज्ञासोपपत्तेः ।

न च ब्रह्मचर्यावस्थायामेव मोक्षाभिलाषोत्पत्तौ गार्हस्थ्यलोप एव स्यादिति वाच्यं, मुमुक्षूणामपि मोक्षोपायशीघ्रसिद्ध्यौपयिकसहकारिपौष्कल्यलिप्सया गार्हस्थ्यावलम्बन एव प्रायशः प्रवृत्तिसंभवात् । न चैवमपि काम्यकर्मविधेरननुष्ठानलक्षणमप्रामाण्यं स्यादिति शङ्क्यम्, तदानींतनस्य कर्मफलवैराग्यस्य मोक्षाभिलाषस्य च ब्रह्मविचारौपयिकस्यापि अनुत्कटत्वेन तदुत्तरभाविप्रबलकर्मपरिपाकविशेषाधीनफलान्तररागं प्रत्यप्रतिबन्धकत्वेन केषांचित् काम्यकर्मप्रवृत्तेरप्युपपत्तेः । अतः कर्मविचारमात्रानन्तरं समावर्तनप्रसक्ते र्वा तदुत्तरमनियतकाले ब्रह्मविचारारम्भस्य वा तत्र कर्मविचारोपलक्षणभावस्य वा कर्म-देवता-ब्रह्मणामेकद्वित्रिविचारानियमस्य वा न कस्यचिदप्यवकाशस्स्यात् ।

वस्तुतस्तु श्रीभाष्यकृन्मतेऽध्ययनविधेरक्षरग्रहणमात्रविश्रान्तत्वेन समावर्तनात्पूर्वमेव विचारः करणीय इति निर्बन्धाभावादुक्तशङ्कातङ्कप्रसक्तेरेवाभावात् न श्रीभाष्यवाक्योपरोधगन्धः ।

## अधीत्य स्नायादित्यत्र कृत्स्नाध्ययनस्यैव समावर्तनपूर्वत्वम्

अतोऽधीत्य स्नायादित्यत्राक्षरग्रहणपर्यन्तकृत्स्न स्वाध्यायाध्ययनोत्तरभाव एव समावर्तने विधीयते, तथाऽध्ययनविधिरपि कृत्स्नस्वाध्यायविषय एव न तु तदेकदेशविषयः स्वाध्यायपदार्थसंकोचे मानाभावात् विध्यन्तराभावेनोपनिषदामध्ययनानापत्तेश्च । न चोपनिषदमावर्तयेदिति विध्यन्तरेण तदध्ययनसिद्धिरिति युक्तं । तत्सत्वेऽपि लिखितपाठादिनाप्यावृत्त्युपपत्त्या न तदध्ययनसिद्धिस्स्यादिति प्रागेव प्रपञ्चितत्वात् । अतः कर्मकाण्डमात्राध्ययने तदर्थविचारमात्रे वा न किञ्चित्प्रमाणमुपपत्तिर्वाऽस्ति । तस्मादध्ययनविध्यध्यापितकृत्स्नस्वाध्यायरूपैकव्याख्येयव्याख्यानत्वादैकशास्त्र्यं कर्मब्रह्मविचारयोः । तत्र व्याख्येयक्रमानुसारेण कर्मविचारस्य पूर्वत्वम् ।

अपशूद्राधिकरणादिभेदस्तु अधिकाशङ्कानिबन्धन इति भाष्यद्वयसंप्रतिपन्नम् । अवान्तरविषयभेदाल्लक्षणप्रमाणसूत्रभेद इति पूर्वमेव सनिदर्शनमुक्तम् ।

**वेदनाङ्गकर्मविषये ब्रह्मसिद्धिः**

जन्मान्तरीणकर्मणां दुर्ज्ञेयतया अस्मिन् जन्मनि वेदनाङ्गतया विविदिषाङ्गतया वा आप्रयाणात् कर्मानुष्ठानमित्युक्तं, उत्पन्नेऽपि वेदने विविदिषायां वा कर्मत्यागे सति स्वहेतुतः, पुनश्च रजस्तमस्समुन्मेषादन्यथावभासविपरीतप्रतिभासभूयस्त्वेन वेदनविविदिषयोरुच्छेदे पुरुषार्थहानिरेव हि स्यात्-तदुक्तं ब्रह्मसिद्धावपि "निश्चितेऽपि प्रमाणतत्त्वे सर्वत्र मिथ्यावभासा निवर्तन्ते, हेतुविशेषादनुवर्तन्तेऽपि । यथा द्विचन्द्रदिग्विपर्यासादय आप्तवचनविनिश्चितदिक्चन्द्रतत्त्वानां, तथा निर्विचिकित्सादाम्नायादवगतात्मतत्त्वस्यानादिमिथ्यादर्शनाभ्यासोपचितबलवत्संस्कारसामर्थ्यान्मिथ्यावभासानुवृत्तिः, तन्निवृत्तयेऽस्त्यन्यदपेक्ष्यं तच्च तत्त्वदर्शनाभ्यासो लोकसिद्धः, यज्ञादयश्च शब्दप्रमाणकाः, अभ्यासो हि संस्कारं दृढयन् पूर्वसंस्कारं प्रतिबद्धय स्वकार्यं संतनोति, यज्ञादयश्च केनाप्यदृष्टेन प्रकारेण श्रेयःपरिपन्थिकलुषनिबर्हणद्वारेणेत्यन्ये इति ।

एतावता कर्मत्यागे कलुषविवृद्धयाऽदृष्टवैकल्येन वा निर्विचिकित्सवेदनानुवृत्त्यसंभवात् आप्रयाणात् कर्म कर्तव्यमेवेत्यनुमतं भवति । अतो ब्रह्मविचारावसेयोपासनाङ्गतया संनिहितकालावश्यानुष्ठेयकर्मनिश्चायकतयाऽपि कर्मविचारस्य ब्रह्मविचारपूर्वत्वं वेदनाङ्गभूतकर्मस्वरूपादिविचारस्य शारीरकतृतीयाध्यायचतुर्थपादे सङ्गतिसंभवेऽपि बहुग्रन्थसाध्यत्वेन तत्राशक्यनिरूपणतया पृथक्करणावश्यंभावे सति ब्रह्मविचारोपयुक्तानेकार्थसमर्थनं तत्परत्वेन आश्रमकामनाङ्गभावसाधारणस्वरूपकर्मगोचरत्वेन व्याख्येयभूत[मुख्यकर्मोपक्रम]स्वाध्यायक्रमानुसारेण च प्रथमत एव कर्मविचारस्य करणात् न तदानन्तर्योक्तावन्योन्याश्रयणावकाश इति पूर्वमेवोक्तम् ।

अत एव कर्मविचारस्य वेदनविचारपरचतुर्थाध्यायपूर्ववृत्तत्ववचनसंभवेऽपि समन्वयाध्यायेनाविरोधाध्यायेन साधनाध्यायेन च का वा सङ्गतिः श्रीभाष्यकारमत इत्येदपि दत्तोत्तरम् । साधनाध्यायस्य मोक्षोपायोपासनात्मकवेदनविचारपरतायास्स्फुटत्वात् । तत्रासन्दिग्धविषयसमर्पकतया अन्तरङ्ग-

भावात् समन्वयाविरोधाध्याययोरव्यवहितपूर्वभावावश्यंभावे तत्पूर्वमेव कर्मविचारसङ्गतेरभ्युपेतव्यत्वात् समन्वयाविरोधाध्याययोरपि श्रुतिलिङ्ग-वाक्यप्रकरणादिविषयेऽन्यत्र कर्मविचारसापेक्षत्वेन तस्य तत्पूर्वत्वावश्यं भावाच्च। अत एवायं कर्मविचारपूर्वभावः श्रुत्यैव कण्ठोक्त इत्युच्यते श्रुतिश्चेत्यादिना 'परीक्ष्य लोकान् कर्मचितानि'त्यत्र परीक्ष्येति कर्मविचार एव हि पूर्ववृत्त इत्युच्यते। लोकतः परीक्षणमशक्यमिति प्रागेव निरूपितं खलु। अत एव वैदिकानां प्रायेणात्र संवाद एवोपलभ्यत इति प्रदर्श्यते—अत इत्यादिना। अन्यांशे विवदमानानामपि प्रकृतविषये संवादमात्रादिह ग्रहणम्। न च क्वचित् विरुद्धं भाषमाणानामपि वैदिकानामन्यत्र अविरुद्धमपि वचनं न ग्राह्यमिति। यो युज्यतेऽयमेव न्यायस्सर्वत्र मतान्तरग्रन्थसंवाद-प्रदर्शनेष्वप्यवसेयः।

एतेन निरीश्वरमीमांसकग्रहणमपि निर्व्यूढम्। ते तावदीश्वरत्वमुप-यन्त्वपलपन्तु वा, वेदान्तानां स्वतः प्रमाणतां कर्मविधिशेषतयाऽर्थवादतां वा-ऽप्यभिदधतु, निश्शेषवेदार्थविज्ञानाय मीमांसारम्भ इति वचनात् कर्मविचा-रोपक्रमं शास्त्रं वेदान्तविचारशिरस्कमित्यभ्युपगच्छन्तीति सिद्ध्या कर्मब्रह्म-विचारपौर्वापर्यमात्रे तत्संवाद इह प्रदर्शितः। वेदोपक्रमस्थकर्मविचारमेव हि ते पूर्वमारभन्ते। अत एव प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्याह भगवानुपवर्षः, न त्ववोचामेति। यथा भट्टपादैश्च—

> **इत्याह नास्तिक्यनिराकरिष्णु**
> **रात्मास्तितां भाष्यकृदत्र युक्त्या।**
> **दृढत्वमेतद्विषयस्तु बोधः**
> **प्रयाति वेदान्तनिषेवणेन॥**

इत्यनन्तरभाविना वेदान्तनिषेवणेन पूर्वतन्त्रभाष्योक्तात्मविज्ञानस्य दार्ढ्यं भविष्यतीत्युच्यते। पूर्ववृत्तस्य ह्यनन्तरभाविनैव दार्ढ्यं वक्तुं युक्तं, न तु पूर्वतरेणापीति।

एवं वैदिकेषु निरीश्वरपूर्वमीमांसकैरितरवेदान्तिभिश्च कर्मविचार-पूर्ववृत्तत्वमङ्गीकृतमित्युक्तम्। अथोक्तमनङ्गीकुर्वन्तोऽपि वेदान्तिनः किं न सन्तीत्यत्राह—**शास्त्रान्तरत्वादिति**। त्वदीयैः **कैश्चित्परिग्रहाविति** त्वदी-

यैरद्वैतिभिरपि न सर्वैः शास्त्रान्तरत्वपक्षः परिगृहीतः किं तु कैश्चित् कतिपयैरेवेत्यर्थः। अद्वैतिनोऽपि शास्त्रैक्यवादिनो बहवस्सन्तीति यावत्। अत एव शरीरेभवाधिकरणे ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुक्तमिति शङ्कायाः सत्यमुक्तमित्यनेन पूर्वतन्त्राद्यपादस्य विचार्यमाणोत्तरतन्त्रघटितशास्त्रमुखत्वमङ्गीकृतं शङ्करभाष्येऽपि। अधिकमन्यत्र।

तथा च शास्त्रैक्यपक्ष एव भूयसां संमतः, न तु शास्त्रान्तरत्वपक्ष इति भूयसां न्यायात् शास्त्रैक्ये सिद्धे पूर्वोक्तरीत्या कर्मविचार एव पूर्ववृत्तो भवितुमर्हतीति भावः।

शास्त्रान्तत्वादिति पाठे तु शारीरकस्य विचारशास्त्रान्तत्वात् तत्र व्याख्येय वेदान्तभूतोपनिषद्भागविचारः क्रियत इति त्वदीयैरपि कैश्चित् परिग्रहादित्यर्थः। एवं च शारीरकस्य शास्त्रान्तत्ववचनेन कर्मविचारस्य शास्त्रप्रमुखत्वेन पूर्ववृत्तत्वं त्वदीयैरभ्युपगतमिति पूर्ववत् भूयसां संमतिः कर्माधिगमपूर्वत्व एवेत्युक्तं भवति।

एतेन शास्त्रान्तरत्वादित्यादिवचनं शतदूषणीकाराणामेव प्रतिकूलमित्युक्तमपास्तम्। अतः कर्मविचारानन्तर्यमेव अथशब्देन विवक्षितं न तु साधनचतुष्टयानन्तर्यमिति श्रीभाष्यनिष्कर्षो निष्प्रकम्प्य इति शतदूषणी उद्घोषयति।

---

निरालम्बनवादे भट्टपादैरुक्तं—

सर्वथा सदुपायानां वादमार्गः प्रवर्तते ।
अधिकारोऽनुपायत्वात् न वादे शून्यवादिनः ॥ १२८

योऽपि तावत् परासिद्धस्स्वयंसिद्धोऽभिधीयते ।
भवेत् तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया ॥ १३१

तं साधयन् विरुन्ध्याद्धि पूर्वाभ्युपगतं नरः ॥ १३२

साधनं चेदवश्यं च परमार्थास्तिता भवेत् ।
सिद्धि र्नापरमार्थेन परमार्थस्य युज्यते ॥ १५७

न दृष्टा शशभृङ्गादे स्सम्यग्ज्ञानादिहेतुता ।
बाष्पादिनाप्यधूमेन मिथ्या वह्न्यादिबोधनम् ॥ १५८

तस्मादसत्यहेतोर्या परमार्थे मति स्तव ।
साऽप्यसत्या न सत्यं हि सत्याभासेन गम्यते ॥ १५९

स्वरूपे विद्यमाने तु यद्यप्येवं प्रकाशते ।
स्वरूपाभावक्लृप्तौ तु न सत्यं नाप्यसत्यता ॥ १६२

हेत्वादीनां तु भवत स्स्वरूपेणाप्यसत्यता ।
तेन बाष्पादिवत् तेषा मुपायत्वं न लभ्यवत् ॥ १६३

संवृत्त्या यत् स्वरूपं हि तत् वाङ्मात्रनिबन्धनम् ।
हेतुत्वं परमार्थस्य प्रतिपत्तुं न शक्नुयात् ॥ १६५

इत्यादि । अत्र सर्वशून्यवादिनः, ब्रह्मव्यतिरिक्तसर्ववस्तुमिथ्यात्ववादिनश्च स्वपक्षस्थापकप्रमाणपारमार्थ्यानभ्युपगमात् अभियुक्तैर्वादानधिकार एव प्रतिपादितः ।

'अधिकारोऽनुपायत्वात् न वादे शून्यवादिन' इति वेदार्थसंग्रहः अस्यायमाशयश्शतदूषण्यां प्रकाशितः—

**यदि प्रपञ्चमिथ्यात्ववादी वादाधिकारिताम् ।**
**भजेन्माध्यमिकस्यापि भवेद्वादाधिकारिता ।।**
**तथा च ब्रह्मतत्त्वं ते निर्गुणं निष्प्रमाणकं ।**
**कथं मध्यमबौद्धस्य विवादं नापलप्यते ।। इति ।**

## सौगताद्वैतिनोः कथाधिकारे साम्यम्

प्रपञ्चमिथ्यात्ववादिनां मते 'वेदोऽनृतो बुद्धकृतागमोऽनृत' इत्युक्तरीत्या प्रमाणतयाऽभिमतस्य वेदान्तस्य बुद्धागमवत् पारमार्थिकसत्तानभ्युपगमेनाविशेषात् वेदान्तिन एव सदुपायत्वात् कथाधिकारो न बौद्धस्येति नियन्तुमशक्यतया उभयोस्तदुपगमे च परत्वात् शून्यवाद एव विजयेतेति भिया मृषावादिभिरप्युभयोरनधिकार एव संमन्तव्य इति भावः ।

न च मृषावादिनां मते प्रमाणानां व्यावहारिकसत्तोपगमादस्ति विशेषः । शब्दभेदेऽपि सौगतोपगत सांवृतसत्तापेक्षया भेदाभावात् । इयां स्तु विशेषः—सांवृतसत्तेति सामान्यं, तदवान्तरविशेष एव बाधकालतारतम्येन प्रातिभासिकसत्ता व्यावहारिकसत्तेति च विभज्य परिभाष्यत इति ।

तथा चेह परे ऽप्यसकृदाहुः 'यावद्बाधं साधयति'''भ्रमस्य स्वविषय प्रातिभासिकसत्तायां प्रामाण्यं' ' 'घटादिज्ञानानां व्यावहारिकसत्तायां प्रामाण्यं यावद्बाधं ''' एकस्य तु व्यवहारदशायामेव बाधः, अपरस्य तु न तथेति विशेषः इति'' । ईदृश्याश्च बाध्यसत्ताया अभ्युपगमो निरर्थक इति 'संवृत्या यत्स्वरूपं हीति पूर्वोदाहृतवार्तिकेनैव हि व्यक्तमुक्तम् ।। मिथ्याभूतस्यासतश्शशशृङ्गादेरर्थक्रियाकारित्वं न दृष्टमित्युक्तं न दृष्टा शशशृङ्गादेरित्यादिनोक्तेन वार्तिकेन । साध्यसत्तासजातीयसत्तारहितेन साधकेन क्वचिदपि साध्यसत्ताविशेषसिद्धिर्न दृष्टेति भावः । अत एव प्रातिभासिकमानेन व्यावहारिकसत्तासिद्धिर्न परैरपीष्यते । तदप्याहुः 'न हि भ्रमज्ञानमपि व्यावहारिकसाधनमित्यद्वैतसिद्धान्त इति ।

## व्यावहारिकमानात् पारमार्थिका सिद्धिः

एवं तुल्यन्यायेन व्यावहारिमानमपि पारमार्थिकसत्तासाधकं न भवितुमर्हतीत्याशयेनाहुः **चण्डमारुते**—

**प्राति भासिकमानेन व्यावहारिकसाधने ।**
**व्यावहारिक मानेन तत्त्वं सिद्धयेन्न चान्यथा ।।**

इति । पूर्वानुपगमादुत्तरस्यापि नाभ्युपगमार्हतेति भावः ।

यत्तु—पूर्वोक्तस्ववचनविरुद्धमेवानन्तरमारब्धं बाष्पे धूमत्वभ्रमेण जायमाने ज्ञाने विषयस्य वह्नेस्तत्र यदृच्छया वस्तुतस्सत्त्वे तत्र प्रातिभासिकमानेन व्यावहारिकसिद्धेरुपगन्तव्यतया तन्न्यायात् व्यावहारिकमानेनापि वेदान्तेन पारमार्थिकब्रह्मसिद्धिर्निराबाधेति । तत्तु चण्डमारुतेनैव निर्धूतं ।

**प्रातिभासिकमानेन क्वचित् सिद्धिस्ततो न च ।**
**किं तु मानान्तरादेव संवादान्नैव बाधकम् ।**

इति । सिद्धिर्नाम न ज्ञानमात्रमिह विवक्षितं; येन तस्य प्रातिभासिकमानजन्यत्वमपीह शङ्क्येत; किं तु वस्तुतस्सत्त्वेन निश्चयः; स चेह न दोषमूलेन बाष्पधूमज्ञानेन ज्ञायमान तद्धूमेन वा भवितुमर्हति; किं तु पाश्चात्येन निर्दुष्ट प्रत्यक्षादि प्रामाणान्तरसंवादेनैवेति न तावता पूर्वोक्तस्य व्यावहारिक पारमार्थिकासाधकत्वस्य बाधप्रसक्तिरपीति भावः ।

## स्वरूपेणासतः भ्रमप्रमाहेतुत्वासंभवः

स्वतः प्रामाण्यवादिनामपि कारणदोषाद्युपाधिनिबन्धनाप्रामाण्यशङ्कानिरासायेह संवादापेक्षावचनं नानुपपन्नम् । एतेन स्वतः प्रामाण्यवादिनां मानान्तरसंवादस्य प्रामाण्यग्रहे कथमुपयोग इत्युक्तं प्रत्युक्तं—धूमत्वेनान्यथा भावस्य बाष्पस्यान्यथाज्ञानहेतुत्वमेव हि प्रायशस्संभवति । अतः प्रायदर्शनादप्रामाण्ये शङ्किते अपेक्षितव्य एव हि प्रमाणान्तरसंवादः । तथापि तत्र व्यावहारिक भ्रम प्रमाऽन्यतरसाधनत्वं प्रातिभासिकस्य न वारितमिति चेत् किं ततः प्रातिभासिकस्य व्यावहारिकसाधकत्वमङ्गीकृतं भवतीति चेन्न । स्वयंप्रकाशयोः भ्रमप्रमयोस्स्वतस्सिद्धत्वेन प्रातिभासिकाधीनसिद्धिकत्वानुपपत्तेः । प्रातिभासिकस्य व्यावहारिकज्ञानहेतुत्वसिद्धिरपि न वक्तुं शक्यते । प्रतिभासमात्रविषयस्य वस्तुतस्सत्त्वाभावेन हेतुत्वासंभवात् । धूमत्वेन भासमानस्य बाष्पस्वरूपस्यैव हि तत्र वस्तुसत्ताया हेतुत्वसंभवः । वेदान्तशास्त्रस्य तु पारमार्थिक्याः स्वरूपतस्सत्ताया एवानभ्युपगमात् कथं तत्त्वज्ञानहेतुतासंभवः । तथाहि वार्तिकं—

**स्वरूपे विद्यमाने तु यद्यप्येवं प्रकाशते।**
**स्वरूपाभावक्लृप्तौ तु न सत्यं नाप्यसत्यता॥**
**हेत्वादीनां तु भवतः स्वरूपेणाप्यसत्यता।**
**तेन बाष्पादिवत् तेषामुपायत्वं न लेख्यवत्॥**

इत्युपदर्शितम्। अत्र नेत्युभयत्र संबद्धयत इति न्यायरत्नाकरः। अत्रापि शास्त्राध्यासाधिष्ठानब्रह्मस्वरूपस्य हेतुतासंभव इति मा वोचः। ब्रह्मणा ब्रह्मसिद्धयुपगमे सति आत्माश्रयस्य दुस्तरत्वापत्तेः।

## सत एव हेतुत्वम्

यदुक्तं—हेतुत्वं न वस्तुसत्तामपेक्षते किं तु पूर्वकालसम्बन्धमात्रं। तदुक्तं—

**पूर्वं सम्बन्धनियमे हेतुत्वे तुल्य एव नौ।**
**हेतुतत्त्वबहिर्भूत सत्त्वासत्त्वकथा वृथा॥**
**अन्तर्भावित सत्त्वं चेत् कारणं तदस त्ततः।**
**नान्तर्भावित सत्त्वं चेत् कारणं तदसत्ततः॥**

इतीति। तत्पुनः सर्वार्थसिद्धयादावेव समूलमुन्मूलितं—

**प्राक्कालनियतत्वेन कारणं प्रमितं न वा।**
**आद्ये तवेव तत्सत्वं अन्यथा नियमोऽपि न॥**
**अन्तर्भावितसत्त्वं चेत् कारणं सदिदं ततः।**
**नान्तर्भावितसत्त्वं चेत् कारणं सदिदं ततः॥**

विशेषणतयोपलक्षणतया वा सत्तासंबन्धिनि नासत्वारोपश्शक्य इति।

यत् पुनरुक्तं—उभयोरपि कथाधिकारो यदि सर्वसत्तावादेनैव तर्हि सौगतानां पराजयः श्रीभाष्यानुयायिभिरपि दुष्कर एव स्यादिति प्रमाणसत्तांशे औदासीन्येनैव कथाधिकारस्याङ्गीकरणीयतया अद्वैतिनामप्यधिकारो वर्तत एव। अन्यथा केवलं स्वगोष्ठयां मतान्तरनिरसनं सर्वैरपि सुकरं गेहे नर्दनमेव स्यात्। शारीरके मतान्तरनिरसनमप्यसांप्रतमापद्येतेति।

न तद्युक्तं—प्रथमत एव परेषां स्वोक्तसाधकसत्ताभ्युपगमस्याभावेऽपि स्वस्य परं स्वोक्तसाधकसत्ताभ्युपगमोऽवश्यंभावीत्येवाभिधानात्। प्रतिवाद्यसिद्धस्य वादिना साध्यमानस्य स्यादपि साधनता, वाद्यसिद्धस्य तु

व्याघातप्रसङ्गेन पश्चादपि साधनासंभवात् साधनतया उपन्यासो हि नैव संभवति तथा च वार्तिकं 'योऽपि तावत् परासिद्ध' इत्यादि प्रागेवोदाहृतम्।

## स्वमतसिद्धसत्ताकस्यैव प्रमाणतया प्रदर्शनयोग्यता, शिष्योद्देशेन शतदूषण्यादिप्रवृत्तिश्च

एवं च कथायां ये साधकतया प्रयुज्यन्ते तेषां सत्ताविषये वादिप्रतिवाद्युभयसंमतत्वनिर्बन्धाभावेऽपि वादिसंमतत्वमावश्यकमिति स्वसाधकसत्तामप्यसंमन्यमानानां कथायामनधिकार इत्येव हि अभियुक्तानामभिप्रायः। कथं तर्हि युष्मदीयानां कथामन्तरेण सौगतादिपरपराजयविधानमिति चेन्न। मध्यस्थैस्तेषां कथाया निष्कासनादेव तत्पराजयप्रसिद्धेः। अनन्तस्थिरफलार्थिनां अस्मदीयानां तत्र प्रवृत्तेरेवाभावाच्च। कथं तर्हि शतदूषण्यादिप्रवृत्तिरिति चेत् शिष्यान् प्रत्युपदेशरूपतया तदुपपत्तेः। तदेतत् 'शिष्यान् प्रत्युपदिशतो भाष्यकारस्यायं भावः सौगतानामिव प्रच्छन्नसौगतानामपि कथायामनधिकार' इत्यत्रत्यशतदूषण्यैव सुव्यक्तम्। अनेन मायिककुतर्केन्द्रजालैः सात्त्विकान् कुदृष्टयो वशमानयेयुरित्यधिकारमारोप्य तैस्सह विवादाभिनये कृते शिष्याणां हृद्यतमो भवतीति तदभिनयः क्रियत इति सूच्यत इति ह्यत्र चण्डमारुतं; न चेदं गेहे नर्दनं शिष्यगोष्ठ्यां वाचिकोपदेशमात्रे पर्यवसानाभावात्। सार्वदिक सकलदिगन्तविश्रान्तप्रचयगमनयोग्यविशदविस्तृतप्रबन्धरत्नरूपेण ह्युपदेशः क्रियते स तु विजयध्वजवदद्ययावत् अखिलदिशासु प्रथते। अत एव—

> **निखिलनिगमश्रेणीचूडापरिष्कृतिरूपिणो**
> **निपुणमनसामाशासौधस्थलीषु निबध्यते।**
> **यतिपतिभुवो भाष्यस्यासौ यथाश्रुतचिन्तित-**
> **प्रवचनविधावष्टाविंशे जयध्वजपट्टिका॥**
> **हृद्या हृत्पद्मसिंहासनरसिकहयग्रीव हेषोर्मिघोष-**
> **क्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम्।**
> **दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्तत्-**
> **सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका॥**

इत्येवं श्रीदेशिकचरणश्रीसूक्तिः।

न चैवं शारीरके कथानधिकृतमतान्तरनिरसनमसांप्रतमेवेति वाच्यं; तत्रापि स्वशिष्यान् प्रत्येव सूत्रकृता मतान्तरासामञ्जस्यप्रतिपादनात् । तदुक्तं—

**बाधाभावादकम्पे स्थितवति निगमैर्ब्रह्महेतुत्ववादे**
**भूयः किं वीतरागो वदति परपरीवादमत्रेत्ययुक्तम् ।**
**प्रख्यातप्राच्यनेकप्रतिसमयभवन्मन्दसन्देहशान्त्यै**
**तुल्यत्वभ्रान्तिसिद्धा प्रकरणसमता तर्कपादे हि वार्या ॥**

इति । एतेन शिष्यादीन् प्रत्यपि चार्वाकादेर्दोषोऽयंमित्येवाभिधातव्यं; कथं च तथा स्यात् तस्य कथाप्रवेशनाप्रवेशनयोस्तद्बाधाक्षमत्वात् कथायामेव हि निग्रह इति खण्डनवाक्यमपि प्रत्युक्तम् ।

### अद्वैतिनां प्रमाणसत्तायामौदासीन्येन कथाऽसंभवः

वस्तुतः कथाधिकाराभावेऽपि तदारोपेण शिष्यबुद्धिसुखारोहाय कथाभिनये निग्रहोद्भावनस्य नाटके रावणाद्युपालम्भवदविरोधात् । प्रमाणसत्तायाथार्थ्यांशे ओदासीन्येन कथाप्रवर्तनं च खण्डनखण्डकाराद्यभिमतं न युक्तमुपगन्तुं; तथासति वादिप्रतिवाद्युक्ततत्तन्मतसाधकानां प्रमाणतदाभासत्वनियामकाभावेन मध्यस्थेन क्वचित् जयपराजयव्यवस्थापनानुपपत्त्या कथापर्यवसानस्यैवासंभवात् । प्रपञ्चमिथ्यात्ववादे तदन्तर्गतप्रमाणस्यापि मिथ्यात्ववादेन तत्सत्तापारमार्थ्ये औदासीन्यासंभवाच्च । अतः प्रमाणसत्ता-निश्चयेनैव कथा प्रवर्तनीया ।

न चैवं कथामात्रोच्छेदश्शङ्कनीयः; अद्वैतकथोच्छेदेऽपि स्वसाधक-प्रमाणसत्तावादिनां परमार्थवेदान्ति-साङ्ख्य वैशेषिकनैय्यायिकादीनां बहूनां सत्त्वेन तदीयकथाप्रवृत्तेरविरोधात् । सौगतादीनामेव हि तत्रानधिकार इत्युच्यते यदि तेषामप्यधिकार इतीष्यते तर्हि तदीयसर्वशून्यत्ववादे किं भवता प्रत्युच्येत वेदान्तबुद्धागमयोः असत्वा (पारमार्थिक सत्त्वाभावा) विशेषात् वेदान्तेन बुद्धागमस्य बाधः कथं वक्तुं शक्यः, वेदान्तवेद्यतया भवदभिमतस्य निर्विशेषस्यापि निषेधेन परत्वात् बलीयसा बुद्धागमेनैव हि वेदान्तोऽपि बाध्येत इति भवदभिमतमेकं निर्विशेषवस्त्वपि प्रमुषितं भवेदिति प्रागेव प्रदर्शितम् ।

### अद्वैतिनां कथाधिकारे सौगताद्विशेषाभावः

न च वेदान्तानां स्वरूपतः प्रपञ्चत्वसामान्येन मिथ्यात्वेऽपि विषयतो न मिथ्यात्वमिति सौगतमतादद्वैतमते विशेष इति वाच्यम्। वेदान्तविषयत्वेन भवदभिमतस्य सौगतागमेन बाध्यतापत्तेरुक्तत्वेन विषय-मिथ्यात्वस्यापि दुर्निवारत्वात्; अन्यथा सौगतागमविषयस्य शून्यत्वस्यापि सत्यताभ्युपगमेन प्रत्यवस्थानस्यानिवार्यतापत्तेः।

**"न सौगतमते शून्यतत्त्वं मिथ्येति मन्यते।**
**व्याघातादन्यथा सर्वसत्यत्वं स्यादवारितम्॥**

किञ्च प्रपञ्चमिथ्यात्वोपगमेन प्रकटप्रच्छन्नसौगतयोः कथोपयिकप्रमाणसत्ता-द्यनभ्युपगमांशे विशेषाभावे सति वेदप्रामाण्यवादिनो वयं; आगमप्रामाण्य-वादिनस्ते; ब्रह्मवादिनो वयं; शून्यवादिनस्ते; प्रातिभासिकव्यावहारिकसत्ता-भेदवादिनो वयं; सांवृतसत्तैकवादिनस्ते; वयमद्वैतिनः; बौद्धास्ते; इत्यादि-विशेषोपपादनमकिञ्चित्करमेव कथाधिकारव्यवस्थापने।

एतेन कथकयोः प्रमाणादिसत्ताभ्युपगमं विनाऽपि कथोपपद्यत इति खण्डनखण्डखाद्ये विस्तृतमित्युक्तमपि प्रत्युक्तम्। कथायां साधनबाधन-क्षमव्यवहारस्य प्रमाणादिसत्ताभ्युपगमसाहित्यनियतत्वात्। न च सद्वचना-भासलक्षणत एव व्यवहारस्य तथात्वसंभवः। प्रमाणतया हेत्वादेर्वचनस्य सद्वचनत्वं, पक्षसपक्षसत्तादिनिरूपणादेव खलु सुज्ञेयं; तथा तदाभासत्वं विपक्षसत्तादिनिरूपणेन। सत्त्वासत्त्वचिन्तायामुदासीनैस्तु दुर्ज्ञेयमेव सद्वचना-भासलक्षणयोगित्वमपि किं पुनस्सत्तानभ्युपगमपक्षे तिष्ठद्भिः?

### खण्डनोक्तदूषणपरिहारः

न च तथापि सत्तानभ्युपगमपक्षे तिष्ठन्तं प्रति त्वदुक्तमाश्रया-सिद्ध्यादिदूषणमसङ्गतमेव स्यात् तस्य कथायामधिकारानभ्युपगमात् कथायां प्रवृत्तं प्रत्येव दूषणस्य वाच्यत्वादिति वाच्यम्। दुर्वैतण्डिकेन कथां बद्ध्वा तं प्रत्यस्माभिर्दूषणमुच्यत इत्यनभ्युपगमात्। किं तु शिष्यादीन् प्रत्येव हि तस्य दुर्वैतण्डिकस्य कथायामनधिकारं प्रदर्शयाम इत्युच्यते।

न च कथामन्तरेण तस्य निग्रहरूपमुक्तदूषणमुद्भावयितुं न युक्तमिति वाच्यं; शिष्यबुद्ध्यारोहार्थमत्र कथाभिनयमात्रमित्युक्तत्वात्।

अतो वस्तुतः कथानधिकारकथाया अप्यनभ्युपगमेन तद्वत्कथान्तरमप्यस्त्वित्यापत्तेर्न काचिदिह प्रसक्तिरस्ति ।

एवं सत्तामनभ्युपगच्छतां, तस्यामुदासीनानां वा कथाफलातिप्रसङ्गस्यानिवार्यत्वादपि कथाधिकारो न संभवति । कल्पितप्रमाणानां सर्वत्र सुलभत्वात् कल्पितत्वाविशेषे अविद्यातिरोहितब्रह्मकल्पितं सर्वज्ञबुद्धकल्पितमित्यादिविशेषस्याकिञ्चित्करत्वात् । न च सर्वेषामेकविधं प्रमाणमभिमतं; येनान्याभ्युपगतसत्ताकेन तत्प्रमाणेनान्यस्येव सत्तामनभ्युपगच्छतस्स्वस्यापि फलानतिप्रसङ्गश्शङ्क्येत । एकस्य वेद इतरस्य सौगतागम इत्येवं प्रमाणानामेकरूपत्वाभावात्, एकत्वेऽपि सत्ताभ्युपगमतदभावाभ्यां फलभेदस्यावर्जनीयत्वात् कामिन्यादावभिमानभेदाधीनफलभेदस्य सर्वसंमतत्वात् । अत एव नात्राभ्यवहारादिव्यापारफलानतिप्रसङ्गन्यायस्सुवचः; अभ्यवहारव्यापारस्य सर्वसाधारण्येन तत्तद्वादिभेदभिन्नप्रमाणवैषम्यात् । एकत्वेऽपि अभिमानभेदेन तृणाद्यभ्यवहारस्य पशुनरयोः फलैक्यादर्शनस्य दुरपह्नवत्वाच्च । एवं प्रमाणादिभिर्व्यवहर्तव्यमित्यादिव्यवहारनियमसमयबन्धस्यापि प्रमाणादिघटककारणतान्तर्भूतसत्तामनभ्युपगच्छतां तत्रोदासीनानां चासंभवादपि कथानधिकारो दुर्निवार एव ।

### स्वरूपेणासतां अबाधितविषयत्वं न सत्ता भवति

न चाबाधितविषयत्वरूपसत्ताभ्युपगमात् अद्वैतिनामपि कथाधिकारस्संभवत्येवेत्युक्तं युक्तं; प्रमाणस्वरूपस्यैव सत्तामनभ्युपगच्छतां तत्राबाधितविषयत्वरूपधर्मसत्ताभ्युपगमस्य परिहास्यत्वात्, सति धर्मिणि हि धर्मा इष्यन्ते न त्वसति । कात्स्न्र्येन वेदान्तानामबाधितविषयत्वस्याप्यनभ्युपगमाच्च ।

सगुणवाक्यानां प्रपञ्चसत्यतापराणां च न तत्र तात्पर्यमिति बाध इति भवतैव ह्युच्यते । वेदान्तेषु तथाविधानामेव वाक्यानां भूयस्त्वेन तत्प्रायदर्शनादल्पीयसां निर्विशेषादिपरतयाऽभिमतानां वाक्यानामपि तद्वा तादृग्वेति न्यायाच्च पूर्वोक्तरीत्या सौगतागमबाधितविषयत्वप्रसङ्गो दुर्निवारः । तथा च सौगताद्वैतिकथाधिकारोपगमे सौगता एव विजयेरन्नित्युक्तं युक्तमेव ।

## परमार्थमिथ्यावादिवेदान्तिनोर्विशेषः

यथार्थवादिवेदान्तिनस्तु अखिलप्रमाणसत्तादिकमभ्युपगच्छन्तो न केवलं सगुण-प्रपञ्चसद्भावपराणां वेदान्तवाक्यानामबाधितार्थविषयकत्व-मिच्छन्ति; किं तु निर्विशेषादिपरतया भवदभिमतानामपि वाक्यानां पूर्वापरानुगुणार्थवर्णनेनाबाधितार्थपरतामुपगच्छन्ति । नेति नेतीत्यादौ ब्रह्मपरिशेषार्थं शङ्करभाष्योक्तो न्यायो रूपपरिशेषेऽपि तुल्य इति ह्युक्तम् । अतो निखिलवेदान्तवाक्यस्वरूपसत्ताप्रामाण्यादिकमभ्युपगच्छतामेतेषामद्वैतिवन्न कुत्रापि कथायामनधिकारश्शङ्कितुमपि शक्यः ।

मृषावादिवेदान्तिभिस्तु वेदान्तानां स्वाभिमतप्रमाणानामपि मिथ्यात्वेन स्वरूपतस्सत्ताया एवानभ्युपगमात् कात्स्न्र्येन प्रामाण्यानभ्युपगमाच्च विशेषात् न कुत्रापि कथायामनधिकार इति विशेषः ।

एतेनाद्वैतमते सन्मात्रविषयज्ञानस्यैवाबाधितार्थविषयकत्वेन प्रमाणत्वं नान्यस्य; मिथ्याभूतानामपि बहुशोऽर्थक्रियाकारित्वात् प्रमाणानां स्वरूपतस्सत्ताभ्युपगमो वितथः । यदि सत्ताभ्युपगम एव कथाधिकारस्तर्हि शारीरकसूत्रादौ साङ्ख्यसौगतादिकथाधिकाराभ्युपगमविरोधः, सांवृतसत्तोपगमेन तदुपपत्तौ व्यावहारिकसत्तामुपगच्छतामद्वैतितामेव कथं न कथाधिकार इति निष्कर्षोऽपि बहिष्कृतः । केनापि प्रमाणेन सन्मात्रज्ञानजननासंभवस्य मिथ्याभूतानामर्थक्रियाकरणासंभवस्य च महासिद्धान्त एव विशदमुपपादितत्वात् शारीरकसूत्रभाष्यादौ परमतनिरसनपरभागानां शिष्यव्यामोहशान्त्येकप्रयोजनतया सौगतादिकथाधिकारगमकत्वायोगस्य प्रागेवासकृदुक्तत्वात् सांवृतव्यावहारिकसत्ताभ्युपगमस्य असत्ताभ्युपगमपर्यवसायिनः कथाधिकारानुपकारकत्वाच्च ।

अत एव यावत्कथं वेदान्तानामपि प्रमाणानां सत्ताभ्युपगमो नाद्वैतमतेऽपि विरुद्धः, यदा तु प्रमाणानामपि बाधो निर्धार्यते तदा तु न कथाधिकार्यपि कश्चन, एतदेवाभिप्रेत्योक्तमिष्टसिद्धौ—'तिष्ठामस्त्वयाऽस्मास्वारोपिते सत्त्वानभ्युपगमपक्ष इती'ति भावविवरणमपि व्युदस्तम् ।

## अद्वैतिनां उभयथाऽपि कथाऽनधिकारः

वेदान्तार्थनिर्धारणाभावे पारिप्लवमतेः प्रतिवादिना सह कथायामधिकारायोगः, निर्धारणे तु अद्वैतिनां प्रमाणबाधनिर्धारणस्याप्यवश्यंभावेन प्रमाणशून्यतया न कथासंभव इत्युभयथाऽप्यनधिकारस्य दुष्परिहरत्वात् । तिष्ठाम इत्याद्युक्तेष्टसिद्धिग्रन्थविवरणस्यापि स्वमते परकीयनिग्रहोक्तिप्रसक्तिविरहसंपिपादयिषया सर्वदाऽप्यनधिकाराभ्युपगम एव तात्पर्यावगमाच्च ।

वस्तुतस्तु परकथाभिनयेन शिष्यं प्रति परमतदूषणप्रदर्शनस्य सम्यक्त्वोपपादनान्न तदिष्टसिद्धचवकाशः ।

## अद्वैतिनां शिष्यादिभिस्सह वादकथायामप्यनधिकारः

तत्त्वबुभुत्सून् शिष्यान् प्रति तत्त्वोपदेशसमयेऽपि तत्त्वावबोध प्रतिष्ठापननान्तरीयकतया विरुद्धमतदोषकीर्तनमपि ह्यवर्जनीयमापतति न तु परमतदुदूषयिषया । अत एव श्रीभाष्ये महासिद्धान्तादिप्रकरणेषु अद्वैतिमतभेदेषु बहुषु बहवो दोषा दर्शिताः । तत्र कतिचन मतभेदाः प्रचारविरहादिदानीमुत्सन्ना अपि स्युः । तदानीमपि न सन्त्येव त इति वक्तुं तु न वयं प्रभवामः । तत्र श्रीभाष्यकृतां प्रमाणसत्तादिकमभ्युपगच्छतां स्वपरमतयोः प्रमाणबलाबलनिबन्धनगुणदोषप्रदर्शनपूर्वकं तत्त्वावधारणदृढीकरणाय शिष्यैस्सह वादकथाऽप्युपपद्यते नत्वेवमद्वैताचार्याणां, असत्वाविशेषे सति सर्वज्ञसुगतागमात् अद्वैतवेदान्तवाक्यस्य कथं प्राबल्यं ? येन सुगतोक्तं विहाय वेदान्तोक्तमेव तत्त्वं प्रतिपद्येमहीत्यमूकेन केनचित् शिष्येण पृष्टे सति समीचीनप्रतिवचनालोचनस्यैवानवकाशात् ।

अथापि तत्तीर्थकरास्तदनुसारिणश्च वादकथां प्रवर्तयन्त एव दृश्यन्त इति चेत् तर्हि तत्र शुश्रूषुभिस्तूष्णीकैरेडमूकैर्मूकैरेव वा भवितव्यं, न तु वाग्मिनोऽभिज्ञा अपि तां शृणुयुः । न ह्यसत्त्वापरपर्यायव्यावहारिकसत्त्वावलम्बनमात्रमद्वैतिनां सौगतादिनिबर्हणे पर्याप्तं शस्त्रमिति मेधाविनोऽपि श्रद्दध्युः । प्रमाणसत्त्वासत्त्वौदासीन्येन अद्वैत एव वेदान्तोपक्रमादितात्पर्यलिङ्गानि सन्तीत्युक्ते सौगतादयोऽप्येवमेव तदागमोपक्रमादीनि तदभिमततत्त्व एव तात्पर्यं ग्राहयन्तीति प्रतिगृगृयुरिति बुद्धिमन्तः कथं वा न प्रतिबुद्धयेरन् ? अतः प्रेक्षावतश्शिष्यान् प्रति तद्व्यवहारः किञ्चिदपि साधयितुं बाधितुं वा

# निर्विशेषस्वप्रकाशभङ्गवादः

निर्विशेषे वस्तुनि इदं प्रमाणमिति न शक्यते वक्तुमित्यादिना महासिद्धान्ते यदुक्तं तदिह निर्विशेषस्वप्रकाशभङ्गवादे प्रपञ्च्यते ।

तत्र स्वप्रकाशप्रत्यक्षसिद्धं तदिति निर्विशेषवादिनो वदन्ति । 'तदुक्तमद्वैतसिद्धावपि स्फूर्त्यर्थं "स्वप्रकाशतया प्रमाणवैयर्थ्य"मिति । अनूद्यते च महासिद्धान्ते "यस्तु स्वानुभवसिद्ध इति स्वगोष्ठीनिष्ठस्समय" इति । तत्र स्वानुभवेनैव सिद्धो न प्रमाणान्तरेणेत्यवधारणार्थो विवक्षितः । परप्रकाश्यत्वाभाव एव हि स्वप्रकाशत्वमिति हि तैरभिमन्यते । अत एवैतद्वादोपक्रमेऽपि पूर्वपक्षानुवादोपसंहारे तदभिमतमाविष्कृतं-तदेवमात्मसाक्षिकनिर्विशेषानुभवस्यारोपितोपरागविनिवारणमुखेन संवादकतया वाऽनुग्राहकमनुमानागमादिकमप्याद्रियामहे न वेति ।

### शतदूषण्यां प्रतिपादितस्य निर्विशेषस्वप्रकाशभङ्गवादस्य संग्रहः

तदेतच्छतदूषण्यां प्रथमतः पराभिमतनिर्विशेषत्वावेद्यत्वव्याघातप्रसंगाद्युपपादनेन बहुधा दूषितम् ।

तस्य चायं संग्रहः—येयं निर्विशेषा संवित् सा कस्मै स्वयमेव प्रकाशते यदि स्वस्मा एव कथं तर्ह्यस्माकं तत्सिद्धिः । स्वस्मै स्वयंप्रकाशमाना सा संविदेव स्वयाथात्म्यमस्मान् प्रति प्रतिपादयतीति चेत् कथं तर्हि सा निर्विशेषा स्यात् ? प्रतिपाद्यविषयप्रतिपादकशब्दप्रतिपादन संप्रदानादिविशेषोपगमावश्यंभावात् विशेषानुल्लेखे निर्विशेषत्वप्रकाशानुपपत्तेश्च । यदि चान्य एव यः कश्चित्तामेवमुपलभ्य तथा प्रतिपादयत्यस्मान् प्रतीत्युच्यते तर्ह्यन्यदीयोपलम्भविषयतया तस्या वेद्यत्वं दुर्वारम् । तस्याश्च सर्वलोकसम्मतसंविद्रूपत्वे निर्विशेषतया तदुपलम्भस्य भ्रान्तित्वापातः । विषयाश्रयस्वगतविशेषविशेषितत्वेनैव तद्दर्शनात् तदुत्तीर्णत्वेऽपि तस्या उपदेष्टृमात्रसिद्धत्वे तदुपदेशस्य न विश्वसनीयता स्यात् । सर्वेषामपि स्वानुभवसिद्धावुपदेशवैयर्थ्यं, न कस्मा अपि सिद्ध्यतीति चेन्न तर्हि सा सिद्धिरेव स्यात् स्वस्या एव स्वात्मानं प्रतीति चेत् तदिदं दावदहनविवशजरदजगरपरिभ्रमणं । पूर्वमेव

दुर्वारदूषणेन परित्यक्तकल्पस्यैव पुनश्च कल्पान्तरेऽप्यपरिहार्यदूषणगणोपलम्भभयपारवश्येन परिग्रहान्निस्तारासिद्धेः। अतो लोकसिद्धविशेषसंविदुत्तीर्णनिर्विशेषसंवित् शशशृङ्गवदेव स्वानुभवबलेन न सेद्धुमर्हतीति।

## सविशेषवादेऽपि निर्विशेषवादे चोदितदूषणानां प्रसङ्गः तत्परिहारश्च

अत्र साक्षात् प्रतिवक्तुमशक्नुवता सविशेषवादेऽप्युक्तदोषसाम्यापादनप्रत्याशया यदनुयुक्तं किं नाम स्वप्रकाशत्वं जीवपरमात्मधर्मभूतज्ञान साधारणमिति। तत्र अन्यानधीनप्रकाशत्वमित्यस्यैव समीचीनोत्तरत्वात् स्वस्मै प्रकाशमानत्वमित्यादिना सविशेषवाद्यनुक्ताननुगतानुपपन्नतानिर्वचन भेदानुवादस्त्वनादरणीय एव। अत एव न हि स्वस्मै प्रकाशमानत्वं स्वप्रकाशत्वमित्यग्रेतनप्रतिषेधोऽप्यप्रसक्तप्रतिषेध एवेति न पृथग्वक्तव्यम्।

## जीव परमात्म-धर्मभूतज्ञान त्रितयसाधारणं स्वप्रकाशत्वं अन्यानधीनप्रकाशत्वरूपमिति निरूपणम्

यत्तु—जीवपरमात्मनोः स्वप्रकाशत्वं किं तावेवानुभवतः उतान्य इति।

तत्राद्यमेव कल्पमङ्गीकुर्मः। प्रत्यक्त्वघटकतया स्वप्रकाशत्वस्यापि धर्मिभास्यत्वाभ्युपगमात्। उक्तं च स्वप्रकाशत्वघटितमपि प्रत्यक्त्वं, "स्वस्मै च स्वेन भानं तदिति समुचितं तत्स्वतस्सिद्धिसिद्धे"रित्यादौ।

प्रत्यक्त्वं च धर्मिस्वरूपेणापि भासत इत्युक्तं आत्मा स्वेनैव सिद्ध्यत्यहमितीत्यादौ अहन्त्वं च प्रत्यक्त्वमेव तदुक्तं

**अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत्।**
**अहं बुद्ध्या परागर्थात् प्रत्यगर्थो हि भिद्यते॥** इति।

अत एव स्वानुभवपक्षे सविशेषात्मस्वरूपस्य निर्विशेषसंविन्मात्रस्येव स्वयाथात्म्यैकदेशप्रतिपादनसंरम्भात्यन्तवैमुख्यमपि नापादयितुं शक्यं धर्मि स्वरूपसविशेषताया अभीष्टत्वेन तत्प्रसङ्गायोगात्।

एवं धर्मभूतज्ञानस्य स्वप्रकाशत्वं धर्मभूतज्ञानमेवानुभवति उतान्य इति च यत् विकल्पितं। तत्रापि धर्मभूतज्ञानस्य स्वयंप्रकाशत्वेऽप्यचेतनत्वादुत्तरकल्प एवाभियुक्तैरभ्युपगम्येत, तत्रापि न धर्मिस्वरूपेणैव तदनुभवः, अपित्वनुमानागमाधीनधर्मभूतज्ञानान्तरेणैवेति विशेषो दुरपह्नव एव।

एवं च सविशेषवादे सर्वेषामेवात्मनां स्वस्वरूप-स्वधर्म-स्वप्रकाशतायाः स्वरूपेण स्वबुद्धयैव वा भासमानत्वाविशेषात् नात्र स्वानुभवोपदेशस्य तद-विस्रंभस्य वा कश्चिदवकाशोऽस्ति । स्वेतरात्मतद्धर्म-स्वप्रकाशतायास्तु धीत्वादिलिङ्गतः स्वात्मस्वधर्मदृष्टान्तेनानुमानगम्यत्वं 'स्वयं ज्योतिरित्याद्या-गमगम्यत्वं वा संमन्यते स्वप्रकाशस्यापि कालभेदेन च परप्रकाश्यत्वमपि संभवतीति हि सुव्यक्तमाकरे ।

न च स्वस्मै स्वयमेव भाने कर्तृकर्मक्रियैक्यं विरुद्धमापद्यत इति वाच्यं, प्रत्यक्षे विषयस्यैव कारणत्ववत् स्वपरनिर्वाहकन्यायात् दर्शनानुरोधेन कर्तृकर्माद्यैक्योपगमेऽपि विरोधाभावात् अन्यत्रैव हि तस्य दोषत्वोपगमः ।

वस्तुतस्तु नह्यत्र स्वात्मानं प्रति कर्मकारकत्वं आश्रयत्वं वाऽभि-धीयते, किं तु स्वगोचरधीनिरपेक्षस्वकर्तृक-स्वव्यवहारानुगुण्यमेवेति न कस्यचिदपि दोषस्य प्रसक्तिरस्ति ।

एवं धर्मभूतज्ञानेन स्वप्रकाशोपगमेऽपि न कश्चिद्दोषः, न चान्यवे-द्यत्वात् घटादिवदचेतनत्वापत्तिरिति वाच्यं, अप्रयोजकत्वात् अन्यथा अन्यवे-द्यत्वाभावेऽपि शशशृङ्गवदसत्वापत्तेर्दुर्वारत्वात् । अतः स्वस्मै प्रकाशमानत्वं किं स्वत उत अन्येनेत्यादिना विकल्प तद्दूषणाडम्बरमाहोपुरुषिकानिबन्ध-मेव ।

एवं नैयायिकमत इवात्मनः ज्ञानाश्रयत्वेऽप्यचेतनत्वापत्तिश्च सौगतयोगाचारमत इव ज्ञानमात्रत्वे क्षणिकत्वापत्त्या तुल्ययोगक्षेमा । धर्म-भूतज्ञानं च स्वात्मानमनुभवतीति न केनचिदप्युच्यते तस्य पराक्त्वोपगमेना-नुभवितृत्वानभ्युपगमात् । अतस्तत्र सर्वानुभवविरोधोपपादनमनुक्तोपालम्भ-नमेव ।

## धर्मभूतज्ञानसंकोचेऽप्यार्हतमतव्यावृत्तिः

यदप्यभिहितं—धर्मिज्ञानस्य सविशेषस्यापि ज्ञानत्वात् सविषयक-त्वनियमे धर्मभूतज्ञानवैयर्थ्यं, इष्टापत्तौ धर्मिणो विषयैरसम्बन्धाद्विषयप्रका-शानुपपत्तिः । संकोचविकासादिकल्पने देहपरिमाणात्मवाद्यार्हतत्वापत्तिः, आत्मानित्यत्वापत्तिश्च, अयं च न्यायो धर्मभूतज्ञानेऽपि समान इति ।

तदपि न साधीयः—धर्मिणस्स्वेतरविषयावगाहित्वे मानाभावात् । न च ज्ञानत्वमेव तत्र मानं, स्वप्रकाशतयाऽपि तत्रोपपद्यमानस्य ज्ञानत्वस्य तदप्रयोजकत्वात्, धर्मिणः कादाचित्कविप्रकृष्टविषयसंबन्धानर्हत्वाच्च । नापि विषयप्रकाशान्यथाऽनुपपत्त्या धर्मभूतज्ञानं कल्पयामः, श्रुत्यादिप्रमाण-शतबलेनैव तदभ्युपगमात् । श्रुत्यादीनि प्रमाणानि च प्रागेव दर्शितानि । विषयावगाहिनः धर्मभूतज्ञानस्यैव स्वरूपतो नित्यस्यापि विकारिणः संकोचविकासावस्थाऽभ्युपगमो नत्वविकारिणः आत्मन इति नार्हतत्वाद्या-पत्त्यवकाश इति प्रागेव प्रपञ्चितम् । सविकारत्व-निर्विकारत्वादि विरुद्धधर्मयोरेकस्मिन्नसंभवाद्धि आर्हतमतं शारीरके निराकृतम् ।

न च तथा नित्यत्व-सविकारत्वयोरपि मिथो विरोधः, सत्कार्यवादे स्वरूपतो नित्यस्यापि मृदादेः घटाद्यनेकावस्थान्वयदर्शनेनाविरोधात् । अतो निर्विकारत्व-सविकारत्वाभ्यां धर्मिधर्मयोः विशेषे सत्यपि तदविवेकत एवायं न्यायो धर्मभूतज्ञानेऽपि समान इत्युक्तमिति यत्किञ्चिदेतत् ।

यत्पुनरुक्तं—एतेन स्वाश्रयतया प्रकाशमानत्वं स्वप्रकाशत्वमिति धर्मभूतज्ञानस्वप्रकाशत्ववादो व्याख्यात इत्यादि । तदसत्—तथा क्वचिदप्यनुक्तत्वात् तथोक्तेरसंबद्धत्वाच्च । स्वपदद्वयेनैकार्थग्रहणस्यात्रा संभवात्, विभिन्नार्थग्रहणे च वाक्यैकत्वभङ्गप्रसङ्गात् । आत्माश्रयतया धर्मभूतज्ञानप्रकाशे साक्ष्याश्रिततया प्रकाशमानशुक्तिरूप्यसुखादेरिव जडत्वा-पत्तिरित्युक्तमपि न युक्तम्—व्याप्तेरभावात् । दृष्टान्तस्य सुखादेरेव प्रकाशाव्यभिचरितसत्ताकत्वेन जडत्वासिद्धेः, न हि सुखादिकमुत्पन्नमपि क्षणमप्रकाशं तिष्ठति । शुक्तिरूप्यस्य सुखादिवत् साक्ष्याश्रितत्वे अहं सुखीतिवत् अहं रजतमिति प्रतीत्यापत्तिः । इदं रजतमिति हि प्रतीयते, इदमर्थश्च शुक्त्यादिरेव अतो न तस्यात्माऽऽश्रयतया प्रकाश इति व्यापक-व्याप्यविकलदृष्टान्तबलेन न कस्याप्यापत्तिः कर्तुं शक्यते । धर्मभूतज्ञानस्य स्वरूपतो नित्यत्वं-संकोच-विकासाद्यवस्थावत्वं, तथाप्यात्मविकारवाद्यार्हत-मतनिराकरणन्यायप्रवृत्त्यविषयत्वं च प्रथमत एव विशदमुपपादितम् ।

## धर्मसंकोचस्य धर्मिसंकोचनैरपेक्ष्यम्

यत्तु प्रदीपसंकोचविकासौ विना प्रभासंकोचविकासादर्शनात् धर्मभूतज्ञानसंकोचविकासयोरात्मसंकोचविकासाधीनताया उपगन्तव्यतया

धर्मभूतज्ञानवैयर्थ्यापत्त्या आर्हतमतमहागर्तनिपातेन च घट्टकुटयां प्रभातमिति। तत्तुच्छम्—देहलीदीपस्य संकोचं विनापि कवाटादिपिधानेन प्रभासंकोचदृष्टया धर्मसंकोचविकासयोर्धर्मिसंकोचविकासाविनाभावाभ्युपगमासंभवात्।

'पापं प्रज्ञां नाशयति क्रियमाणं पुनः पुनः' इत्यादिशास्त्रैकगम्यस्य तत्पुरुषीयकर्मज्ञानसंकोचादिहेतुहेतुमद्भावस्यासमानविषयेणान्यथासिद्धेन पामरलोकानुभवेन विरोधप्रसञ्जनस्य दोषधिया परित्यक्तपक्षस्य पुनः परिग्रहाभावेऽपि दावदहनविवश जरदजगरभ्रमणादिन्यायप्रतिकीर्तनस्य च परिहास्यत्वाच्च।

धर्मभूतज्ञानस्वीकारफलं प्रति न वयं प्रष्टव्याः, श्रुत्यादिप्रमाणशतानुरोधादेव हि तदभ्युपगच्छाम इत्युच्यते न तु वैशेषिकादिपरकीय प्रक्रियामवलम्ब्य तत्कल्पयाम इति। न च प्रमाणबलात् सिद्धमर्थं प्रयोजनाभावात् नेति वक्तुं प्रभवामः अतो न वयमेवंप्रष्टव्याः अपि तु प्रमाणमन्तरेणैव सांख्यादिपरप्रक्रियानुसारेणान्तःकरणवृत्तिज्ञानकल्पका भवन्त एव तदङ्गीकारप्रयोजनं प्रति प्रष्टव्या भवितुमर्हन्ति। भवदभिमतसाक्षिणैव इन्द्रियादिप्रमाणसहकृतेन सुखादीनामिव सर्वेषामपि भानोपपत्तौ किमप्रामाणिकान्तःकरणवृत्ति, तज्ज्ञानत्वादिकल्पनानैपुण्यभिक्षणशिक्षणैकफलकेन साङ्ख्यादिपरकीयकपोलजलकणिकास्वादेनेति कृतं प्रकृतानुपयुक्तासम्बद्धदुष्प्रसङ्गप्रलापानां प्रतिविधानेन। निर्विशेषस्वप्रकाशत्वं हि प्रकृतं, तत्र किमेतावता साधकमुपदर्शितं न किंचिदपि।

## निर्विशेषे प्रमाणाभावोपपादनम्

अथ च प्रमाणं चात्र निर्विशेषवाक्यानीत्युच्यते। ततश्च निर्विशेषतायास्स्वप्रकाशत्वं स्वानुभवसिद्धं नास्त्येवेति हि अनुमतं भवति। तत्रैव हि प्राथमिको विवादः। निर्विशेषवाक्यानि च न कृत्स्नविशेषनिषेधपराणीति उपपादयिष्यते। अवेद्यतयाऽभ्युपगतस्य निर्विशेषस्य निर्विशेषवाक्यप्रमाणकत्वं च भवन्मतेऽपि न वक्तुं शक्यं, उपहितस्यैव वृत्तिव्याप्यत्वमपीति मते शुद्धस्य निर्विशेषस्य वृत्तिव्याप्यत्वस्यापि दुर्वचत्वात् वृत्तिनाशे तु शुद्धं स्वत एव प्रकाशते न तत्र प्रमाणव्यापारः कोऽपीति खलु भवद्भि-

रप्युच्यते तेन निर्विशेषे न किंचित् प्रमाणमित्यवशादुक्तं भवति ।

निर्विशेषस्य स्वप्रकाशत्वमपि न संभवति तेन सविशेषत्वापत्तेः । न च प्रकाशपदेन चिन्मात्रमुच्यते, तत्त्वं च तत्स्वरूपमेवेति न सविशेषत्वप्रसङ्ग इति वाच्यं, घटादेश्चिन्मात्रतदाश्रयत्वयोरभावेन घटः प्रकाशत इत्यादिव्यवहारानुपपत्तेः । अतो व्यवहारानुगुण्यमेव प्रकाशपदार्थ इत्युक्तम् । तच्च संविदतिरिक्तमभ्युपगम्यमानं तदाश्रयस्य निर्विशेषत्वं व्याहन्यादेव । किं च निर्विशेषस्य प्रकाशरूपत्वमपि न संभवति । प्रतिसंबन्धिविषयविशेषनिरूपणीयत्वात् प्रकाशस्य । यच्च—न च संबन्ध्यन्वेषणं नियतं, न ह्यादित्यं दृष्ट्वा कस्यायमादित्य इति संबन्ध्यन्वेषणेति हि शबरस्वामीति । तच्च न चारु । आदित्यस्य सर्वसाधारणत्वेन संबन्ध्यनपेक्षत्वेऽपि ससंबन्धिकार्थस्य संबन्ध्याकाङ्क्षानियमात् । न हि पिता माता गुरुरित्यादौ कस्येति संबन्ध्याकाङ्क्षाऽनियतेति वक्तुं शक्यते । तद्वत् प्रकाश इत्युक्तेऽपि तदाकाङ्क्षानियमो दुरपह्नव एव । उदाहृतशबरवाक्यं तु पूर्वपक्षानुवादस्थतया न प्रमाणकोटिमाटीकते । नहि तत्र शबरस्वामिनस्तात्पर्यम् । अतएव सिद्धान्तवर्णनावसाने "तस्मादस्ति सुखाद्यतिरिक्तस्तदाश्रयो नित्यः पुरुष" इत्युपसंहृतम् । तत्रादिपदेन पूर्वप्रस्तुतज्ञानेच्छादय एव विवक्षिता इति स्फुटमेव । यद्यपि न शाबरोक्तं कात्स्न्र्येनोपादेयमेवेत्यभ्युपैमः, अथापि प्रकृते भवदुपात्तं तद्वाक्यं न भवदनुकूलमिति प्रतिपादितम् । 'नेति नेति इति वाक्यं च न निर्विशेषस्य साधकं प्रक्षालनाद्धीति न्यायेन नञस्तत्र प्रतियोगिसंकोचेन पूर्वापरवाक्योपात्तव्यतिरिक्तमात्रनिषेधपरताया भाषितत्वात् । अन्यथा संविन्मात्रस्यापि निषेधापत्त्या शून्यवादस्यैव श्रौतत्वप्रसङ्ग इति प्रागेवोपपादितम् । अधिकं तत्रैव द्रष्टव्यम् ।

## सविशेषवाक्यप्राबल्यनिरूपणम्

सविशेषवाक्यानां निर्विशेषवाक्यानुरोधेन नयनं युक्तमिति यदुक्तं-तन्न युक्तम्—तथासति सविशेषवाक्यानामप्रामाण्यनयन एव पर्यवसानात् । स्वाध्यायविध्यध्यापितत्वादुभयविधानामपि वाक्यानां समानं प्रामाण्यं हि निर्वोढव्यं । विध्यनुरोधेन निषेधनयने ह्युभयोरपि प्रामाण्यमुपपद्येत । निर्व्यूढं च तथा न हिंस्यादित्यादौ नीतिविद्भिः । विशेषविषयो विधिः

निरवकाशत्वात् प्रबलः, सामान्यविषयो निषेधस्तु विहितव्यतिरिक्तविषयला भेन सावकाशत्वात् दुर्बलः । अतो न सामान्यगोचरं शास्त्रं विशेषविषय-शास्त्रबाधायावकल्पते । नापि विकल्पः, वस्तुनि विकल्पायोगात्, सति गत्यन्तरे विकल्पस्यान्याय्यत्वाच्च । सामान्यशास्त्रस्य विहितविशेषविषयत्वं सन्दिग्धं, विशेषविधेश्च विशेषविषयत्वं निश्चितम् । अतोऽपि सामान्यशास्त्रस्य विहितविशेषव्यतिरिक्तविषयकत्वमेव न्याय्यं न तु विशेषविधिबाध-विकल्पादि । तदुक्तं प्रथमकाण्डे 'अविशेषेण यच्छास्त्रमन्याय्यत्वाद्वि-कल्पस्य तत्संदिग्धमाराद्विशेषशिष्टं स्यादिति । एतेनैकेनापि हि दीपेनान्धकार सहस्रनाशदर्शनेन सविशेषवाक्यानां प्रचुरत्वं न प्राबल्यप्रयोजकं किं तु आनर्थक्यप्रतिहतन्यायेन दौर्बल्यस्यैव प्रयोजकमित्युक्तमपि प्रत्युक्तम् । सामान्यगोचरवाक्यस्य विशेषवाक्यमेकं प्रत्यपि बाधितुमशक्तेर्निरूपितत्वेन दीपदृष्टान्तानर्हत्वात् । विशेषविहितव्यतिरिक्तविषयत्वेन सामान्यगोचरशा-स्त्रस्य सार्थक्यसंभवेन आनर्थक्यप्रतिहतिन्यायस्यात्र प्रवृत्त्यभावाच्च । अतो निर्विशेषवाक्यावलम्बनान्न निर्विशेषवादिनां समीहितसिद्धिः स्यात्, अत एव सर्वप्रमाणानां सविशेषैकविषयत्वेऽपि सुषुप्त्यादिकालीनस्वानुभवमहिम्नैव निर्विशेषसिद्धिरिति मन्यमानाः जरन्मायावादिनस्स्वशिष्यगोष्ठ्यां समघो-षयन् । तदभिप्रायेणैव प्रवृत्तं यदिह पूर्वमुदाहृतं, यस्तु स्वानुभवसिद्ध इति स्वगोष्ठीनिष्ठस्समय इति श्रीभाष्यवाक्यम् । तटस्थपरीक्षकसन्निधौ वक्तुमयोग्य इति भावः । तदानीमपि सविशेष एवानुभूयत इति हि श्रीभाष्ये विशदमुप-पादितम् । स्वत एव प्रमाणानि परित्यक्तानि, परिगृहीतस्वानुभवश्चास्य विपरीत एव वर्तत इत्युक्तं । उक्तस्वानुभवावलम्बिनमभिप्रेत्यैव शतदूषण्यां प्रमाणपोतं परित्यज्य स्वप्रकाशालाबुपरिग्रहेणापारसागरं निस्तर्तुमिच्छतो भवत इति वाक्यमवतीर्णम् । प्रथमतः प्रमाणपोतं परित्यज्य गतस्य निर्विशेष-वादिनः स्वपरिगृहीतालाबुनिपातानन्तरं पुनः प्रमाणपोतमारोढुमवकाश एव न स्यात्, प्रायशो बलादारोहणे पोतात्पात एव नूनं संपद्येत । कथंचित् तदनुधावने च स पोतस्स्वोद्दिष्टं सविशेषमेव पारं गमयेत् न भवदभिमतं निर्विशेषम् । अन्ततस्तमवलोक्य निवर्तने सागरएवापारे निमज्जनमवर्ज-नीयमापद्येतेति भावः । अतो न प्रमाणपोतपातोऽद्वैतमत इति नास्यानुरूपं समाधानं स्यात् ।

## ज्ञानस्वरूपस्य धर्मिणः, धर्मभूतज्ञानस्य च सविशेषविषयकत्वमेव

लोकानुभवश्च धर्मे धर्मिणि च सविशेषतामेवावगाहते इत्युक्तमाकरे। तत्र धर्मिवद्धर्मोऽपि स्वयंप्रकाशतया ज्ञानरूप एवेति जानाति, 'विज्ञातार मरे केने' त्यादिलोकवेदप्रयोगस्वारस्यसमधिगतः न तु वृत्तिरूपः, तदवच्छिन्नरूपो वा मानाभावादित्युक्तप्रायम्। अतो धर्मवत् धर्म्यपि स्वयंप्रकाशत्व नित्यत्वादिना सविशेष एव। न च प्रमाणाभावेऽपि स्वरूपत-स्संविदैक्यात् एकस्यानेकविषयत्वबाधात् संविन्निर्विशेषताऽर्थसिद्धेत्युक्तं युक्तम्। संविदैक्यस्य निरसिष्यमाणत्वात् एकस्यानेकविषयकत्वानुपगमे संशय समूहालम्बनत्वादिप्रामाणिक व्यवहारनिर्वाहस्यापि दुर्घटत्वापाताच्च। ज्ञानत्व सविषयकत्वे समव्याप्ते। अतो ज्ञानत्वं विना सविषयकत्वस्य, सविषयकत्वं विना ज्ञानत्वस्य वा न क्वचित् संभवः। धर्मिसंविदां स्वस्व-मात्रविषयकत्वं, धर्मभूतानां तु स्वस्वेतरसर्वविषयीकरणयोग्यत्वं च व्यवस्थितं प्रमाणबलादभ्युपगम्यते। विषयविषयिभावश्च तादात्म्यादिवद भेदेऽप्युपपद्यमानस्संबन्धविशेष इति पूर्वमेवाभिहितं विस्तरेण। अतो धर्मिसंविदां स्वविषयकत्वे विरोधस्य सविषयकत्वे धर्मभूतज्ञानवैयर्थ्यप्रसङ्गस्य च न कथंचिदवकाशस्स्यात्। धर्मभूतज्ञानस्य ज्ञानत्वं प्रमाणेषु प्रमितं स्वयंप्रकाशत्वनिबन्धनं मुख्यमेव, न त्वन्मतेऽन्तःकरणवृत्तेरिवाप्रामाणि-कमौपचारिकं पारिभाषिकं वेत्यसकृदुक्तम्। तथा तस्य नित्यत्वं संकोचादि-विकारश्च प्रमाणबलादभ्युपगम्यते।

न चात्र 'एवं चात्माऽकार्त्स्न्य'मिति न्यायविरोधः। तस्य न्यायस्य निर्विकारत्वेन श्रुत आत्मनि विकारस्वीकारविषयत्वात् प्रभादिवत् सविकार-तया प्रमाणतः संप्रतिपन्ने धर्मभूतज्ञाने प्रसक्त्यभाव इत्यपि हि बहुशः प्रति पादितम्। तथोभयविधानामपि संविदां स्वरूपत एव भेदेन संविदन्तर प्रकाश्यत्वसंभवेऽपि स्वतोऽपि प्रकाशात् न तावदन्यानधीनप्रकाशरूपस्व-प्रकाशत्वस्य भङ्गः। कदाचित् स्वात्मनः स्वतोऽपि प्रकाशते, अन्यदा अन्यस्य वा परतोऽपीति ह्युपगम्यते। तत्र स्वतो वा परतो वा जायमान स्सर्वोऽपि प्रकाशस्सविशेषस्यैव, न तु निर्विशेषस्येत्युच्यते। निर्विशेषानु-भवसद्भावे हि तेन तद्बाधे व्याघातो नाम। सर्वेषामपि सविशेषानुभवत्वे,

भवति इत्यकामेनापि निर्विकल्पकं ज्ञानमूरीकर्तव्यमिति । तदपि न । स्वरूपग्रहणस्य भिन्नसामग्रीगम्यविशेषणगोचरतानभ्युपगमेऽपि समानसामग्रीगम्यविशेषणावगाहित्वाभ्युपगमेन स्वरूपमात्रग्रहणासिद्धेः । सुरभि चन्दनमिति विशिष्टग्रहणे तु स्वरूपग्रहे चाक्षुषयोग्यसन्निकृष्ट चन्दनगतजातिरूपादिरपि गृह्यते, न तु चन्दनमात्रम् । अतस्तदपि सविकल्पमेव तादृशस्थल एव हि लौकिकालौकिकसामग्रीद्वयापेक्षणात् भिन्नसामग्रीवेद्यता, न तु निर्विशेषसविशेषयोरपि । निर्विशेषवेद्यत्वस्यैवानभ्युपगमेन भिन्नसामग्रीवेद्यत्वस्य प्रसक्त्यभावात् ।

### वाक्यात् निर्विशेष-निर्विकल्पप्रत्यक्षासंभवः

न च सत्यकामादिवाक्यैस्सविशेषज्ञानोत्पादनेऽपि तत्त्वमस्यादिभिरस्थूलत्वादिवाक्यैश्च निर्विशेषविषयकनिर्विकल्पकप्रत्यक्षाङ्गीकारे बाधकाभाव इत्युक्तं युक्तम् । तत्त्वमसीत्यादौ तच्छब्दादिना पूर्वप्रक्रान्तकारणत्वसर्वज्ञत्वाद्यनेकविशेषविशिष्टबोधनस्य अस्थूलमित्यादितः अस्थूलत्वादिविशेषविशिष्टबोधनस्य च निर्विशेषभाने बाधकत्वेन वेदान्तेषु भवदभिमतनिर्विशेषबोधकवाक्यस्यैवाभावात् । अस्थूलत्वादयश्चाभावरूपा विशेषा एव । तदुक्तमक्षरध्यधिकरणभामत्यामपि 'आनन्दादयः प्रधानस्येत्यत्रायमर्थो यद्यपि भावरूपेषु विशेषणेषु सिद्धः । तन्न्यायतया च निषेधरूपेष्वपि सिद्ध एव । तथापि तस्यैवैष प्रपञ्चोऽवगन्तव्य' इति । भाष्ये च 'तत्र विधिरूपाणि विशेषणानि चिन्तितानि, इह प्रतिषेधरूपाणीति विशेष' इति । न च तेषां धर्मिस्वरूपानतिरेकान्न निर्विशेषत्वविरोध इति वाच्यम् । अनतिरेके सर्वत्र ब्रह्मविद्यासु प्राप्तिर्व्यवस्था वेति संशयानवकाशेन तदधिकरणानुत्थानात् । तत्रैवैतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत'' इत्यादिनाऽभिहितानां सर्वप्रशासित्राकारादिभावरूपविशेषाणां निर्विशेषद्वेषैकपरिपोषितान्यभावव्यावर्तकवेषाणां निर्विशेषकथोन्मेषनिर्मूलनमन्तरेण क्षणमप्यवस्थातुमक्षमत्वात् वाक्यात्तदर्थापरोक्षसामान्यस्य पूर्वं प्रतिक्षिप्तत्वेन तदवान्तरभेदस्य निर्विकल्पस्य वाक्याधीनत्वशङ्काया अवकाशाभावात्, तत्र पदजन्यायाः प्रवृत्तिनिमित्तप्रकारेण पदार्थोपस्थितेरेव स्वरूपग्रहणात्मकत्वेन विशिष्टबुद्धिहेतुत्वसंभवे अपरामृश्यमाननिर्विकल्पकस्वीकारे पूर्वोक्तानुमानप्रयोजनाभावाच्च । न च

वाक्येनापि विशेषणतात्पर्यविरहात्स्वरूपमात्रज्ञानं निर्विकल्पकं स्वीकर्तव्य-मिति सांप्रतम् । प्रथमाक्षसन्निपातजन्यज्ञान एव प्रमाणविदां निर्विकल्पक-व्यवहारेण वाक्यजन्ये तदप्रसिद्धेः । विशेषणाविवक्षायां विशिष्टबोधकवाक्य-प्रयोगनैरर्थक्यस्य दुर्वारत्वात् । अतो वाक्यान्निर्विशेषनिर्विकल्पकसाधनं तुरङ्गमोत्तमाङ्गे शृङ्गप्रदर्शननिर्विशेषमेवेत्युक्तमप्रकम्प्यमेव ।

## योगशास्त्रेऽपि निर्विकल्पस्य सविशेषावगाहित्वाविरोधः

यच्च योगशास्त्रे निर्विकल्पकसमाधावात्मस्वरूपमात्रभानं आत्मै-काकारतया तिरस्कृतनानात्मदृष्टिं विदधीतेत्यादौ निर्धारितमिति, सविशेष-त्वेऽपि तन्मतदृष्ट्याऽऽत्मनस्तद्धर्माणामनात्मनां च भानमसंप्रज्ञातसमाधौ न भवितुमर्हतीति व्यवस्थापितमितीदं निर्विशेषविषयं निर्विकल्पकं साधयत्ये-वेति । तच्चातिस्थवीयः । आत्मस्वरूपमात्रभानमित्यत्र मात्रशब्देन हि नात्मधर्मव्यवच्छेदः । किन्तु ध्यानस्वरूपस्फुरणस्यैव व्यवच्छेदात् । तथा च शतदूषण्यामेव दर्शितम्—अर्थमात्रावभासस्य स्वरूपं शून्यमिवेत्यस्य निर्विशेष-ग्रहणपरत्वाभावात् ध्यानमेव हि यथावस्थितध्येयार्थवैशद्यातिशयात् तन्निगीर्णस्वरूपमिव भवतीति तत्रोपदिश्यत इति ।

## असंप्रज्ञातसमाधिस्वरूपम्

एतेन स्वच्छस्फटिकः कुसुमरूपेणेवात्यन्तविशदध्यानमेवार्थस्वरूपेण भासमानमसंप्रज्ञातसमाधिरित्युक्तं भवति । तत्र स्वरूपं शून्यमिवेति हि मात्रशब्दार्थविवरणं—ध्यानस्वरूपज्ञानशून्यमित्यर्थः । इवशब्देन ध्यान-स्वरूपस्य सत्ताद्योतनात् । तथोक्तं भगवता पराशरेण तस्यैव कल्पनाहीनं स्वरूपग्रहणं हि यत् मनसा ध्याननिष्पाद्यं समाधिस्सोऽभिधीयत इति । ध्येयाद्ध्यानस्य भेदः कल्पना—तद्धीनमित्यर्थः । संप्रज्ञातस्थितौ ध्येया-कारा वृत्तिरपि पृथक् भासते । अतस्स समाधिस्संप्रज्ञात इत्युच्यते । तस्या अपि निरोधे असंप्रज्ञातसमाधिः ध्येयाद्ध्यानस्य भेदेनाप्रज्ञातत्वात् । तथा च सूत्रं-तस्यापि निरोधे सर्ववृत्तिनिरोधात् निर्बीजस्समाधिरिति । तस्यापि निरोध इत्यस्य तस्य समाधिप्रज्ञासंस्कारस्य, अपिशब्दात्प्रज्ञायाश्च निरोधे सतीति वृत्तिः । तथा चात्मस्वरूपमात्रभानमर्थस्वरूपमात्रावभास इत्यादौ

ध्येयतदीयाकारव्यतिरिक्तसकलवृत्तिस्फुरणव्यवच्छेदेन सविशेषध्यानस्यैवा-संप्रज्ञातसमाधित्वमुच्यते । अत एव विविधः कल्पः विकल्पः वृत्तिस्फुरण-भेदः, निर्गतो विकल्पान्निर्विकल्प इत्यप्युच्यते, ध्येयगतविशेषस्यापि भावा-नुपगमे त्वविशदध्यानमेव समाधिरित्युक्तं स्यात् । एतावताऽत्यन्तविशद-ध्येयाकारेणैव ध्यानस्य भानमेवासंप्रज्ञातसमाधिः निर्विकल्पसमाधिरिति च योगशास्त्रे प्रसिद्धमित्युक्तं भवति । तथा चाशास्यते महाभागवतोत्तमैः

"अधराहितचारुवंशनाला मकुटालंबिमयूरपिञ्छमालाः ।

हरिनीलशिलाविभङ्गनीलाः प्रतिभास्सन्तु ममान्तिमप्रयाणे" ।। इति । तस्माद्योगशास्त्रेऽपि निर्विशेषनिर्विकल्पकसाधनमाशामोदकमेव ।

## प्रह्लाद वामदेवादीनां सविशेषानुसन्धानम्

एतेन प्रह्लादवामदेवादीनां संविन्मात्रस्वरूपानुसन्धानमेवेत्युक्तमपि प्रत्युक्तम्

"सत्त्वासक्तमतिः कृष्णे हृदयेनोद्वहन् हरिम् ।
हृदयेन महात्मानं दधार धरणीधरम् ।।"

"योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशश्शुभाशुभम् ।
तं सर्वसाक्षिणं विष्णुं नमस्ये परमेश्वरम् ।।"

"सर्वगत्वादनन्तस्य स एवाहमवस्थितः ।
मत्तस्सर्वमहं सर्वं मयि सर्वं सनातने ।।" इत्यादौ

प्रह्लादस्य सविशेषानुसन्धाननिष्ठतया भगवता पराशरेण प्रख्यापितत्वात् । अहं मनुरभवं सूर्यश्च इत्यादिवामदेवानुसन्धानस्यापि संविन्मात्रविषयत्वा-योगाच्च । न हि संविन्मात्रे मनुत्वसूर्यत्वाहन्त्वादिकमनुसन्धातुं शक्यते, व्याघातात् । न च शरीरिणश्शरीरतादात्म्यानुसन्धानदर्शनेऽपि शरीरस्य शरीरितादात्म्यानुसन्धानस्य क्वचिदप्यदर्शनात् स एवाहं मनुरित्यादि-सामानाधिकरण्यं दुर्घटमिति वाच्यम् । अभ्रान्तानां शरीरतादात्म्यानुसन्धा-नायोगेन ब्राह्मणोऽहमित्यादौ ब्राह्मणशरीरकत्वानुसन्धानवदहमर्थशरीरकत्वेन परमात्मानुसन्धानोपगमेन सामानाधिकरण्यस्य मुख्यत्वे विरोधाभावात् । तथैव तत्त्वमसीत्यादावपीति व्यक्तमन्यत्र । अतः प्रकारविशेषानवगाहिनः

ज्ञानस्य क्वचिदप्यसिद्ध्या न निर्विशेषमवगाहमानं निर्विकल्पकं नाम किंचिदस्ति ।

## इच्छामात्रात् प्रत्यक्षनिरोधायोगः, अद्वैत्यभिमत निर्विकल्पात् नैयायिकाभिमतस्य निर्विकल्पस्य भेदः, निर्विकल्पस्य निष्प्रकारत्वनिरासश्च

यत्तु संस्थानप्रतीतिर्मा भवत्वितीच्छामात्रादिन्द्रियसन्निकर्षेणापि शब्दाजन्यमपि स्वरूपमात्रविषयकं निर्विकल्पमनपोहमिति । तद्दुर्निर्वहम् । प्रमाणतन्त्रस्य प्रत्यक्षज्ञानस्य पुरुषतन्त्रत्वाभावादिच्छामात्रेण निरोधायोगात् । अन्यथा जपादिकाले श्वशूकरादिदृष्ट्यभावमिच्छतः प्रसारितचक्षुषोऽपि पुरस्थितश्वशूकराद्यदर्शनप्रसङ्गात् । न चेष्टापत्तिः, सर्वानुभवविरोधात् । न च निर्विकल्पकस्वरूपमद्वैतिनामभिमतं नैयायिकैरप्यनुमन्यते, तैर्जात्यादिविशेषणानामपि तत्र भानाभ्युपगमादित्युक्तम् । मिथो वैशिष्ट्यभानमात्रं खलु तत्र नाभ्युपेयते, प्रकारभानेऽपि प्रकारताख्यविषयतानभ्युपगमात् । निष्प्रकारत्वं तस्यानुकीर्त्यते, तुरीयविषयता हि तत्रेष्यते । अन्यथा विशेषणज्ञानासिद्ध्याऽतीन्द्रियनिर्विकल्पकाभ्युपगमः निरर्थक एव स्यात् । न ह्यगृहीतविशेषणा विशिष्टबुद्धिरुपपद्यत इति हि तदभ्युपगम्यते । अतो नैयायिकाभिमतं निर्विकल्पमन्यदेव । न त्वद्वैताभिमतनिर्विशेषग्रहणरूपमिति प्रसिद्धमेव । तत्रापि तदप्यसारमिति शतदूषण्यामेव विशदमुपपादितम् । इन्द्रियसन्निकर्षाविशेषे सति योग्येषु कस्यचिदेव भानमिति कल्पने मानाभाव इति भावः । न च स्वप्रकाशसिद्धं तदिति वाच्यम् । निर्विशेषस्य स्वप्रकाशानुभवसिद्धत्वं न वक्तुं शक्यमिति पूर्वमेव निरूपितत्वात् । तन्निर्विकल्पकस्वप्रकाशतायाश्च तत्काले तदुत्तरकाले वा परामर्शाभावेनासिद्धेरित्युक्तत्वाच्च । न च स्वतस्सिद्धश्च स्वसिद्ध्यर्थं न परामर्शमपेक्षत इत्युक्तं युक्तम् । परामर्शाभावे मानाभावेन तदसिद्धेः । प्रत्युत असतिबाधके परामर्शाभावस्य पूर्वानुभवविरहस्यैव गमकत्वाच्च । अन्यथा शशविषाणग्रहणमपि स्वप्रकाशसिद्धमिति धृष्टोक्तेरनिस्तारादिति ह्युक्तम् । न च श्रुतिगम्यत्वतदभावाभ्यामुभयोर्विशेष इति वाच्यम् । भवदभिमतनिर्विशेषस्य तन्निर्विकल्पकस्य तत्स्वप्रकाशत्वस्य वा गमकस्य श्रुत्यक्षरस्य

क्वचिदप्यनुपलब्ध्या विशेषाभावात् । अतः परामर्शाभावे निर्विशेषनिर्विकल्पकस्वप्रकाशत्वं दुरुपपादमेव । अतो न निष्प्रकारकं ज्ञानं निर्विकल्पकम् । अत एव इदमित्थमिति हि सर्वा प्रतीतिरुपजायत इति श्रीभाष्यम् । न चात्र श्रुतिविरोधादिति प्रतारणमपि दूषणं भवति । कुतश्चिदपि वैदिकमुखात्तादृशविरुद्धश्रुतेरश्रवणात् । नापि सविशेषविषयत्वादुक्तनियमस्येति सङ्कोचस्समुचितः । कुतश्चिन्निर्विशेषसिद्धावेव तदावश्यकत्वात् । निर्विशेषन्तु न कुतश्चिदपि सिद्ध्यतीत्यसकृदुक्तम् । अतः प्रथमाक्षसन्निपातानन्तरोत्पन्नमपि सप्रकारकं सविशेषज्ञानमेव। तस्य निर्विकल्पकत्वव्यवहारस्तु परिमितधने अधिकधनाभावविवक्षया निस्स्वव्यवहारवत्, प्रकारीभूतजात्यादेः द्वितीयादिज्ञानभास्यानुवृत्तत्वाद्यभानविवक्षया विशेषाभावविवक्षानिबन्धनः। अत एव न सप्रकारकेऽपि निर्विकल्पकत्वं मम माता वन्ध्येतिवद्व्याहतम् । तत्र प्रथमग्रहणमित्युदाहरणप्रदर्शनमात्रपरम् । न लक्षणपरम् । तेन द्वितीयादिग्रहणे क्वचिदनुवृत्त्यभानेन निर्विकल्पत्वेऽपि न विरोधः। तत्रापि प्राथम्यं ग्रहणे विशेषणं न तु गृह्यमाणे । अतः परमात्मन एकस्य एकजातीयानेकत्वाभावात्तद्ग्रहणं सविकल्पकनिर्विकल्पकातीतं तृतीयप्रकारमेव स्यादित्युक्तस्य नावकाशः । लक्षणन्तु संस्कारनिरपेक्षेन्द्रियजन्यं ज्ञानं निर्विकल्पकं, संस्कारसापेक्षेन्द्रियजन्यन्तत्सविकल्पकमित्येव । न चास्य शब्दजन्यनिर्विकल्पकेऽतिव्याप्तिः । प्रमाणाभावेन तस्यानभ्युपगमात् । न च तात्पर्यानुसारिणा शब्देनैव तत्संभवः । सर्वेषामपि शब्दानां सविशेषबोधन एव तात्पर्यस्य निरूपितत्वात् । शाब्दापरोक्षस्य निरस्तत्वेन शब्दनिर्विकल्पस्याप्रसक्तेश्च ।

**सविकल्पस्य भ्रमत्वनिरासः, वाचारम्भणश्रुत्या घटादेर्न मिथ्यात्वम् च**

यदुक्तं इदं रजतमित्यादौ इदं ज्ञानमिव धर्माविषयकत्वात् सन्निति ज्ञानमेव निर्विकल्पकं प्रमेति । तदयुक्तं, दृष्टान्ते दार्ष्टान्तिके च इदन्तायास्सत्ताया वा प्रकारतावश्यंभावेन धर्माविषयकत्वस्य निर्विकल्पकत्वस्य चानभ्युपगमात् । न च विकल्पो नाम भ्रमज्ञानविषय एवेत्युक्तं युक्तम् । प्रामाणिकेऽपि विविधविरुद्धकल्पभेदे वैदिकैः बहुशस्तत्पदप्रयोगस्य दर्शनात् । विकल्पोऽवस्तुनिर्भासादसंवादादुपप्लव इति बाह्योक्तमसिद्धहेतुकं

प्रलोभनमात्रमेवेति सुयुक्तम्। अयं घट इत्यादेरबाधात् भ्रान्तिरूपत्वासिद्धेश्च। न च "वाचाऽऽरम्भणमिति श्रुत्यवलंबेन घटादेर्मिथ्यात्वं भ्रमविषयत्वं वा वक्तुं शक्यम्। तत्र मृत्तिकैव सत्यमित्यनुक्त्वा मृत्तिकेत्येव सत्यमित्युक्त्या घटादिकार्याणां कारणीभूतमृद्द्रव्यैक्यप्रत्यभिज्ञाप्रमाविषयताया एवेतिकरणस्वारस्यसिद्धत्वात्। प्रतिज्ञातस्य कारणविज्ञानेन कार्यविज्ञानस्य उपपादनार्थमत्र कार्यकारणयोरेकद्रव्यतायां प्रमाणस्यैव वक्तव्यत्वाच्च। न हि कार्यमिथ्यात्वेन तदुपपादयितुं शक्यम्। सत्यवस्तुज्ञानेन तद्भिन्नस्य मिथ्याभूतस्य ज्ञानायोगात्। अधिकमन्यत्र। अतस्सन् घट इति प्रमात्मकं विशिष्टज्ञानमेव। न तु ज्ञानद्वयम्। तत्र घटांशे सत्त्वमेव प्रकारतया भासते, न तु संदशे घटः। घटोऽस्ति घटोऽनुभूयत इत्यादावप्येवमेव। तथा च घटस्य धर्मितयापि नारोप्यतया मिथ्यात्वं, न वा सन्निति सन्मात्रोल्लेखेन तद्ग्रहणस्य निर्विशेषनिर्विकल्पकत्वं (वा)?। किन्तु सत्त्वादि धर्मविशेषविशिष्टघटाद्यवगाहितया सविशेषसविकल्पकत्वमेव। श्रीभाष्यकृतां मते संस्कारसापेक्षेन्द्रियजन्यज्ञानत्वस्यैव सविकल्पकलक्षणतयाऽभिमतत्वात् द्वितीयादिग्रहणेऽपि कदाचिदनुवृत्त्यभानेऽपि न क्षतिरिति च प्रागेवोक्तम्।

### प्रत्यभिज्ञा सविकल्पभेदः

ग्रहणात्मिकैव प्रत्यभिज्ञेति पक्षेऽपि प्रत्यभिज्ञा सविकल्पकरूपैव न तु प्रत्यभिज्ञैव सविकल्पकः; अभिज्ञात्मकस्यापि तस्य सत्त्वात् संस्कारसहकृतेन्द्रियजन्यज्ञानत्वाविशेषेऽपि देशकालद्वयसंबन्धादिना अर्थैक्यावगाहित्वं प्रत्यभिज्ञाया अभिज्ञात्मकसविकल्पकाद्विशेषः। अतः अभिज्ञासामान्यं-निर्विकल्पकमित्यापादनमापातत एव। प्रत्यक्षानुमानादिसर्वानुभवान्तर्भावपक्षे तु सुतराम्। अनुमित्यादौ निर्विकल्पकभेदानभ्युपगमेन निर्विकल्पकानात्मकाभिज्ञाभ्युपगमावश्यंभावात्। तथा च प्रथमद्वितीयग्रहणत्वादिमात्रेण निर्विकल्पकसविकल्पकव्यवस्थाऽनभ्युपगमादेव निर्विकल्पकाभिज्ञयोस्सविकल्पकप्रत्यभिज्ञयोश्च नैक्यप्रसङ्गावकाशः।

### प्रत्यक्षविशेषाणां वेदान्तैरबाध्यत्वम्

यत्तु प्रथमपिण्डग्रहणं वस्तुतस्सविशेषमपि विशेषाग्रहणेन गृह्णातीत्यनेन किं विवक्षितमिति। तन्न। तथाऽस्माभिः क्वचिदप्यनुक्तत्वात्।

विशेषमपि गृह्णाति इति ह्युच्यते। विशेषग्रहणेऽपि तस्य पारमार्थिकत्वाभावान्न निर्विशेषप्रामाण्यविरोधः। अन्यथा धूमत्वेन बाष्पग्रहणविषयधूमत्वस्यापि पारमार्थिकत्वापत्तेरिति शङ्कायाश्च नावकाशः। बाधतदभावाभ्यां विशेषात्। बाष्पग्रहेण धूमग्रहबाधवदिह विशेषग्रहे बाधाभावात्। आरोप्यविशेषावगाहित्वोपगमेऽपि निर्विकल्पकस्य निर्विशेषे शुक्तितत्त्व इव रजताध्यासस्य प्रामाण्योक्तेरुपहास्यत्वाच्च। न च प्रथमगृहीतविशेषस्यानुवृत्त्यवगाहिना द्वितीयग्रहणेन बाधाभावेऽपि तृतीयग्रहणेन बाधसंभवान्निर्विशेषपर्यवसानमिति युक्तं व्यवसातुम्। द्वितीयापेक्षया तृतीयग्रहणे अधिकानुवृत्त्यंशस्यैव भानेन बाधायोगात्। न च नेति नेतीत्यादिना वेदान्तवाक्येनैव तद्बाध इति वाच्यम्। वाक्येन निर्दुष्टप्रत्यक्षबाधायोगात्। अन्यथा यूपादित्यवाक्येन तद्भेदप्रत्यक्षस्यापि बाधापत्तेः। नेति नेतीत्यसङ्कुचित निषेधविवक्षायां ब्रह्मणोऽपि निषेधान्माध्यमिकविजयस्य; सङ्कुचितनिषेधपरत्वे विहितविशेषाप्रतिषेधस्य च पूर्वमुपपादितस्यान्यथा कर्तुमशक्यत्वाच्च।

एतेन प्रथमग्रहणस्य विशेषविशिष्टविषयत्वमेवेत्याग्रहेऽपि नाद्वैतिनां किमपि च्छिन्नम्। अत एव वेदान्तेषु प्रथममध्यारोपापवादन्यायेन सविशेषं ब्रह्म उपदिश्य निर्विशेषब्रह्मबोधनं तत्र तत्र। विशेषसत्यत्वमिथ्यात्वनिश्चयस्तु बाधतदभावाभ्यामेव न तु प्रथमग्रहणेनैव। अन्यथा शुक्ताविदं रजतमिति गृहीतस्यापि सत्यत्वापत्तेः।

## निर्विशेषे तन्निर्विकल्पे च साधकाभावो बाधकसत्त्वं च

वेदान्तानां ब्रह्मणि सर्वविशेषाभावबोधकत्वं किमिव हि वचनं न कुर्यात्, नास्ति वचनस्यातिभार इति न्यायात् न पर्यनुयोगमर्हतीत्युक्तमपि प्रत्युक्तम्। वचनस्य निरङ्कुशप्रवृत्त्युपगमे ब्रह्मपरिशेषासिद्ध्या विहितविशेषाणामबाध्यताभिधानस्य अविस्मर्तव्यत्वात् अप्राप्तार्थोपदेशावसरे अध्यारोपापवादेनान्येन वा न्यायेन अत्यन्ताप्राप्तासदर्थप्रसक्तिप्रतिषेधयोः प्रक्षालनाद्धीति न्यायेन हेयत्वस्यापरिहरणीयत्वाच्च वेदान्तवाक्यनैराश्येन निर्विशेषसाधनायान्ते कुशकाशावलम्बन्यायेनात्यन्तदुर्बलनिर्विकल्पकावलम्बिनां तस्यापि सविशेषावगाहित्वोपगमे निर्विशेषाय जलाञ्जलिप्रदानस्यैव परिशिष्टत्वात्। अत एव शब्दनिर्विकल्पकप्रत्यक्षखण्डनं प्रस्तुत्य ऐन्द्रियकप्रत्यक्षस्य सविशेष-

विषयकत्वव्यवस्था आम्रान् पृष्टः कोविदारानाचष्ट इति न्यायमनुसरतोत्युक्त-
मसंबद्धमेव । वादारम्भे यदेतदाहुः 'अस्ति तावन्निर्विकल्पकं नाम प्रत्यक्षम् ।
प्रथमाक्षसन्निपातसमनन्तरं अविशिष्टविषयापरोक्षावभासस्य दुरपह्नवत्वा'दि-
त्यादिना ऐन्द्रियकनिर्विकल्पकप्रत्यक्षस्यैवाविशिष्टविषयत्वखण्डनाय प्रस्तुतत्वात्
तत्खण्डनेनैव तदनुविधायिशाब्दनिर्विकल्पकाविशिष्टविषयकत्वस्यापि खण्डित-
प्रायत्वात् । अतो न शास्त्रान्निर्विशेषविषयनिर्विकल्पकसिद्धिरित्यनेन शाब्द-
निर्विकल्पस्यापि खण्डितत्वात् शाब्दापरोक्षनिरासेन शाब्दनिर्विकल्पकाङ्गी-
कारप्रसक्त्यभावस्य पूर्वमुपदर्शितत्वाच्च । अत एव वाऽस्मन्मते शब्दानां
विरम्यव्यापारकल्पनायाः सकृदुच्चरित इति व्युत्पत्तिविरोधप्रसङ्गस्य तन्त्रा-
वृत्तिकल्पनाया वा न कश्चिदस्त्यवकाशः । किन्तु अन्विताभिधानपक्षे
अभिहितान्वयवादे वा विशिष्टबोधकतयैव व्युत्पन्नानां पदानां विशेष्यमात्रे
तात्पर्यकल्पनया तन्मात्रबोधकतामभ्युपगच्छतामेव पूर्वोक्तसर्वदोषाणां तदधि-
कानां च समावेशो दुर्वारः । निर्गुणवाक्यानां सावकाशतया सगुणवाक्य-
बाधकत्वं न सम्भवतीति प्रपञ्चितं तत्र तत्र । निषेधवाक्यान्यसंकोचेनैव नयतां
माध्यमिकपक्षोऽप्यन्ततो वैदिकत्वेन परिजिघृक्षितस्स्यादित्यसकृदावेदितं,
प्रक्षालनाद्धीति न्यायविरोधश्च दर्शितः । पूर्वापरप्रकरणन्यायानुगृहीतनिषे-
ध्यबोधकाक्षरस्वारस्यपरामर्शेन सङ्कोचोपगमे विहितविशेषाणामपि प्रतिषेधा-
सिद्ध्या न निर्विशेषसिद्धिरित्यवोचाम । शब्दादखण्डार्थबोधश्च न कथंचि-
दपि संभवतीत्युपपादयिष्यते । शाब्दापरोक्षस्य प्रतिक्षिप्तत्वादेव शाब्दनिर्विक-
ल्पकापरोक्षमपि प्रतिक्षिप्तमेव । निर्विकल्पकस्याविशिष्टग्राहितासाधकं न
दर्शनमनुमन्यते । नाप्युपपत्तिः, सोपाधिकत्वेन दूषितत्वात् । प्रत्युत चक्षु-
रुन्मीलनसमनन्तरमेव त्रिकोणसास्नादिविशिष्टमद्राक्षमिति बाधकप्रत्यक्षमेवा-
स्ति । तथा प्रथमाक्षसन्निपातजा बुद्धिः विशिष्टविषया, बुद्धित्वात्, संप्रति-
पन्नवदिति बाधकानुमानमप्यस्ति । न चाप्रयोजकत्वं, ऐन्द्रियकत्वाद्यविशेषे
विशेष्यविशेषणयोरन्यतरमात्रग्राहित्वायोगस्य विपक्षे बाधकत्वात् विशेषण-
ग्रहणस्येव विशेष्यग्रहणस्यापि तत्कालीनस्यैव विशिष्टोल्लेखोपयोगितया पूर्व-
ग्रहणानपेक्षाया दर्शितत्वाच्च । अतस्साधकाभावात् बाधकसत्वाच्च न निर्वि-
कल्पकमविशिष्टावगाहि । अत एव निर्विशेषे निर्विकल्पकमपि न प्रमाण-
मिति सिद्धम् ।

---

## सन्मात्रग्राहिप्रत्यक्षभङ्गवादः

अत एव सन्मात्रग्राहिप्रत्यक्षवादोऽपि निरस्तः। अविशिष्टावगाहिप्रत्यक्षासिद्धेः। तथा च श्रीभाष्यं "यत्तु प्रत्यक्षं सन्मात्रग्राहित्वेन न भेदविषयं भेदश्च विकल्पासहत्वाद् दुर्निरूप इत्युक्तम्। तदपि जात्यादिविशिष्टस्यैव वस्तुनः प्रत्यक्षविषयत्वाज्जात्यादेरेव प्रतियोग्यपेक्षया वस्तुनस्स्वस्य च भेदव्यवहारहेतुत्वाच्च दूरोत्सारितमित्यादि। तदेतत्संगृहीतं न्यायपरिशुद्धौ 'अत एव कुदृष्टीनां सन्मात्रग्राहिप्रत्यक्षमित्यविलक्षजल्पितं निरस्तम्। क्रमयौगपद्यादिदूषणं तु भ्रान्तिविकल्पेऽपि समानम्। भ्रान्तिरूपो हि विकल्पः क्षणिकत्वान्न विरम्य व्यापर्तुमलं, न च पूर्वज्ञानवार्तां जानाति। न च स्वयं धर्मिप्रतियोगिग्रहणाभावे भेदग्रहणं मन्यसे। तथापि यदि कल्पनाभेदविशिष्टं युगपद्गृह्णाति का प्रत्यक्षे सर्पमृतिः। अतो धर्मिवद्योग्यत्वाज्जात्यादिरूपभेदोऽपि युगपद् ग्राह्यः। अभेद इव भेदोऽपि स्वरूपतः प्रतीतौ न प्रतियोगिसाकांक्षः। भेदव्यवहारस्तु अभेदव्यवहारवत्तत्साकांक्षः। अतः प्रथमत्वे भेदधीर्युक्तेत्यादि। प्रपञ्चितं चैतदेव शतदूषण्याम्।

### सत्तादात्म्यभाने सत्त्वाभानानुपपत्तिः

अत्र यदुक्तं एकसत्तावादरीत्या प्रपञ्चे सत्तादात्म्येऽपि सत्तानवगाहनेन सन्मात्रसत्यत्वावगाहिशास्त्रेण प्रत्यक्षस्याप्यैकरस्यादिति ब्रह्मसिद्धिकारादयो मन्यन्त इति। तदयुक्तम्। मिथ्यात्वे प्रपञ्चस्य वस्तुतः परमार्थसत्तादात्म्यायोगात्। सत्तादात्म्यस्य भानोपगमे च भेदाभावरूपस्य तस्य प्रतियोगितावच्छेदकसत्त्वात्मकतया तद्भाने सत्त्वानवगाहनानुपपत्त्या सन्मात्रसत्यत्वावगाहितयाऽभिमतेन शास्त्रेणैकरस्यनिर्वाहानुपपत्तेश्च।

### सन् घट इत्यादौ घटत्वाद्यंशेऽपि प्रामाण्यम्

यच्चैतन्मते इदं रजतमित्यादाविदमंश इव सन् घट इत्यादौ सदंश एव प्रामाण्यं, रजतांश इव घटांशे त्वप्रामाण्यं, भ्रमसामान्यस्याधिष्ठानांशे प्रमात्वस्यैव स्वीकारादिति प्रमाणरूपं प्रत्यक्षमपि सन्मात्रमवगाहते, घटोऽस्तीत्यादौ सर्वानुगतमस्तित्वं व्यावृत्तो घटश्च भासत इत्यस्तित्वांशे स्वरूपेऽनुवर्तमाने न विप्रतिपत्तिरिति। तच्चानुचितम्, शतदूषण्यां बाधा-

भावे च सेत्स्यति शुक्तिकारजतादिवत् बाध्याबाध्यांशनिष्ठा वार्तापि निरस्तेत्युक्त्यैवास्य दूरोत्सारितत्वात् । अयमाशयः शुक्तौ रजतमिदं, अत्रास्ति रजतत्वमित्यादौ रजततत्त्वांशयोरप्रामाण्यं न तावदधिष्ठानेतरत्वप्रयुक्तं, किन्त्विदं न रजतं नात्र रजतत्वमस्तीति बाधज्ञाननिबन्धनम् । न चैवमत्र घटस्सन् घटोऽस्तीत्यादावत्र न सन् घटः, नास्ति घट इति बाधग्रहोऽस्ति । न च पटोऽस्तीत्यादौ घटस्य व्यावृत्त्या बाधसिद्धिरिति वाच्यम् । पटोऽस्तीत्यादौ घटव्यावृत्तिभानोपगमेऽपि पटाधिकरणे व्यावर्तमानत्वमात्रेण घटाधिकरणे बाधासिद्ध्या प्रतिपन्नोपाधौ निषेधानवगमेन मिथ्यात्वायोगात् । देशकालान्तरदृष्टस्य देशकालान्तरव्यावर्तमानत्वं मिथ्यात्वव्याप्तं न दृष्टमिति हि भाषितम् । न चास्तीति भासमानमस्तित्वमेवानुवर्तमानं स्वरूपं प्रतिपन्नोपाधिरिति शङ्कितुं शक्यम् । अस्ति ब्रह्मेति चेदित्यादाविव घटोऽस्तीत्यादावपि अन्यधर्मतया भासमानस्यास्तित्वादेः प्रमाणसंबंधार्हता-दिरूपस्य स्वरूपत्वाद्ययोगात् । तस्य च प्रतिव्यक्तिविश्रान्तस्यानुवृत्त्य-योगात् । घटो नास्तीत्यादौ तद्व्यावृत्तेश्च वक्ष्यमाणत्वात् । तदतिरिक्तानु-वृत्तास्तित्वे मानाभावाच्च । एवं सन् घटः घटस्सन्नित्यादावपि "सत्यं ज्ञानमनन्तं ब्रह्म", आनन्दो ब्रह्मेत्यादावानन्दत्वादेः ब्रह्मधर्मतयेव, घटादि-धर्मतया भासमानस्य सत्त्वादेर्न स्वरूपत्वम् । स्वरूपानतिरिक्तत्वोपगमेऽपि विशेषणत्वमेव न विशेष्यत्वम् । आनन्दत्वादेस्स्वरूपानतिरिक्तत्ववादिनोऽपि यथा विशेषणतामेवेच्छन्तीति गम्यते तथा तदीयभाष्यादिवाक्यानि पूर्वमेवो-पदर्शितानि । अतो घटादीनां प्रतिपन्नोपाधौ न व्यावर्तमानता, नाप्यध्यस्तता न वा मिथ्यात्वमिति रजतांश इव तदंशेऽप्यप्रामाण्यं न निरूपयितुं शक्यमिति ।

### स्वरूपेण ग्रहणे भेदस्य निरपेक्षता

एतेन घटोऽस्तीत्यत्र घटस्य विशेषणस्य पटादिभेदरूपस्य स्वरूपेण सह युगपत्प्रत्यक्षेण ग्रहणं न संभवतीति स्वरूपस्येतरानपेक्षत्वात् भेदस्य च प्रतियोग्यपेक्षत्वात् शब्दबुद्धिकर्मणां विरम्यव्यापाराभावेन क्षणिकत्वेन च क्रमेणापि ग्रहणायोगात् निराश्रयभेदग्रहासंभवाच्चागत्या स्वरूपमात्रविषयकं प्रत्यक्षं न भेदविषयकमिति भेदोऽप्रामाणिकः, मिथ्या च, स्वरूपप्रत्यक्षा-नन्तरं जायमाने विकल्पाख्ये एव प्रत्यक्षे भासत इति निष्कर्षोऽपि निरस्तः ।

घटादेर्धर्मितयैव भानोपवर्णनेन विशेषणत्वानुपगमात् । घटस्य घटात्वादेर्वा पटादिभेदरूपत्वेऽपि घटत्वादेस्स्वरूपतो ग्रहे प्रतियोग्यपेक्षाविरहेण योग्यस्य तस्याश्रयेण सहैव प्रत्यक्षस्योपपादितत्वात् । अन्यथा अस्थूलत्वादीनां सन्मात्रानतिरेकपक्षे सन्मात्रस्यापि स्थूलादिभेदरूपत्वेन प्रतियोगिसापेक्षतया क्षणिकप्रत्यक्षविषयत्वानुपपत्तेः । अधिकमुपरिष्टात् । आश्रयग्राहिप्रथमप्रत्यक्ष-प्रतियोगिस्मरणादिसहकृतद्वितीयादिप्रत्यक्षेण भेदत्वेनापि ग्रहणसंभवात् पूर्वा-परप्रत्यक्षयोः परस्परोपकार्योपकारकभावानभ्युपगमे विकल्पाख्यप्रत्यक्षेऽपि भेदो भासत इति भवदुक्तेर्दुरुपपादत्वात् । भेदभ्रमस्याप्याश्रयप्रतियोगिग्रहण-सव्यपेक्षोदयव्यवस्थानतिलङ्घनात् । अन्यथाऽतिप्रसङ्गाच्च ।

### ब्रह्मसिद्ध्युक्तनिर्विकल्पनिरासः

एतेन

आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः ।
नैकत्व आगमस्तेन प्रत्यक्षेण विरुद्ध्यते ॥
लब्धरूपे क्वचित्किंचित्तादृगेव निषिध्यते ।
विधानमन्तरेणातो न निषेधस्य सम्भवः ॥
क्रमस्सङ्गच्छते युक्त्या नैकविज्ञानकर्मणोः ।
न सन्निहितजं तच्च तदन्यामर्शि जायते ॥
विधानमेव नैकस्य व्यवच्छेदोऽन्यगोचरः ।
मा स्म भूदविशेषेण मा न भूदेकधीजुषाम् ॥
न भेदो वस्तुनो रूपं तदभावप्रसङ्गतः ।
आरूपेण च भिन्नत्वं वस्तुनो नावकल्पते ॥

इत्यादिकमपि प्रत्युक्तम् ।

आहुर्हि सन्निकृष्टत्वाद्योग्यत्वाच्च विपश्चितः ।
स्वरूपस्येव जात्यादेरपि प्रत्यक्षमेकदा ॥
स चान्यभेदरूपस्स्यान्न वा स्यात्स्वस्वरूपतः ।
ग्रहणेऽन्यग्रहं पूर्वभाविनं न ह्यपेक्षते ॥
अतः प्राथमिकाध्यक्षप्रमैव सविशेषणम् ।
गृह्णानाऽऽगमवाक्यानां विरुणद्ध्यद्वयाशयम् ॥

तद्विधिस्तद्विरुद्धस्य व्यवच्छेदस्तदाश्रये ।
तदवच्छेदके देश इत्युपेतेऽपि न क्षतिः ॥
नानुमन्येत यद्यैक्यं विधानप्रतिषेधयोः ।
तदा भेदानुमत्याऽस्य व्याहतं स्यात्समीहितम् ॥

यथा चाहुः

भेदापह्नवलोभेन भेदं विधिनिषेधयोः ।
स्वयं समर्थयन्मूर्खः स्ववाग्वज्रेण खण्डितः ॥

इति ।

## तत्तत्संस्थानादेरेव व्यावृत्तिरूपत्वम्

यत्तु सन् घट इत्यत्राधिष्ठानांशे अन्तःकरणवृत्तिरितरानपेक्षस्वरूपविषयिणी तदेव प्रतियोग्यपेक्षभेदं गोचरयितुं न शक्नोतीति । तत्तु स्वरूपतो भेदग्रहे प्रतियोग्यादिग्रहनैरपेक्ष्यस्योपपादितत्वादेव दत्तोत्तरं, न पुनरुत्थानमर्हति । इदं रजतमित्यादाविव बाधस्याभावेऽपि सन् घट इत्यत्र विशेष्यविशेषणयोः वृत्तिभेदकल्पनायां च न किञ्चित्प्रमाणमस्ति । घटस्सन् घटोऽस्तीत्यादावबाधितत्वमुपपादितं पुरस्तात् । अबाधितं च घटस्सन्नित्यादिविशिष्टज्ञानं सर्वांशे प्रमात्मकं प्रतियोग्यनपेक्षं प्रत्यक्षमेवेन्द्रियजन्यम् । न तु प्रतियोगिसापेक्षं दोषजन्यं तत्सहकृतेन्द्रियजन्यं वा । अतस्तत्र स्वरूपमात्रावगाहित्वं घटत्वांशे भ्रान्तित्वं वा न शक्यं निरूपयितुम् । पुरोवर्तिनि घटादावबाधितः यस्संस्थानविशेषः प्रकाशविष्फारितनिर्दोषचक्षुषाऽनुभूयते स एव जातिविशेष इत्यस्माभिरिष्यते, सर्वेषु घटादिष्वनुगमात् । न तु तदतिरेकेण । स एव च पटादिव्यावृत्तिरित्यप्युच्यते । तदतिरिक्ताया इतरव्यावृत्तेरनुपलम्भात् तदवधारणे पटादितादात्म्यारोपप्रतिरोधाच्च । इतरतादात्म्याध्यासप्रतिपक्षोपलम्भकत्वं हि भेदत्वं, व्यावृत्तिश्चेत्यभियुक्तैर्निरुच्यते । स च सन्निकर्षमात्रेण स्वरूपतो गृह्यते प्रतियोगिस्मरणादिसहकृतेन तु व्यावृत्तत्वेनापि, अतो व्यावृत्तिरुपगम्यते, न तु जातिविशेष इति व्याहतं वचनं, उभयोरेकत्वात् । न च व्यावृत्त्यभ्युपगमेऽपि तस्याः भावरूपत्वं जातिविशेषत्वं वाऽभ्युपगन्तव्यमिति निर्बन्धाभावान्न विरोध इति वाच्यम् । सर्वानुभवसिद्धतया दुरपह्नवस्य पृथुबुध्नो-

दरादिसंस्थानविशेषस्य प्रतियोगिग्रहणमन्तरेणापि गृह्यमाणतया अयं घटोऽयमपि घट इत्यनुगतप्रत्ययनियामकतया च भावत्वजातित्वाभ्युपगमावश्यंभावात् । अन्यथा ब्रह्मणोऽपि स्थूलत्वादिव्यावृत्तिरूपत्वेन भावत्वानभ्युपगमप्रसङ्गस्यापि दुर्वारत्वात् । ततश्च निर्विशेषसन्मात्रस्यापि विशेषव्यावृत्तिमात्रत्वेन प्रतियोगिग्रहणादिसापेक्षग्रहणत्वापत्त्या क्षणिकप्रत्यक्षविषयत्वानुपपत्तेस्तौल्यात् प्रत्यक्षस्य निर्विषयत्वमेवाभ्युपगन्तव्यमापद्येत । तथा च निरालम्बनवाद एवावलम्बनीयस्स्यात् । ततश्च सौगतसौहार्दमेव प्रकाशितं भवेत् । तस्मात् सर्वैरप्यबाधेनानुभूयमानाया घटत्वादिजातेरेव भावरूपाया इतरव्यावृत्तिरूपता स्वीकर्तव्या । तस्याश्च स्वरूपतो ग्रहणे प्रतियोग्यनपेक्षया प्रत्यक्षग्राह्यत्वोपपत्त्या प्रत्यक्षसन्मात्रग्राहित्ववादो दुर्निर्वह एव । उपलभ्यमानस्य संस्थानविशेषरूपजातिविशेषस्य व्यावृत्तिरूपत्वानङ्गीकारे च व्यावृत्त्यनात्मकतद्ग्रहणे प्रतियोग्याद्यपेक्षाप्रसक्तेरेवाभावात् । तस्याप्याश्रयेण सह युगपत्प्रत्यक्षसंभवेन सन्मात्रग्राहिप्रत्यक्षवादस्योन्मेष एव न स्यात् । अतः प्रत्यक्षविरोधश्शास्त्रस्याद्वैततात्पर्यकल्पने दुरुद्धर एव ।

## भेदग्रहणे प्रत्यक्षतदाभासयोस्तुल्यता

भेदस्य प्रत्यक्षप्रमाणेन ग्रहणानभ्युपगमे तुल्यन्यायेन प्रत्यक्षाभासानुमानषष्ठप्रमाणादिनापि ग्रहणं न स्यादित्युक्तं शतदूषण्यादिषु । तत्र समीचीनप्रत्यक्षप्रत्यक्षाभासादीनामतुल्यन्यायतामनुपपाद्य भेदस्य भ्रान्तिसिद्धत्वमद्वैतिनोऽपि स्वीकुर्वन्तीत्यश्वार्थिनो महिषदर्शने निवृत्तिर्न स्यादित्यापादनमनुपपन्नमित्यविलक्षजल्पितस्य शतदूषण्यादिनैव दत्तोत्तरत्वादत्र प्रतिवक्तव्यं नावशिष्यते । अश्वार्थिनः अश्वोपस्थितेरनुवर्तमानत्वेन तद्व्यावृत्तेः प्रत्यक्षाभासे भानमिति चेत्, तत एव प्रत्यक्षप्रमाणेऽपि भानोपगमे विरोधाभावात् कृतमनुभवापलापसाहसोपगमेन । अश्वार्थिनो महिषसन्निकर्षे अयं महिष इति विशिष्टज्ञानमेकमेव ह्यनुभूयते, न तु सन्मात्रप्रत्यक्षं, अश्वभेदप्रत्यक्षाभास इति ज्ञानद्वयम् । न वा तत्र व्यवस्थितं तदुभयसामग्रीद्वयम् । न च तत्र भेदग्रहणस्य बाधो विद्यते, येनान्यथाख्यातिभिया विशिष्टोल्लेखस्वारस्यमपि कथंचित्त्यज्येत । अतः कल्पितभेदभ्रमेणैव तत्र निवृत्तिरिति न युक्तं कल्प-

यितुम् । पारमार्थिकमहिषत्वादिरूपभेदविशिष्टावगाहिप्रत्यक्षप्रमयाऽप्यभ्रा-न्तानां निवृत्त्युपपत्तेः ।

### प्रत्यक्षस्य सन्मात्रग्राहित्वे दूषणानि

अतः प्रत्यक्षस्य सन्मात्रग्राहित्वे अश्वार्थिनामभ्रान्तानां महिषदर्शने निवृत्त्यनुपपत्तिरनिवार्यैव । महिषादीनां कल्पितानामपि व्यावृत्त्यात्मनां प्रतियोग्यादिग्रहणसापेक्षाणां प्रत्यक्ष इव तदाभासादिष्वपि ग्रहणं न संभवती-त्युक्तमेव । अतो भ्रान्तानामपि प्रवृत्तिनिवृत्तिव्यवहारानुपपत्तिः व्यावहारि-ककार्यभेदाभ्युपगममात्रेण कथं वा परिहर्तुं शक्यते । अत एवात्र सर्वेषां पदानां पर्यायत्वप्रसङ्गस्य विषयादिभेदस्य साधितत्वादित्यनेन निरसनवचन-मपि निस्सारम् । व्यावहारिकभेदसाधनेऽपि त्वदुक्तन्यायेन तद्ग्रहणासम्भवस्य दर्शितत्वेन प्रत्यक्षतन्मूलकप्रमाणग्राह्यतयाऽभिमते सन्मात्र एव व्युत्पत्तेर्ग्राह्यतया सर्वेषां पदानां सर्वत्रोपस्थितेः पर्यायतायाश्च दुर्निवारत्वात् । किं च प्रत्यक्षेणैव सन्मात्रग्रहणे वेदान्तगतनिर्विशेषवाक्यानामनुवादकत्वेनाप्रामाण्यमनुमन्तव्य-मित्युक्तमपि दुर्वारम् । प्रत्यक्ष एव निर्विशेषसन्मात्रब्रह्मभानोपगमे सन् घट इत्यादौ व्यावहारिकघटादिप्रपञ्चप्रतिभासानुपपत्तिः, व्यावहारिकस्य ब्रह्म-ज्ञानबाध्यत्वोपगमात् । तथा शास्त्रेतरप्रत्यक्षगम्यत्वोपगमे शास्त्रयोनित्वाधि-करणविरोधः "न चक्षुषा पश्यति कश्चनैनमित्यादि श्रुतिवाक्यविरोधश्च दुरुद्धर एव । न च प्रत्यक्षेण सन्मात्रग्रहणेऽपि आनन्दात्मना अग्रहणात् शास्त्रस्यार्थवत्त्वमविरोधश्चेति वचनं युक्तम् । निर्विशेषसन्मात्रे सदात्मकत्व-मानन्दात्मकत्वमखण्डरूपं सखण्डरूपमिति विशेषाभ्युपगमायोगात् । असद-सुखव्यावृत्त्यादेरपि ब्रह्मातिरेकानभ्युपगमात्, प्रतियोगिभेदादेस्स्वरूपग्रहणे भानानभ्युपगमाच्च । एवं "न सन्दृशे तिष्ठति" इति वाक्यस्य सविशेषपरत्वात् निर्विशेषस्य प्रत्यक्षग्राह्यत्वाविरोध इति समाधानमप्युपहास्यम् । न हि रूपवतश्चक्षुषा ग्रहणं न सम्भवति अरूपवत एव हि तत्सम्भव इति श्रुतिवाक्याशयमनुन्मत्त उपदिशेत् । रूपवत एवाचाक्षुषत्वे सत्यरूपवतश्चाक्षुषा-संभवस्य कैमुत्यसिद्धचर्हत्वेन तदुपदेशापेक्षाभावात् । अतः श्रुतिसूत्रप्रत्यक्षादि-विरोधात् सन् घट इति प्रत्यक्षं न सन्मात्रब्रह्मावगाहि । अन्यथा ब्रह्मणोऽपि दृश्यत्वापत्त्या भवदुक्तरीत्या मिथ्यात्वापत्तिरनिवार्या स्यात् । न च फल-

व्याप्यत्वाभावान्न दृश्यत्वप्रसङ्ग इत्युक्तं युक्तम् । प्रत्यक्षाभासेन षष्ठप्रमाणादिना वा ग्राह्यतया भवदभिमतस्य घटादिभेदस्यापि तदविशेषेण दृश्यत्वानुपपत्तेः । अधिकमन्यत्र ।

## सन् घट इत्यादेः ब्रह्माविषयकत्वम्

अतस्सन् घट इत्यत्र सन्निति न ब्रह्मस्वरूपमवभासते । किन्तु घटादिधर्मभूतं सत्त्वमेव । तच्च प्रतिव्यक्तिभिन्नमननुगतमेव । अतः पटस्सन्नित्यादाववभासमानं सत्त्वं घटस्सन्निति भासमानसत्त्वादन्यदेव । तेन न सतोऽनुवृत्तिसिद्धिः । अन्यथा सन् घटः, असन् घट इति कालदेशादिभेदेन प्रतीतिदर्शनात् घटादिप्रतीतावपि सत्ताया व्यावृत्तिरित्यपि वक्तुं शक्य-मित्युक्तं न तु सद्बुद्धिसामान्येऽनुवर्तमानत्वात् घटः स्वरूपं असद्बुद्धौ व्यावर्तमानत्वात् सन् भेद इति भिन्नभिन्नसत्त्वोपादानेन सत्त्वप्रतीतौ घटादि-व्यावृत्तिवत् घटादिप्रतीतौ सत्त्वव्यावृत्तिरपि प्रदर्शयितुं शक्येति हि तद्भावः ।

वस्तुतस्तु सन् घट इत्यादावुभाभ्यामपि पदाभ्यां समानाधि-करणाभ्यां विशेष्यतया घटादिवस्तुस्वरूपमेकमेव, विशेषणतया तु सत्त्व-घटत्वादिधर्माश्चोल्लिख्यन्त इति विशिष्टप्रत्ययस्यैव तत्रानुभवात् न निर्विशेष-विषयत्वं ब्रह्मविषयत्वं वेति परमार्थस्स्फुटमनन्तरमेव कण्ठरवेण दर्शितः । अतश्शतदूषण्यां सद्बुद्धिसामान्येऽनुवर्तमानत्वात् घटस्स्वरूपमित्यादिविपरीत-वादः न विकल्पसह इत्युक्तमसदनुवादेनानुक्तोपालम्भनमेव ।

यत्तु नासतो विद्यते भाव इत्यस्य अत्रोदाहरणं तत्तस्य देहात्मस्व-भावपरतायाः प्रकरणविशेषसिद्धत्वात् न घटादिव्यावृत्तितत्परत्वमिति न स्वाभिमतं साधयितुं प्रभवति । अयमत्र निर्णयः घटो नास्ति, घटो न सन्नित्यु-भयमप्यभिन्नार्थमिति संप्रतिपन्नम् । तत्र घटो नास्तीत्यत्र सत्त्वव्यावृत्तेस्स्फुट-तया घटो न सन्नित्यपि देशकालविशेषावच्छेदेन सत्त्वव्यावृत्तिपरमेवोपगन्तुं युक्तम् । तथा च सत्तानुगमोपगमे सद्बुद्धिसामान्यविषयत्वात् घटस्येव घटबुद्धिसामान्यविषयत्वात् सत्त्वस्यापि परस्परबुद्धिविशेषाविषयत्वमात्रेण व्यावर्तमानतया मिथ्यात्वमुभयोरपीति न संप्रतिपत्तुं शक्यमित्युक्तम् । किन्तूभयमपि परमार्थ एव । तत्र घटस्सन्निति घटत्वादिविशिष्टस्वरूपे

धर्मिणि सत्त्वादिरूपधर्मवैशिष्ट्यं प्रतीयते । सत्त्वं च प्रमाणसंबंधार्हत्वमबाधितत्वं देशकालसंबन्धित्वं वा भिन्नभिन्नमेव । तस्यासद्व्यावृत्तिरूपत्वेऽपि तत्तद्व्यक्तिभेदेन भेद एव । भावान्तराभाववादे अननुगतभावानामेवाभावरूपत्वोपगमात् अतिरेकवादे सत्त्वस्य व्यावृत्तिरूपताया एवाभावात् । सर्वथा घटस्सन्निति न सर्वानुगतसन्मात्रब्रह्मस्वरूपं प्रतीयते । अपि त्वनुगतसत्ताधर्मविशिष्टं घटादिस्वरूपमेवेति न घटादेर्व्यावर्तमानतया मिथ्यात्वं, न वा सन्मात्रावगाहिप्रत्यक्षमिति ।

### सन्मात्रग्राहित्वे ब्रह्मसिद्धिविरोधः

एतेन

**सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते ।**
**प्रपंचस्य प्रविलयश्शब्देन प्रतिपाद्यते ।।**
**प्रविलीनप्रपंचेन तद्रूपेण न गोचरः ।**
**मानान्तरस्येति मतमाम्नायैकनिबन्धनम् ।।**

इति ब्रह्मसिद्ध्युपादानमपि प्रत्युक्तम् । घटादिप्रपंचप्रत्ययवेद्यत्वोपगमे सन्मात्रब्रह्मणोऽपि घटादिप्रपंचवन्मिथ्यात्वापातात् । प्रपंचप्रविलयाकारेण शब्देन प्रतिपाद्यते । प्रपंचाकारेण तु मानान्तरेणेत्युपगमे मानान्तर्गतप्रत्यक्षस्य प्रपञ्चाकारावगाहित्वोपगमेन सन्मात्रग्राहित्वाभ्युपगमविरोधेन समीहितव्याहतेश्च । अत्र प्रपञ्चरूपेण मानान्तरात् सिद्धमिति हि शङ्खपाणिः । अतः प्रत्यक्षस्य सन्मात्रग्राहित्वसाधने ब्रह्मसिद्धेरपि न नैर्भर्यमिति तत्स्वारस्यविदां हृदयमित्यास्तामेतत् ।

### श्रीभाष्यकृन्मते निवृत्त्यनुपपत्तिसाम्यनिरासः

भेदस्य निषेधरूपेण भाने प्रतियोग्यपेक्षायामपि विधिरूपेण भाने तदपेक्षाभावात् प्रत्यक्षे सहैवाश्रयेण भानमविरुद्धमित्युक्तम् । तदनभ्युपगमेऽश्वार्थिनां महिषादिदर्शनान्निवृत्त्यनुपपत्तिश्चानिवार्येत्युक्तम् । पुरोवर्तिन्यश्वबुद्ध्या प्रवर्तमानस्य तद्भेदग्रहणादेव निवृत्तिस्स्यात्, न तु तदग्रहणेऽपि । सन्मात्रप्रत्यक्षवादिनां तु महिषादिसन्निकर्षेऽपि भेदग्रहणोपगमायोगेन सन्मात्रमेवाश्वादिसाधारणं साक्षात्कुर्वता न ततो निवर्तितव्यम् । किन्तु महिष एव बद्ध्वाऽभिधान्या समानेतव्यस्स्यादित्यभिप्रायः । भेदस्य प्रत्यक्षग्रहणमपलपता

तुल्ययुक्त्या तदाभासेनापि ग्रहणमुपगन्तुं न शक्यमित्युक्तमेव । इष्टभेदग्रहण-रूपकारणाभावादेव न निवृत्तिरुत्पत्तुमर्हतीत्ययमाशय इह न तिरोहित इति स्फुटम् । एवं सत्यत्र घटपटादयः परस्परमभिन्नास्सद्बुद्धिविषयत्वादित्यभि-प्रायोल्लेखस्य कथं प्रसक्तिः ? प्रत्यक्षस्य सन्मात्रग्राहित्वकल्पकानां मते कल्पित-भेदसत्त्वेऽपि भेदग्रहणानभ्युपगमेन हि निवृत्त्यनुपपत्तिरुच्यते । प्रत्यक्षत एव भेदग्रहणमुपगच्छतां श्रीभाष्यकृतां मतेऽपि कथमिदमापादनमविशिष्टमिति विवेकिना वक्तुं शक्यम् ? प्रतिव्यक्तिभिन्नं प्रमाणविषयत्वमेव हि सत्त्व-मित्युक्तम् । कथं तेन रूपेण तद्बुद्धिविषयत्वेन वाऽत्यन्तभिन्नानामपि घटपटादीनामभेदोऽभिप्रेतस्स्यादित्युत्प्रेक्ष्यते । अद्वैतिकल्पितः एकसत्तावादः, सत्तात्रैविध्यवादश्चात्यन्ताप्रामाणिक इत्यस्यान्यत्र विस्तरः । घटपटादिसत्तानां भिन्नत्वेऽपि प्रत्यक्षग्राह्यतयाऽभिमतसन्मात्रब्रह्मणो भिन्नत्वानभ्युपगमात् सन्मात्र-प्रत्यक्षवादे श्रीभाष्यकृन्मत इव कथमश्वार्थिनो महिषदर्शने निवृत्तिस्स्या दित्युच्यते । श्रीभाष्यकृन्मते महिषादिसत्त्वं प्रत्यक्षग्राह्यं, भवतां तु सन्मात्रं ब्रह्मेति विशेषस्यासकृदुक्तस्य शरीरस्वास्थ्ये विस्मरणासंभवात् । एकसत्ता-वादेऽपि प्रत्यक्षेण भेदाग्रहे कथं निवृत्तिः, ग्रहणे पुनः कथं सन्मात्रग्राहि प्रत्यक्षम् ? एतदनुपपाद्य घटपटादीनामेकसत्तावादे न सद्रूपत्वं, तेनैक्यं वा । किन्तु सत्तादात्म्यं परस्परभेदश्चेत्यनेन किं व्याहतजल्पितेन । तादात्म्ये सति भेदस्यैकस्मिन्नसम्भवात् । घटपटादीनामस्मन्मते सद्रूपेण ब्रह्मतादात्म्यानभ्यु-पगमादेव न तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायेन घटपटयोरभेदप्रसक्तिः । अतो मतद्वयेऽप्युक्तापत्तिरविशिष्टेति वचनमविवेकनिबन्धनम् । कार्यात्मना तु नानात्वमिति नीत्याश्रयेऽपि वः अश्वार्थिनोऽन्यदृष्ट्या न निवृत्तिरुपपद्यते । स्थितेऽपि नानात्वे तद्ग्रहणे खलु निवृत्तिस्स्यात् । न हि तत्प्रत्यक्षेण गृह्यत इत्युपगम्यते, तन्न्यायस्य च प्रमाणान्तरे प्रमाणाभासे च न सर्पमारः । तस्मादग्राह्यनानात्वोपगमेन तच्छरणवरणेन वा कथमियमापत्तिः परिह्रियेत । तद्ग्रहणोपगमे च सन्मात्रग्राहिता व्याहन्येत ।

### भेदस्यापि प्रत्यक्षत्वोपगमे सन्मात्रग्राहित्वविरोधः शास्त्रप्रत्यक्षविरोधश्च

यदुक्तं सन्मात्रग्राहित्वमित्यस्य सन्मात्रे प्रामाण्यमित्याशयः । न तु प्रत्यक्षविषयस्सर्वमपि सन्मात्रं न तु भेद इति । अन्यथा सविकल्पकस्य

प्रत्यक्षत्वानुपपत्तेः। सन् घट इति सविकल्पप्रत्यक्षे अधिष्ठानतया सन्मात्रांशे प्रामाण्यं, आरोप्यतया घटाद्यंशे अप्रामाण्यमिति घटादिभेदावगाहित्वेऽपि सन्मात्रे प्रामाण्यवादोपपत्तेः। एवं च महिषादिदर्शनस्य महिषादिरूपभेदावगाहितया नाश्वार्थिनिवर्तकत्वानुपपत्तिरिति। तदसत्, प्रत्यक्षस्य घटपटादिभेदावगाहित्वोपगमे शास्त्रप्रत्यक्षविरोधस्यैव समर्थनेन तदविरोधप्रतिपादनप्रक्रमव्याघातात्। 'नैकत्व आगमस्तेन प्रत्यक्षेण विरुद्धयत' इति ह्युपक्रमन्ते। भेदग्राहित्वोपगमे "विधानमन्तरेणातो न निषेधस्य सम्भव" इत्यादिकमपि व्याहतं स्यात्। न च रजतांश इव घटाद्यंशेप्यप्रामाण्यं, बाधाभावेन रजतवैषम्यादप्रामाण्यानुपपत्तेः।

## ज्ञानसामान्यस्याधिष्ठानांशादौ प्रामाण्ये दूषणम्

ज्ञानसामान्यस्याधिष्ठानांशमात्र एव प्रामाण्यमिति नियमोपगमे वेदान्तवेद्यतया भवदभिमतप्रपञ्चनिवृत्यंशेऽपि तस्याप्रामाण्यमुपगन्तव्यम्। तस्या अधिष्ठानत्वानभ्युपगमात् स्वप्रकाशं ब्रह्मैव हि तत्राधिष्ठानम्। तथा च सप्रपञ्चत्वांश इव निष्प्रपञ्चत्वांशेऽपि प्रामाण्याभावे वेदान्तस्य कार्त्स्न्येनाप्रामाण्यमेवाभ्युपगतं भवति। न चैवं सौगतादीनन्तरा वैदिकः कश्चिदनुमन्येत। वस्तुतस्तु सन् घट इत्यादौ घटोऽस्तीत्यादाविव घटादेरेवाधिष्ठानत्वं तद्धर्मतया सत्त्ववैशिष्ट्यमेव सन्नित्यनेन प्रत्याय्यत इति पूर्वमेवोक्तम्। अतोऽधिष्ठानतया घटादेरवगाहिनः प्रत्यक्षस्य न तदंशे भवदुक्तनीत्याऽप्यप्रामाण्यप्रसक्तिः। अतः प्रत्यक्षस्य भेदावगाहित्वोपगमे शास्त्रप्रत्यक्षविरोधतादवस्थ्यम्। सन्मात्रग्राहित्वोपगमेऽश्वार्थिनो महिषदर्शनान्निवृत्त्यनुपपत्तिरित्युभयतःपाशा रज्जुरद्वैतिनः। न च विवर्तोपादानत्वमुपगच्छतां मते नेयमापत्तिरित्युक्तं युक्तं; कार्यभेदानामेकत्वापत्तिनिबन्धनत्वाभावादुक्तापत्तेः। प्रत्यक्षस्य कार्यभेदानवगाहित्वोपगमाद्धयेवमापाद्यते। तत्र विवर्तोपादानवादेन कथं परिहारः? ब्रह्मात्मकस्तदनात्मकस्सत्यो मिथ्यो वा भेदः प्रत्यक्षेण यदि न भासते इत्युपेयते तर्ह्युक्तापत्तेर्दुर्निवारत्वात्। परिणाम्युपादानवादिनां श्रीभाष्यकृतां मते प्रत्यक्षे पारमार्थिकमहिषादिरूपभेदभानोपगमेन अश्वमहिषादिकार्याणां केनापि रूपेण परस्परमैक्यानभ्युपगमेन चोक्तापत्तेः प्रसक्तिरपि नास्तीति तत्साम्यापादनमयथार्थाभिधानमित्युक्तम्। विशिष्टकारणवादिभि-

विशिष्टैक्यमेवानुमन्यते, न तु विशेषणविशेष्ययोः, न वा मिथो विशेषणाना-मिति निरूपितमाकरे। अतो विवर्तोपादानवादिनां मत एकस्मिन्नेवेयमा-पत्तिर्दुष्परिहरा प्रवर्तते। तत्परिजिहीर्षायां श्रीभाष्यकृत्प्रदर्शितः प्रत्यक्षस्य सन्मात्रग्राहित्वभङ्गमार्ग एवाश्रयणीयः। तदाश्रयणे च प्रत्यक्षविरोधस्य दुरुद्धरतया यूपादित्यशास्त्रस्येवात्मैक्यशास्त्रस्य सत्त्वेऽप्यन्यपरत्वमेव स्वीकर्तं-व्यमित्यद्वैतमेव निर्दयं व्यापादितं स्यात्। तस्मादद्वैताभिमानिभिस्सन्मात्र-ग्राहिप्रत्यक्षवादस्य दुस्त्यजतया महिषादिदर्शनादश्वार्थिनिवृत्त्यनुपपत्तिदोषो दुर्निवार एव, यावदात्मभावितयाऽनुभवितव्य एव।

यत्तु—सर्वज्ञानयाथार्थ्यवादिनामप्येतद्दोषसाम्यात् क्षणभङ्गुरोऽयं सन्मात्रग्राहिप्रत्यक्षभङ्ग इति। तदुन्मादानवबोधसंभेदविजृम्भितम्। शुक्ति-शकलादौ सत एव रजतस्य भानोपगमेऽपि तस्य कथञ्चिदपि पृथक्कृत्य ग्रहणानर्हत्वात्तद्ग्राहिणस्ततो रजतार्थिनः निवृत्त्युपपत्तेः। अत एव तत्र स्वल्परजतार्थमपि न निरूपकस्य प्रवृत्तिरापादयितुं शक्यते। तस्य दुर्ग्रहत्वात्। अतस्सर्वज्ञानयाथार्थ्यवादिनां पक्षेऽस्या अनुपपत्तेरनवकाशेन प्रपञ्चमिथ्यावादैकभोग्येयनुपपत्तिरभङ्गुरेत्यवधारणीया। अत एवं प्रत्यक्षस्य सन्मात्रग्राहित्ववादो दुरुपपाद इति प्रतिपादितत्वात्; तदुपगमे चाश्वार्थिनां महिषादिदर्शनान्निवृत्त्याद्यनुपपत्तिर्दुस्तरेति प्रदर्शितत्वात्; भेदावगाहित्वेऽपि प्रत्यक्षस्य सन्मात्र एव प्रामाण्यमिति तद्वादस्य किञ्चिद्विपरिवर्तने च तत्र नियामकाभावस्याभिहितत्वाच्छास्त्रप्रत्यक्षविरोधपरिहारविरहस्योक्तत्वाच्च, सम्प्रति सन्मात्रग्राहिप्रत्यक्षप्रसाधनाभिनिवेशं विमुच्य शास्त्रप्राबल्यपक्षा-वलम्बनमेव साम्प्रतमद्वैताभिनिवेशिनाम्। तदुपरि यत् वक्तव्यं तत्परस्ताद-भिधास्यते। तत्सिद्धं प्रत्यक्षप्रमाणसिद्धो घटपटादिप्रपञ्चभेद इति।

——

## भेददूषणनिस्तारवादः

उक्तं च भेददूषणनिस्तारे भेदप्रत्ययस्य तत्कारणस्य च दुरपह्नवत्वात् तत्प्रत्ययस्य निर्विषयताया बाध्यविषयताया वा दुर्वचत्वाच्च सामान्यतस्स्थापिते भेदे न पृथक् जल्पानामुत्तरापेक्षेति। प्रमाणशरणानां तदनुरोधेन भेदाभ्युपगमावश्यम्भावे सति तत्स्वरूपादिनिरूपणभरः सर्वेषामपि समान इति तत्र खण्डनाद्युक्तानां स्वव्याघातकचोद्यानामुत्तरं न विशिष्य देयमिति भावः।

### व्यवहारदशायां भेददूषणनिरासस्य मुक्तावपि तुल्यन्यायता

यदुक्तमत्र तत्त्वप्रदीपिका खण्डनखाद्यखण्डनादावनिर्वचीयत्वस्थापनं व्यवहारदशायामेव घटपटादीनां तद्भेदस्य च न निषेधाभिप्रायेण, किन्तु मुक्तिदशायां तदभिप्रायेण, तत्रापि न तावच्छ्रीभाष्याभिमतमुक्तिदशायां, तदानीं व्यवहारदशाया एवाद्वैत्यभिमतत्वेन भेदस्य दूषणाकरणात्। किन्तु तस्या अपि मुक्तिरूपतया परममुक्तित्वेनाद्वैत्यभिमतनिर्विशेषप्राप्तिदशायामेव। तदानीं च ब्रह्मव्यतिरिक्ताभावबोधनपराभिः श्रुतिभिर्विरोधप्रसङ्गात् भेददूषणनिरासेन भेदप्रपञ्चसाधनं न शक्यं भवेत्। व्यवहारदशायां तु भेदस्य तद्दूषणनिरासस्य चाद्वैतिभिरपि स्वीकाराच्छ्रीभाष्यादिषु तदर्थः प्रयत्नो निष्प्रयोजन एव। अद्वैतिनामपि प्रौढिवादमात्रेणैव भेददूषणसमर्थनार्थः प्रयत्न इत्यभिप्रेत्यैव भेददूषणनिरासपरीक्षा प्रारभ्यत इति।" तेन चैतेन प्रौढिवादत्वाभ्युपगमेनाद्वैतिभिरुक्तानि सर्वाण्यपि भेददूषणानि स्वपाण्डित्यस्थापनार्थान्येव। न तु वस्तुतो दूषणानीति तैरेवानुमतमिति ह्युक्तं भवति। न च व्यवहारदशायामेवाद्वैतिभिर्भेददूषणानां निरासस्स्वीक्रियते, न तु मुक्तिदशायामिति पुनर्वक्तुं शक्यम्। निरसनन्यायस्य मुक्तावपि तुल्यत्वात्। न चाविचारितरमणीयतैकवेषाविद्याकार्यत्वाद् व्यवहारदशायां भेदस्य तद्ग्रहस्य च न धर्मधर्मिभावादिनिर्वचनप्रतियोग्यादिग्रहणाद्युपपत्त्यपेक्षा, अत एव तदनुपपत्तेस्तदानीमदूषणतया दूषणनिरासः। मुक्तिदशायां त्वतथात्वात् पारमार्थिकस्य सर्वोपपत्तिसापेक्षतया तदनुपपत्तिर्दूषणमेवेति न तुल्यन्यायतेति

वाच्यम् । तर्हि व्यवहारदशायां भेदस्य प्रत्यक्षादिप्रमाणस्याप्याविद्यकत्वोपगमेन उपपत्तिनिरपेक्षत्वापत्त्या प्रत्यक्षेण प्रतियोग्यादिग्रहणापेक्षया भेदग्रहणानुपपत्तिवचनस्य व्याघातात् । किं च भेदस्य पारमार्थिकस्यैवोपपत्तिसापेक्षत्वमिति क्व दृष्टमायुष्मता ? येन तदनुपपत्तिस्तद्दूषणमित्युच्यते । मुक्तिदशायां भेद एव भवता नेष्यते । व्यवहारदशायां त्विष्यमाणोऽपि भेदः व्यावहारिक एव, न पारमार्थिक इति ह्युच्यते । किं बहुना क्वचिदपि पारमार्थिके दृष्टमुपपत्तिसापेक्षत्वमिति न वक्तुं भवता शक्यम् । अतः क्वचिदप्यदृष्टेनोक्तोपपत्तिसापेक्षत्वनियमेन कथं भवता मुक्तिदशायां भेददूषणं वक्तुं शक्यम् । यदि व्यवहारदशायामुपपत्तिनिरपेक्षो भेदः तर्हि मुक्तिदशायामपि तथैव स्यात् । यद्यविद्यामाहात्म्यात् विनाऽप्युपपत्तिं व्यावहारिको भेदस्स्यात् तर्हि मुक्तिदशायां विद्यामाहात्म्यात् पारमार्थिकः कुतो न स्यात् ? व्यावहारिकतयाऽभिमतमपि घटादिकमुपपत्तिसापेक्षमेव दृश्यते, मृदादिसामग्र्यैव जननात् । यदि च व्यवहारदशायामुपपत्तिसम्पत्तिरेव केनचित्प्रकारेण भेदतद्ग्रहणयोरपीष्यते, तर्हि तेनैव प्रकारेण मुक्तिदशायामुपपत्तिसम्पन्न एव भेदादिस्स्यादिति कथं न तुल्यन्यायता ?

## मुक्तिदशायामपि सामान्यतो भेदबाधकप्रमाणस्य दुर्भिक्षता

न च मुक्तिदशायां ब्रह्मव्यतिरिक्ताभावबोधनपराभिः श्रुतिभिः विरोधान्न भेदसत्यत्वं साधयितुं शक्यमित्युक्तं युक्तम् । ब्रह्मव्यतिरिक्ताभावस्य बाध्यभेदभिन्नत्वेन बोधने भेदग्राहकतया श्रुतीनां भेदसामान्यविरोधित्वायोगात् तेन रूपेणाबोधने च विरोधग्रहणस्यैवासम्भवेन बाधकत्वायोगात् । न च पारमार्थिकत्वाकारेण भेदाभावविषयकस्यैव बाधकत्वं, न च भेदे दुष्परिहरता, व्यावहारिकभेदेनैव व्यावहारिकतद्विरोधित्वतदभावत्वयोरुपपत्तिसंभवात्, यक्षानुरूपो बलिरिति न्यायादिति वाच्यम् । पारमार्थिकत्वेन भेदाभावस्य व्यावहारिकभेदाविरोधित्वे तद्ग्रहेण व्यावहारिकप्रपञ्चभेदबाधानुपपत्तिः, विरोधित्वे तत्र व्यावहारिकभेदभानानुपपत्तिः, तदभाने च विरोधभानस्याप्यनुपपत्तिरिति श्रुतिविरोधोद्भावनानुपपत्तेः । तदुक्तं बाधकप्रमाणस्य भेदग्राहित्वे भेदाभावग्राहित्वे यत्किंचिद्ग्राहित्वाभावे च भेदस्य स्थिरीकरणात् भेदाभावोऽपि सिद्ध्यन् भेदाद्भिन्न एव सिद्ध्यति ।

अन्यथा तदसिद्धेस्तत्सिद्धेर्वा भेदसिद्ध्यापाता" दिति । वस्तुतस्तु मुक्तिदशायां ब्रह्मव्यतिरिक्ताभावबोधकः श्रुत्यक्षरलेशः क्वचिदपि न श्रूयते । प्रत्युत "सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चिता" "निरञ्जनः परमं साम्यमुपैतीत्यादिषु ब्रह्मसाहित्यसाम्यसर्वकामानुभवादिश्रवणात् ब्रह्मव्यतिरिक्तनित्यभोक्तृभोग्यभोगोपकरणभोगस्थानादिपरस्सहस्रसद्भावस्यैव प्रत्यायनात् । न चेतोऽप्यन्या काचित्परमा मुक्तिरस्ति । मानाभावात् । अस्या एवानावृत्तिनित्यत्वादिवचनेन परममुक्तित्वावगमात् । अधिकमन्यत्र । मुक्तिदशायां भेदानुपगमे तदानीमनृतजडादिव्यावृत्तेरपि निवृत्त्यापत्त्या ब्रह्मणोऽनृतजडत्वाद्यापत्तिरप्यनिवार्या । दूषणस्य मुक्तिदशाभिप्रायकत्वे मुक्तिदशायामध्यासाप्रसक्त्या स्वरूपभेदवादेऽध्यासानुपपत्तिदूषणं च तदानीमलग्नकमेव स्यात् । अत्र भेदस्स्वरूपं धर्मो वेत्यादिप्राचीनवैतण्डिकविकल्पतद्दूषणानां शतदूषण्यामत्यन्तदूरोत्सारितानामेव पुनरनुवादस्य न किंचित्प्रयोजनमस्त्यन्यत्र ग्रन्थपूरणात् । तत्र ह्यन्यतरत्वनियमं परित्यज्य यथासंभवं धर्मिधर्मोभयरूपतयाऽपि निर्वचनमविरुद्धमित्युपपादितम् । स्वपरनिर्वाहकसंप्रतिपत्तिश्च दर्शिता । अत एवोन्मूलिताः भ्रमानुपपत्त्यनवस्थादयो दोषाः कथं पुनः प्रादुष्युः । एवं प्रमाणसिद्धत्वादबाध्यत्वान्निर्दोषनिर्वचनसंभवाच्च भेदस्य पारमार्थिकत्वमेव, न तु व्यावहारिकत्वं मिथ्यात्वमनिर्वचनीयत्वं वेति वेदप्रामाण्यवादिनो मन्यन्ते । अत एव भेदस्य प्रत्यक्षप्रमयाऽपोन्द्रियतत्सन्निकर्षादिघटितसामग्रीसंप्रसूतया ग्रहणमुपपन्नमिति पूर्वं निर्व्यूढमपि निर्दुष्टमित्यातिष्ठन्ते । तस्मादद्वैतकथाया व्यवहारदशायां मुक्तिदशायां वा न क्वचिदवकाशोऽस्ति । अतः स्वगोष्ठीनिष्ठवैतण्डिकपरिबृढभेददूषणपरकेवलप्रौढिवादानां न किंचित्प्रयोजनमस्ति । अत्र शतदूषणीत्यारभ्य यस्तदनुवादः कृतः स तु शब्दतोऽर्थतो वा न यथावदनुवाद इति शतदूषणीदर्शिनां विशदमेव स्यादिति न तदुपपादनमिहावश्यकमित्युपेक्ष्यते ।

## वाचाऽऽरम्भणश्रुत्या भेदनिरसनासंभवः

यत्तु भेदप्रत्ययं तत्कारणं चाभ्युपगम्य प्रतीयमानो भेदस्सत्य उतासत्य इत्यादिविकल्पानन्तरं वाचाऽऽरम्भणश्रुत्या ब्रह्मव्यतिरिक्तमिथ्यात्वावगमेन सत्यभेदनिरूपणं न संभवतीत्युक्तम् । तच्चिन्त्यम् । तच्छ्रुतिवाक्यस्य कार्य-

कारणयोरनन्यत्वमात्रे तात्पर्येण कार्यमिथ्यात्वे स्वारस्याभावात् । तथा च सूत्रितं "तदनन्यत्वमारम्भणशब्दादिभ्य इति । यथा च कार्यकारणयोरन्यत्वेऽपि कार्यसत्यत्वं तथोपपादितमत्रापि पुरस्तादेव । सत्ययोरेव ह्यनन्यत्वं स्वरसम् । न तु सत्यासत्ययोः । ब्रह्ममात्रसत्यत्वपरत्वे मृत्तिकैव सत्यमित्यादि व्याहन्येत, इति शब्दश्च निरर्थकस्स्यात् । मिथ्यात्वेनासंप्रतिपन्नस्य मृण्मयादिकार्यस्य कार्यमिथ्यात्वे निदर्शनत्वानुपपत्तिश्चेत्यादयो बहवो दोषा इति ह्युक्तम् । अतो भेदस्य कार्यत्वाभ्युपगमेऽपि न मिथ्यात्वं सुवचम् । वस्तुतस्तु जडाजडयोस्सत्यासत्ययोः जीवेश्वरयोः ब्रह्मप्रपञ्चयोः गवाद्यश्वाद्योश्च भेदानामनादित्वेन कार्यत्वाभ्युपगमोऽपि न संभवति । अतो वाचाऽऽरम्भणवाक्यं भवतामाशामोदकमेव । प्रतीयमानत्वे सत्यबाध्यत्वाद्धि भेदस्सत्य इति वयमाचक्ष्महे । न तु प्रतीयमानत्वमात्रात् । अतो न शुक्तिरजतरज्जुसर्पादीनां सत्यतापत्तिः । यथा च भेदानां बाधासंभवस्तथा पूर्वमेव प्रत्यपादि । अतो भेदो बाध्यो न वेति विकल्पे द्वितीयकल्पस्यैव शतदूषण्यां समर्थितत्वेन यत्पुनः तावता व्यावहारिकसत्यत्वमेवायातीति वचनं तन्न विद्वन्मनोरमम् । ब्रह्मप्रमया बाध्यमेव हि व्यावहारिकमिति परिभाष्यते । बाधकप्रमाणस्येति पूर्वोदाहृतशतदूषणीवाक्येन तुल्यन्यायात् तयापि न भेदः बाधितुं शक्य इत्यपि ह्युक्त भवति । अत्र तत्रेयं शतदूषणीत्यारभ्य वदतीत्यन्तेन शतदूषण्यामनुदितमेवानूदितम् । तत्र ब्रह्मवत्त्रिकालाबाध्यतयैव सामान्यतो भेदस्य सत्यत्वस्थापनात् । तत्र सामान्यतो भेदस्य बाधकं ज्ञानमेव कदापि न प्रसिद्ध्यतीति ह्युपपादितम् । एवं ब्रह्मवदबाधितत्वेन समर्थिते भेदे पारमार्थिकत्वाभ्युपगमस्य कस्तावदाक्षेपः कर्तुं शक्य इत्यपि ह्युक्तम् ।

### व्यावहारिकभेदमूलविकल्पेन पारमार्थिकभेदबाधायोगः

विरुद्धकल्पावलम्बेन हि विकल्पः प्रवर्तनीयः, विरोधश्च भेदव्याप्यतया तदुपजीवीत्युपजीव्यभेदस्य कथं विकल्पमूलो बाधः ? न च व्यावहारिकभेदमूलो विकल्पः, घटः पटो वेत्यादेस्तथैवोपगमात् । तेन च पारमार्थिकभेदबाधो न विरुद्ध इति वाच्यम् । व्यावहारिकत्वेन भवदभिमतानामेव सत्यानृत जीवेश्वरब्रह्मप्रपञ्चघटपटादिभेदानां प्रामाणिकैः पारमार्थि-

कत्वाङ्गीकारेण तदतिरिक्तभेदानभ्युपगमात् विकल्पेन पारमार्थिकभेददूषणे व्यावहारिकत्वेन भवदभिमतभेदस्यैव दूषणेन स्वव्याघातकत्वस्य दुर्निवारत्वात् । कोटयोः पारमार्थिकत्वेन गृहीतस्यापारमार्थिकत्वेनागृहीतस्यैव वा भेदस्य ग्रह एव विकल्पप्रवृत्त्या मिथ्यात्वव्याप्यव्यावहारिकत्वेन ग्रहे विकल्पानुपपत्तेश्च । न ह्येकस्याप्यविरुद्धो मिथ्याभूतो भेद इति विजानता घटः कलशो वेति विकल्प्येत, किमुत मिथ्यात्वव्याप्याकारेण भेदमुपगच्छता । घटः पटो वेति विकल्पस्तु पारमार्थिकत्वेन भेदग्रहात् भेदे अपारमार्थिकत्वाग्रहाद्वा, न तु व्यावहारिकत्वेन भेदग्रहात् । स्याद्वा व्यावहारिककोटयोः व्यावहारिकभेदग्रहादपि विकल्पः, यक्षानुरूपो बलिरिति न्यायात् । न चैवं परमार्थभेदस्वरूपविकल्पे कोटयोः व्यावहारिकत्वं वक्तुं शक्यम् । पारमार्थिकस्य व्यावहारिककोटावन्तर्भावाप्रसक्तेः । न चासंभावितस्यापि विकल्पः, न च व्यावहारिकभेदग्रहादेव पारमार्थिककोटिकविकल्पोऽपीति वाच्यम् । अनभ्युपगमात् । प्रातिभासिकभेदग्रहात् व्यावहारिककोटिविकल्पप्रसङ्गवारणाय विकल्पस्य भिन्नसत्ताकत्वेनागृहीतभेदग्रहसापेक्षताया भवताऽभ्युपगन्तव्यत्वात् । न च भेददूषकेण परमार्थभेददूषणौपयिकविकल्पावसरे भेदस्यापारमार्थ्यं न गृहीतमिति वक्तुं शक्यम् । गृहीते चापारमार्थ्ये न विकल्पसंभवः । विकल्पोपपत्तये पारमार्थिकत्वोपगमे चाभ्युपगमविरोधेन मूलघातस्स्यादिति तेन विकल्पेन पारमार्थिकभेदस्य भेदपारमार्थ्यस्य वा दूषणानुपपत्तिरित्युक्तप्रायमेव ।

एतेन स्वरूपधर्मयोर्भेदस्य सत्यतया स्वाभिमतस्य कृत्वाचिन्तया विकल्पः, स्वरूपधर्मयोर्भेदोऽपि मिथ्याभूत इति कृत्वा विकल्पोत्थानमपि न दुष्टम् । श्रीभाष्यादिमतसत्यत्वमादायापि विकल्पोत्थानं न विरुद्धमित्यादीनि व्याहतजल्पितानि निरस्तानि । भेदसत्यतायास्स्वाभिमतत्वे कृत्वाचिन्तानवकाशात् । भेदो मिथ्याभूत इत्यवधारणे विकल्पानुत्थानस्योपपादितत्वात् । श्रीभाष्याभिमतभेदसत्यत्वमभ्युपगम्य विकल्पकल्पने तेन श्रीभाष्यमतभेदसत्यत्वदूषणानुपपत्तेश्च प्रतिपादितप्रायत्वात् । न च व्यावहारिकसत्यत्वस्यैव श्रीभाष्याभिमतत्वात्तदुपादाय तदतिरिक्तपारमार्थिकसत्यत्वदूषणे न विरोध इति वाच्यम् । भेदे श्रीभाष्यमतसत्यत्वातिरिक्तसत्यत्वस्य केनाप्यनभ्युपगमेनाप्रसक्तप्रतिषेधापत्तेः । श्रीभाष्येऽपि पारमार्थिकसत्यत्वस्यैव निरूपणेन

तदतिरिक्तसत्यत्वस्य शशशृङ्गायमाणत्वाच्च। तत्र सविशेषमेव ब्रह्म नित्यं न तु निर्विशेषमनित्यमपीति निरूपणात् यावत्सन्निशेषब्रह्मसत्तं भेदसत्तोपगमेन भेदस्यापि नित्यत्वाभ्युपगमस्यैव सिद्धेः। तस्य चाभ्युपगमेन विकल्पोत्थापने अद्वैतविरोधस्वाभ्युपगमविरोधान्यतरावसरस्य दुर्निवारत्वात्।

## भेदवाद-तत्परिवादकृतोर्विकल्पोपपादने वैषम्यम्

न चैवं श्रीभाष्यकारादीनां भेदसत्यत्वमिथ्यात्वविकल्पानुपपत्तिरिति युक्तमुक्तम्। तन्मते सत्यत्वमिथ्यात्वकोटचोः पारमार्थिकभेदस्यैवाभ्युपगमात्। न च मिथ्यात्वनिरासेऽभ्युपगमबाधः। मिथ्याभूते मिथ्यात्वोपगमेऽपि भेदस्य मिथ्यात्वाभ्युपगमाभावात्। वह्निमान्न वेत्यादावभिमतसाधनाय पर्वतादावनभ्युपगतस्यापि ह्रदादिसिद्धस्य कोटितया निर्देशदर्शनात्। यत्रकुत्रचित् कोटिप्रसिद्धिमात्रस्य कोटचोर्वास्तवभेदग्रहस्यैव च विकल्पेऽपेक्षितत्वेन भेदवादिनां तदुभयाविरोधान्न विकल्पानुपपत्तिगन्धः। भेदपरिवादिनां तु कोटचोर्वास्तवभेदग्रहविरहाद्विकल्पानुपपत्तिरनिवार्यैव इति महान् भेदोऽस्त्युभयेषाम्। अत एव प्रातीतिकभेदमूलोऽयं विमर्शः, परमार्थदृष्टचा तु दूषणमित्युक्तमपि निरस्तम्। भवन्मते प्रतीतिविमर्शपरमार्थदृष्टीनां भेदानुपगमात्। परमार्थदृष्टिमतः दूष्यदूषणभेदप्रतीतेरपि अनभ्युपगमेन दूषणप्रसक्तेरेवानुपपत्तेश्च। अतो भेदानङ्गीकारे न पर्यायेण विकल्पस्स्यात्।

यत्तु घटपटादीनां ब्रह्माभिन्नत्वेऽपि यथा न पर्यायता तथा कोटचोर्भेदाभावेऽपि न पर्यायतेति। तदन्धस्य जात्यन्धेन यष्टिदानम्। घटादीनां ब्रह्माभेदस्यैवासंभवात्। न हि चेतनाचेतनयोस्सत्यमिथ्याभूतयोर्वा भेदो नास्तीति वचनं कश्चिद्विपश्चिदनुमन्येत। अत एव ह्यनन्यत्वाधिकरणमपि ब्रह्मनिर्विशेषत्व प्रपंचमिथ्यात्ववादप्रत्यनीकमित्यभ्यधाम। सर्वथाप्यशक्योपपादनमुपाधितोऽप्यभिन्नार्थकानां शब्दानामपर्यायत्वं, धर्मत्वधर्मित्वरूपोपाध्योरपि भेदानभ्युपगमात्। अन्यथा घटः कलश इत्यादीनामपर्यायत्वापत्तेः। अत एव हि सत्यादिपदानां स्वरूपानतिरिक्तव्यावृत्तिपरत्वोपगमे पर्यायत्वादिदूषणं दुर्वारमित्यापाद्यते। एतेन भेदसत्यतामतेऽपि यत्र तस्य धर्मधर्म्यन्तररूपत्वं तत्र कथं वा न धर्मधर्म्यन्तरपदेनापर्यायतेत्युक्तमप्यपास्तम्। तन्मते धर्मत्वधर्मित्व भेदत्वादिना उपाधिना परमार्थतः भिन्नार्थकत्वोपगमेन पर्यायता-

याश्शङ्कितुमप्यशक्यत्वात् । न हि तन्मते भवन्मत इव परमार्थधर्मभेद-दारिद्र्यम् । व्यावहारिकभेदसम्पत्त्या च न पर्यायत्वपरिहारः । व्यावहारिकं, सांवृतं, प्रातिभासिकमित्यादीनामर्थबाधविलम्बाविलम्बविशेषे सत्यपि प्रतिपन्नोपाधौ बाध्यपरत्वाविशेषेण प्रायशः असत्पर्यायवचनत्वात् । न चात्र यक्षानुरूपबलिन्यायः, परमार्थतो भेदनिरासे व्यावहारिकभेदोपजीवनस्यानुरूप्याभावेन पारमार्थिकोपजीवनस्यैव तन्न्यायानुगुणत्वात् । न हि परमार्थं विमृशतामपरमार्थोपजीवनमनुरूपम् ।

यत्तु अपरमार्थत्वं चेदं ब्रह्मसमसत्ताकत्वाभाव एव, न तु शून्यत्वमिति भेदवद्विमर्शस्यापि व्यावहारिकसत्त्वाभ्युपगमो न दोषमावहतीति । तन्न । भेदस्य ब्रह्मसमसत्ताकत्वानुपगमे कदाचिद्भेदाभावाद्ब्रह्मणोप्यनृतजडात्मकत्वप्रसङ्गस्य दुर्वारताया दर्शितत्वात् । भेदवद्दूषणमूलविमर्शस्यापि व्यावहारिकत्वोपगमे भेदविमर्शयोरुभयोरप्यविशेषेण विमर्शस्य भेदबाधकत्वायोगात् । अन्यथा भेदप्रतीतेरपि भवदीयविमर्शबाधकत्वापातात् । स्वमूलघातस्य दुस्त्यजत्वाच्च । प्रतीयमान एव हि भेदे पारमार्थिकव्यावहारिकविवादः । तदतिरिक्तभेदस्य केनाप्यनभ्युपगमात् । अतो भेदनिरासेऽप्यबाधितो भेदस्स्वाभिमतः कश्चिदस्तीति न हि वक्तुं शक्येत, तत्कथं स्वमतसिद्धभेदोपजीवनेन भेददूषणौपयिकविकल्पोपपत्तिरुच्यते । तदुक्तं प्रातीतिकभेदमूलोऽयं विकल्पः, परमार्थविमर्शमूलं तद्दूषणमिति चेन्न । विमर्शभेदस्यापि पारमार्थिकत्वानभ्युपगमात्, स्वमूलघातायोगाच्चेति ।

## स्वमतसिद्धस्य-परमतसिद्धस्य वा भेदस्योपजीवनेन न विकल्पोपपत्तिः

इदन्तु बोध्यम्—यथा शुक्तिरजतादावपि पारमार्थ्यग्रह एव प्रवृत्त्यादिकमुपपद्यते, न तु मिथ्यात्वानिर्वचनीयत्वादिग्रहेऽपि, तथा भेदेऽपि पारमार्थिकत्वग्रह एव तन्मूलविकल्पविमर्शादिकमुपपद्येत न तु भेदमिथ्यात्वानिर्वचनीयत्वादिनिश्चयेऽपीति । अत एव परमतसिद्धभेदोपजीवनेनापि नात्र विकल्पः कल्पते । न हि तत्परमतं मूलघातं सहते, तेन निर्विघातं सिद्धो भेदः प्रथममभ्युपगतश्चेत् पश्चादपि स न बाधितुं शक्यस्स्यात् । यद्यप्यभ्युपगम्यवादाः कथायां बहवस्स्युः, तथापि तत्र यदभ्युपगतं न तन्निरस्येत, किन्तु ततोऽन्यदेव । अभ्युपगतस्यापि निरसनं त्वन्यत्रैव स्यात् । अपि च

यच्च तत्र तत्र निरसिष्यते न तन्निरसनोपयोगितया प्रागभ्युपगम्यते, अपि तु निरसनीयोपपादकतया परोक्तमभ्युपगम्य निरसनीयं परं निरस्यते। अभ्युपगतमन्यन्निरसनमूलमन्यत्तत्र निरस्यमानमन्यत्। न चैवं प्रकृते। विकल्पोपयोगितयाऽभ्युपगतस्य परमतसिद्धस्य भेदस्यैव तेन विकल्पेन निरसनीयतया भवतामभिमानात् अभ्युपगम्यमानमेव निरस्यत इत्युन्मत्त-चर्येयम्। न चैवं सर्वोऽपि विकल्पो दत्तजलांजलिस्स्यादिति शंकाया इहास्त्यवकाशः। मिथो विभिन्नानां विकल्पशिरसां पराभिमततया संभाव-यितुमर्हाणां निरसनार्थमनुवादेऽपि तत्र स्वाभ्युपगमावश्यम्भावाभावेन ततस्त-न्निरसनोपपत्तेः। सर्वत्र निरसनीयमनूद्यैव हि निरासः क्रियत इति न तत्र कश्चन विरोधः। न चैवं कोटिभेदानभ्युपगमेऽपि पर्यायेण विकल्पोऽप्यविरुद्ध-स्स्यात्। अतस्स्वमतसिद्धभेदोपजीवनेन परमतसिद्धभेदोपजीवनेन वा भेददूषणाय विकल्पोऽनुपपन्न एव। अत एव यथा विकल्पे तदभावे च भेदसिद्धेरवर्जनीयत्वं तथोक्तम्। अतो यदि विकल्पयसि सिद्धो भेदः। यदि न तथापि सिद्धः विकल्पोपक्रमत्वात्तद्दूषणस्येति। एवं भेदानभ्युपगमे विकल्पासंभवात् बाधकाभिमतज्ञानस्य प्रतियोगितातिरिक्तसंबन्धेनापि भेद-गोचरत्वाभावे तद्गोचरत्वे च बाधकत्वायोगाच्च, विकल्पबाधकज्ञानाभ्यामपि भेदसिद्धिर्निष्प्रत्यूहेत्युक्तम्।

यदुक्तमियं शुक्तिरित्येव बाधकं ज्ञानं नेदं रजतमिति तु तत्फला-नुवादमात्रमिति बाधकज्ञानस्य न भेदग्राहित्वमिति, तदयुक्तम्। शुक्त्यादौ शुक्तित्वाद्यतिरिक्तरजतभेदानुपलंभेन शुक्तित्वादेरेव रजतभेदरूपत्वात्। सन्मात्रग्राहिप्रत्यक्षपरीक्षावसरे घटत्वं नाम पटादिव्यावृत्तिरेव न तु जातिविशेषः, अनभ्युपगमादित्यादिना; अत्राप्युत्तरत्र इतरव्यावृत्तेरेव धर्मरूपत्वात् तदतिरिक्तधर्मस्वरूपस्यैवाभावादित्यादिना च स्ववचनेनैव भेदातिरिक्तशुक्तित्वाद्यनभ्युपगमस्यापि सिद्धप्रायत्वाच्च। एवमनेकत्र लोकानुभवस्ववचनस्वसिद्धान्तविरुद्धमेव समयानुगुणं यत्किंचिदुच्यत इत्येतदेव शीलमिवास्य परीक्षकम्मन्यस्येति नेदं विस्मयास्पदम्। तत्सिद्धं बाधकप्रत्ययगवेषणेन विकल्पाटोपेन वा दुरपह्नव एव परमार्थभेद इति। स्यादेतदेवं, यदि प्रतीयमानभेदस्वरूपमेव बाधितुमयं विकल्प इत्युच्येत। न चैवमुच्यते, किन्तु प्रतीयमानभेदस्य पारमार्थ्यनिरासार्थमयं विकल्प

इति। तत्र भेदः परमार्थो न वेत्येव प्रधानविकल्पोऽत्र विवक्षितः। तदर्थतयैवायं धर्मी धर्मो वेति विकल्पः। तादर्थ्यं च धर्मित्वादिना निर्वचने दूषणप्रदर्शनेनानिर्वचनीयत्वोपपादनमुखेनापारमार्थ्यसमर्थनादिति चेन्मैवं। विकल्पशिरोभेदपारमार्थ्याभ्युपगमावश्यंभावस्यापि पूर्वं प्रदर्शितत्वेन तन्निरासेऽपि स्वाभ्युपगतविघातस्य दुस्त्यजत्वात्। क्वचिद्धर्मितया क्वचिच्च धर्मतयाऽपि भेदस्य निर्वचने सति त्वदुक्तदूषणानां दूरोत्सारणेन अनिर्वचनीयत्वसिद्धिप्रत्याशानवकाशाच्च। यद्येकत्र स्वरूपं सर्वत्र स्वरूपमेव, क्वचिद्धर्मत्वे तु सर्वत्रापि धर्म एवेति व्यवस्थापकं नास्ति किंचिदपि। अत एवाहोदयनः यथायथं त्रयमपीत्यादि। अन्यथा त्वेतं विकल्पेनाभेदस्याप्यनिर्वचनीयत्वोक्तेरनिवार्यत्वात्।

## भेदस्यानिर्वचनीयत्वसाधकयुक्त्या अभेदस्यापि तदापादनम्

तदुक्तं अभेदस्स्वरूपं धर्मो वा। स्वरूपं चेत् भेदभ्रमः क्वचिदपि न स्यात्। भेदविरोधिन्यभेदे दृष्टे तदारोपासंभवादित्यादिना। यदप्यत्रोच्यते अधिष्ठानस्वरूपमेवाभेदः, न तु घटादिस्वरूपः, स्वरूपं च केनचन रूपेणावृतमेव भ्रमाधिष्ठानम्। स्वरूपज्ञानेऽपि भेदभ्रमो न विरुद्ध्यते। भेदविरोध्यभेदस्य व्यवहारकालेऽदृष्टत्वात्। अभिन्नो घट इति पदयोः पर्यायत्वं तु घटस्य स्वरूपे कल्पिततयैव प्रतीयमानत्वात्, अधिष्ठानारोप्ययोश्चात्यन्ताभेदाभावाच्च न संभवतीति। तदप्यपेशलम्। घटादिनिष्ठमृदाद्यभेदस्य घटाद्यतिरिक्ताधिष्ठानरूपताया असंभवात्। घटादिधर्मिकभेदभ्रमे घटाद्यतिरिक्तसंवित्स्वरूपसन्मात्रब्रह्मणोऽधिष्ठानत्वाप्रसक्तेः। घटस्सन्निति पारमार्थिकतया प्रतीयमानस्य घटस्य स्वरूपे कल्पिततया प्रतीतेस्त्वनुपलम्भात् बाधितत्वाच्च। घटादिधर्मिकभेदभ्रमे घटादेरेवाधिष्ठानतया अभेदस्य तत्स्वरूपत्वे घटादिस्वरूपग्रहणे भेदभ्रमानुपपत्तेर्दुर्वारत्वात्। अधिष्ठानस्य घटाद्यतिरिक्तत्वेऽपि तस्य निर्विशेषत्वेन तद्ग्रहदशायामावृतानावृतरूपविभागानुपपत्तेः। अभेदस्याधिष्ठानस्वरूपत्वाभ्युपगमे अधिष्ठानज्ञाने सत्यपि अभेदो न दृष्ट इत्युक्तेर्व्याहतत्वाच्च, भेदभ्रमानुपपत्तेस्तदवस्थत्वात्। अभिन्नो घट इति पदयोः पर्यायत्ववारणेऽपि अभेदो ब्रह्म इत्यनयोः पदयोः पर्यायत्वप्रसङ्गस्यानिवार्यत्वाच्च। न ह्यत्रोपाधितस्स्वरूपतो वार्थ-

भेदो भवता वक्तुं शक्यः। अतस्स्वरूपमेवाभेद इत्यवधारणे भ्रमानुपपत्तिपर्यायत्वप्रसङ्गादिदोषा न शक्यवारणा इति तत्परित्यागावश्यंभावे धर्मत्वपक्षमप्यनङ्गीकुर्वतामभेदोऽप्यनिर्वचनीयकोटावेवान्तर्भावनीय आपद्येत इत्यभेदोऽपि भेदवत् त्वयाऽपह्नुत एव स्यात्। न चोक्तदोषसाम्याभ्युपगमेऽपि अबाधितत्वादभेदो दुरपह्नवः। भेदस्तु एकमेवाद्वितीयं नेह नानास्ति किंचनेत्यदिश्रुतिबाधितत्वादपह्नवमर्हतीत्युक्तं युक्तम्। पृथगात्मानं प्रेरितारं च मत्वेत्त्यादिश्रुतिसमधिगतमोक्षसाधनज्ञानविषयभेदस्य श्रुत्यैव बाधायोगात्। कार्यावस्थासजातीयद्वितीयपृथक्सिद्धादिराहित्यपरतयैवान्यथासिद्धानां त्वदुक्तश्रुतिवाक्यानां पृथगात्मानमित्यादिभेदश्रुतिशतविरुद्धार्थकल्पनाया अन्याय्यत्वात्। पूर्वापरपदवाक्यस्वारस्यविरुद्धत्वाच्च। अधिकमन्यत्र। एवमभेदस्वरूपवादे कारणत्वस्योपलक्षणत्वेऽपि कारणं ब्रह्मेति व्यवहारवत् भेदाभावत्वोपलक्षितरूपेणाभेदस्य ब्रह्मरूपत्वेऽपि अभेदो ब्रह्मेति व्यवहारापत्तिरप्यनिवार्या। किं बहुना, भेदापह्नवार्थं भेदस्वरूपत्वपक्षे ये दोषा उक्तास्तेषां सर्वेषामभेदस्वरूपत्वपक्षेऽप्यविशेषात्। यथोपलम्भं धर्मधर्मिरूपत्वाव्यवस्थापक्षमाश्रित्य परिहारस्य भेदविषयेऽपि तुल्यत्वादन्यथा अभेदस्याप्यपह्नवे भेदापह्नवप्रयासो निरर्थक एव। उभयापह्नवे शून्यवादेन माध्यमिकमतापात एव वस्स्यादित्युक्तं दुर्निवारमेव। अतः भेदापह्नवप्रयोजनमद्वैतसिद्धिरेवेति अन्धबधिरप्रायवचनम्। अभेदापह्नवेऽनुमते कथमद्वैतस्य सिद्धिः। न चात्र भेदाभेदयोस्स्वरूपैक्याद्भेदापह्नवे अभेदापह्नवं ब्रूमः। किन्तु स्वरूपभेदेऽपि दोषसाम्यात्। अतस्स्वरूपभेदादभेदो नापह्नुत इत्यनर्थकं वचनम्। सन् घट इत्यादीनां भेदाभेदोभयविषयकत्वात्सर्वोपपत्तिरित्येतदपि नैकस्मिन्नसंभवादित्यधिकरणन्यायपराहतम्। विषमसत्ताकत्वेन व्याघातपरिहारस्तु वैषम्याभावस्य पूर्वमुपपादनेनैव निरस्तप्रायः। श्रीभाष्यककृतां मते तु स्वस्मादभेदोऽन्यस्माच्च भेदस्स्वीक्रियते। न त्वेकस्मादेव भेदाभेदाविति न व्याहृतिप्रसक्तिः, न वाऽन्यतरमिथ्यात्वाश्रयणेन तत्परिहारक्लेशोऽपि।

## भेदसत्यत्वे सर्वं खल्विति सामाधिकरण्योपपादनम्

नन्वेवं सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्यमनुपपन्नं स्यात्। अर्थैक्य एव तदनुशासनात्। ब्रह्माभिन्नतयाऽभिमतेन सर्वप्रपंचेन ऐक्यायोगात्।

अतोऽस्मिन्मतेऽप्यैक्याविरोधाय भेदमिथ्यात्वमाश्रित्यैव प्रकृते सामानाधिकरण्यमुपपादनीयमिति चेन्न। मनुष्योऽहमित्यादाविव शरीरात्मनोः परमार्थभेदेऽपि शरीरवाचिशब्दस्यात्मपर्यन्तबोधकत्वेन सर्वं ब्रह्मेति सामानाधिकरण्योपपत्तेः। न चैवं शरीरमहमिति सामानाधिकरण्येन प्रयोगस्स्यादित्यापादनमुपपन्नम्। गोत्वादिवत् शरीरशब्दस्यापि निष्कर्षकशब्दत्वात्। अतो यथाऽर्थाविशेषेऽपि खण्डो गौरिति प्रयोगवत् खण्डो गोत्वमिति प्रयोगो नास्ति; तथैव मनुष्योऽहमिति प्रयोगेऽपि शरीरमहमिति प्रयोगो न प्रसंजयितुं शक्यः। अत एवान्तर्यामिब्राह्मणादौ शरीरपदस्य वैयधिकरण्येन प्रयोगश्चोपपन्नः। अतो भेदाभेदपक्षवत् भेदमिथ्यात्वपक्षोऽप्यनादरणीयः।

## भेदस्य धर्मधर्म्युभयात्मकत्वे व्याघातपरिहारः

यच्चाभिहितं व्याघातापत्त्या धर्मधर्म्युभयरूपत्वपक्षः न विकल्पित इति। तच्च "अयावत्संभवं विकल्पितं देवानां प्रियेणेति शतदूषण्युक्तं देवानां प्रियत्वमेव सत्यापयति। एकस्यैव विभिन्नधर्मधर्म्युभयरूपत्वेऽभिहिते खलु व्याघातस्स्यात्। न चैवमभिधीयते, परन्तु भिन्नयोरेव। यद्यपि शौक्ल्याद्याश्रयगतो भेदः तदाश्रयस्य धर्मरूपः शौक्ल्यादिरेव। शौक्ल्यादिगतश्च कार्ष्ण्यादिभेदोऽपि तदाश्रयशौक्ल्यादिस्वरूपात्मकतया धर्मिरूपश्चेत्युभयात्मकत्वमेकस्य। तथापि शौक्ल्यादिरूपभेदस्य स्वस्वाश्रयगोचरव्यावृत्तधीहेतुतया संवेदनादिवत्स्वपरनिर्वाहकत्वमाश्रयाद्यपेक्षया धर्मरूपभेदत्वं स्वगतभेदापेक्षया धर्मिस्वरूपत्वं चेति यथाप्रतीत्युपगमेऽपि नह्यस्ति व्याहतिप्रसक्तिः। एकस्यैव धर्मधर्मिभावश्चात्र विभिन्नप्रतियोगिकतया अव्याहत एवेति वक्तुं शक्यम्।

वस्तुतस्तु शौक्ल्यादिरूपभेदस्य न धर्मिरूपत्वमपीष्यते, किन्तु धर्मरूपत्वमेवेति न विरोधशङ्कावकाशः। यत्र च मिथो विभिन्नावेव धर्मधर्मिणौ भेदरूपौ तत्र धर्मिरूपभिन्नाद्धर्मरूपभेदो भिन्न एव। यथा सौरभविशेषस्येतरभेदस्तद्धर्मिद्रव्यविशेषरूपः, तस्येतरभेदस्तु तद्धर्मविशेषरूप इति। यथा चात्र नान्योन्याश्रयस्तथोक्तं शतदूषण्याम्। अतो यथासम्भवं कश्चिद्धर्मोऽपरो धर्मीत्येवमुभयो वेति प्रकारान्तरानाविष्करणात् विकल्पस्य न्यूनत्वमुद्भावितमपरिहार्यमेव।

## सर्वज्ञानयाथार्थ्याख्यातिवादयोः शुक्तित्वादेर्भेदत्वसमर्थनम्

यत्तु यथार्थं सर्वविज्ञानमिति स्वीकुर्वतां श्रीभाष्यानुयायिनां मते शुक्तित्वं न रजतभेदतामर्हति, रजतभ्रान्तिप्रतिपक्षोपलम्भत्वाभावात् । अतो न धर्मस्य भेदतावादो युक्त इति । तदसत्, शुक्तिरजतज्ञानस्य तद्वति तत्प्रकारत्वेन यथार्थत्वेऽपि तत्र बाध्यव्यवहारहेतुत्वेन भ्रान्तिव्यवहारस्याप्यभ्युपगमात् । बाध्यव्यवहारश्च वस्तुतः शुक्तिलीनरजतस्याभीष्टाङ्गुलीयकाद्यर्हभिन्नत्वेऽपि तदग्रहणाद्भवति । शुक्तित्वोपलंभे च तत्संसृष्टरजते अङ्गुलीयकादियोग्यभेदग्रहात् बाध्यव्यवहारानुद्भवेन न तद्धेतुतया भ्रान्तित्वसंपत्तिरिति भ्रान्तिप्रतिपक्षोपलम्भत्वसंभवेन व्यावृत्तव्यवहारहेतुत्वरूपनिमित्तान्तरसंप्रतिपत्त्या च शुक्तित्वरूपधर्मस्य रजतभेदरूपतायामनुपपत्त्यभावात् । तदुक्तं 'योग्यायोग्यादिभेदाग्रह इह चरमां गाहते संप्रतिष्ठा'मिति ।

एतेनाख्यातिवादे शुक्तित्वादेरजतादिभेदत्वानुपपत्तिरपि परास्ता । उक्तदिशा तत्रापि शुक्तित्वादेः भेदपदप्रवृत्तिनिमित्तोपपादनसंभवात् शुक्तित्वादिधर्मश्च चाक्षुषप्रत्यक्षविषयस्संस्थानविशेषः सितासितावयवादिसंस्थानविशिष्टं पुरोवर्तिनं साक्षात्करोमीति शुक्त्यादिसंप्रयुक्तचक्षुषां सर्वेषामेवानुभवदर्शनात् दुरपह्नवः । तथेतरभेदस्यानुभवसिद्धत्वेऽपि शुक्त्यादौ संस्थानाद्यतिरेकेण तस्य कस्याप्यदर्शनात् संस्थानस्यैव व्यावृत्तबुद्धिहेतुत्वदर्शनाच्च संस्थानात्मकत्वमेव युक्तमुपगन्तुमित्युक्तम् । अत एवेतरव्यावृत्तेरेव धर्मरूपत्वात्तदतिरिक्तधर्मस्वरूपस्यैवाभावाद्धर्मस्य भेदत्ववादोऽयं भेदस्यैव भेदतावाद इति परकीयपरमार्थवचनं न प्रतिकूलम् । अथापि शुक्तित्वादिसंस्थानेतरभेदयोरनतिरेके संप्रतिपन्ने सति तस्य स्वरूपतो ग्रहणेप्रतियोग्यादिग्रहणनैरपेक्ष्यस्योपपादनेन स्वरूपेण सह युगपदेव तस्य प्रत्यक्षेण ग्रहणसम्भवस्य सन्मात्रग्राहिप्रत्यक्षभङ्गे समर्थितत्वेन यदिहास्य प्रत्यक्षाग्राह्यत्वाविद्यकवृत्त्यन्तरविषयत्वमिथ्यात्वादिकल्पनं तन्निर्मूलमेव । तदेवं शुक्त्यादिषु रजतादिभेदस्य शुक्तित्वादिधर्मरूपत्वोपपादनात् शुक्तित्वादिधर्मनिष्ठेतरभेदस्य च भेदाधिकरणकतयाऽधिकरणस्वरूपत्वाच्च भेदस्य यथासंभवं पारमार्थिकधर्मस्वरूपोभयरूपत्वमव्याहतं सुवचमेवेति सिद्धम् ।

## सन् घट इत्यत्र भासमानयोर्धर्मधर्मिणोरुभयोरपि पारमार्थिकता

यश्चात्र निष्कर्षः सन् घट इत्यादौ प्रतीयमानघटत्वादिरूपभेदस्य व्यावृत्तव्यवहारहेतोश्शुक्तित्वादेरिव परमार्थतो दुर्वचत्वाद् व्यावहारिकपारमार्थिकयोर्धर्मधर्मिणोर्यथासंभवं भेदत्वकल्पना नोपपद्यत इति । स चापाततः, घटत्वादिरूपभेदस्य पृथुबुध्नोदराकारादिसंस्थानरूपस्य व्यावृत्तहेतोः प्रत्यक्षादिप्रमाणप्रमितस्याबाध्यतया पारमार्थिकत्वस्थापनात् । मृत्तिकेत्येव सत्यमिति श्रुत्याऽप्यबाधितप्रत्यभिज्ञाबलेनानन्यतया समर्थितस्य पारमार्थिकमृदादेरेव धर्मित्वेन च भवदुक्तवैषम्यप्रसक्तेरेवात्राभावात् । सन् घटः घटोऽस्तीत्यादौ अस्ति ब्रह्मेत्यादाविव धर्मभूतसत्ताया एवास्ति सन्नित्यादिना भानं, न तु धर्मिरूपसन्मात्रब्रह्मण इति प्रागेवोपपादितम् । अतस्सन् घट इत्यादौ धर्मितया भानं घटत्वावस्थापन्नमृत्स्वरूपस्यैवेति व्यावहारिकपारमार्थिकभावेन विषमसत्ताकयोर्धर्मधर्मिभावप्रसक्तिरेव हि नह्यत्रास्ति । एवं संस्थानरूपघटत्वादेरेव भेदत्वोपपादनेन भेदस्तु किंरूप इति न कथमपि सुवचमनिर्वचनीयतैव तत्र शरणीकर्तव्येत्युक्तमपि प्रत्युक्तम् । प्रत्यक्षादिसामग्र्या विशेषणविशेष्यभावेन प्रतीतिबलादेव धर्मधर्मिभावग्रहात् भेदस्य धर्मधर्मिभावरूपत्वोपगमे धर्मधर्मिभावग्रहातिरेकेण भेदग्रहाभावाच्च भेदग्रहाद्धर्मधर्मिभावग्रहः, तेन च भेदग्रह इत्यन्योन्याश्रयणाद्युद्भावनमपि प्रत्यूढम् । धर्मधर्मित्वादिरेव भेद इति च नास्मन्मतानुवादः । अत एव धर्मधर्मित्वादेर्भेदत्वमभ्युपेत्यैतदुक्तम् । वस्तुतो जात्यादेरेव भेदत्वात्तस्य च वस्तुना सहैव ग्रहणात् नान्योन्याश्रयशङ्काऽपीत्याह स चेति चण्डमारुतम् । संस्थानरूपभेदग्रहस्य चक्षुरादिनैव जननोपपादनान्नाविद्याधीनता। सन् घट इति प्रत्यक्षस्य सत्ताविशिष्टघटग्राहकतया सन्मात्रब्रह्मविषयकत्वमेव नास्ति । कुतस्तत्र प्रामाण्यम् । प्रत्यक्षविषयत्वे च ब्रह्मणोऽभिमते दृश्यत्वेन भवन्मते जडत्वं, शास्त्रस्यानुवादकत्वेनाप्रामाण्यं च दुर्निवारमित्युक्तमेव । निरूपितं च सन् घट इत्यादौ घटादीनामबाधितत्वं परस्तादप्युपपादयिष्यते । सन् घट इत्यादौ घटादीनां बाधे तुल्यन्यायात् न सन् घटः, नास्ति घट इत्यादिप्रत्ययेन सतोऽपि बाधप्रसङ्गे शून्यवाद एव परिशिष्येतेत्युक्तम् । स्वतस्सिद्धतयाऽभिमतस्य प्रमाणान्तरापेक्षा च [illegible] न घटते, प्रत्यक्षादेस्तात्त्विकं प्रामाण्यं

च न सम्मन्यते । अथापि सन्मात्रप्रत्यक्षोपगमो भेदद्वेषमेव ते व्यनक्ति । असति भेदे जडतादात्म्यं ब्रह्मणो दुर्वारमेव स्यादित्यसकृदुक्तम् । ब्रह्मणो नित्यनिर्विशेषत्वे च स्वप्रकाशस्य तस्यावृतानावृतभेदश्च दुर्वच इत्युक्तम् ।

**ब्रह्मणो भेदभासकत्वानुपगमे तमेव भान्तमिति श्रुति-तद्भाष्यादिविरोधः**

ब्रह्मणो घटादिभेदभासकत्वानङ्गीकारे तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीत्यादिश्रुतिवाक्यतद्भाष्यादिविरोधश्च ते दुष्परिहरस्स्यात् । तथा च भाषितं न सूर्यादीनामेव श्लोकपरिपठितानामिदं तद्धेतुकं विभानमुच्यते किं तर्हि, सर्वमिदमित्यविशेषश्रुतेः सर्वस्यैवास्य नामरूपक्रियाकारकफलजातस्य या अभिव्यक्तिः सा ब्रह्मज्योतिस्सत्तानिमित्तेति । तथा ब्रह्मणोऽपि चैतन्यरूपस्य समस्तजगदवभासहेतुत्वादुपपन्नो ज्योतिश्शब्द इति च । अतस्सद्रूपस्य ब्रह्मणो न भेदभासकत्वमित्युक्तं तु स्वभाष्यविरुद्धत्वात् दुरुक्तमेव । सर्वथा भेदस्याविद्यकवृत्तिविषयत्वादपारमार्थ्यमित्युक्तिरयुक्तैव । प्रमाणविषयत्वस्योपपादितत्वेन पारमार्थिकत्वावश्यंभावात् । अद्वैतश्रुतिश्च विशिष्टविषया, न तु निर्विशेषविषयेति प्रपञ्चितमनेकत्र ।

**खण्डनग्रन्थदूषणम्**

यच्चोक्तं खण्डनखण्डखाद्यं तु भेददुर्वचत्वे बहु पराक्रमते, यस्योत्तरं लेशतोऽपि शतदूषणी न ददातीति । तच्चानवबोधनिबन्धनम् । प्रथमत एव भेदप्रत्ययतत्कारणतद्विषयाबाध्यत्वादिनिरूपणानन्तरमेव च सामान्यतस्स्थापिते भेदे न पृथक्जल्पानामुत्तरापेक्षेत्युक्त्यैव सामान्यतः खण्डनोक्तानां सर्वेषामपि दत्तोत्तरत्वात् । कस्यचिद्वस्तुनः प्रतीयमानत्वे बाधासंभवे च निरूपिते तदनन्तरमशक्येऽपि तन्निर्वचने तावता न हि तदपह्नवसंभवः, अशक्यनिर्वचनाश्चार्थाः कतिकति सर्वानुभवसिद्धतया दुरपह्नवा न सन्ति । यथोक्तं दण्डिना

**इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत् ।**
**तथापि न तदाख्यातुं सरस्वत्याऽपि शक्यते ।।** इति

विशिष्य खण्डनोक्तानां सर्वेषामनुवादस्याप्यनर्हता पृथक्जल्पानामित्युक्त्या सूच्यते । अनुवादार्हातपृथक्कार्या जल्पा पृथग्जल्पाः । अनुवादानर्हता च

उन्मत्तवाक्यवद्व्याघातादिदोषप्राचुर्यात् । न च व्याहतमप्युत्तरार्हं यथाहोदयनाचार्यः भेदज्ञानमेव नास्तीति कल्पमधिकृत्य तत्र प्रथमस्सर्वतो विरोधादनन्तर इति । खण्डनोक्तं च प्रायस्तदुक्त्यैव व्याहन्येत । तथा हि तत्राह

नानात्वमवलम्ब्यापि वदत्यद्वैतवादिनि ।
असिद्धभेदाद्व्याघातः पतेदापादकात्कुतः ।। इति ।

तत्र नानात्वावलंबने कथं भेदासिद्धिः । तथासति अविद्याविद्यमानभाव-भेदोपगमश्चाग्रे न कथं व्याहन्यते । तथा स्वरूपभेदवादे घटपटयोर्हि स्वरूपं यत्परस्परस्माद्भेदः तत्परस्परमनन्तर्भाव्य न भवतीत्यादिना घटपटयोरैकात्म्यमेव भेदग्राहिणा प्रत्यक्षेणावगाहितमिति यदुक्तं तत्रापि परस्परान्तर्भूतत्वोपगमेऽपि कथं परस्परैक्यम् । न हि दण्डिन्यन्तर्भूतो दण्ड इत्येतावता दण्डदण्डिनोरैक्यं कश्चिदमूढः प्रत्येति । न चानृतादिव्यावृत्त्यभिधायिना सत्यादिवाक्येन ब्रह्मण्यनृतादेरन्तर्भावमैक्यं वा प्रत्याय्यत इत्युपगम्यते ।

एतेन प्रतियोगितायाः प्रतियोगिस्वरूपत्वे प्रतियोग्यनुयोग्यैक्याद्यापादनमपि व्याख्यातम् । एवमभेदं नोल्लिखन्ती धीर्न भेदोल्लेखनक्षमा । तथा चाद्ये प्रमा सा स्यान्नान्त्ये स्वापेक्ष्य वैशसादिति वचनमप्युपहास्यम् । भेदग्रहस्यैवाभेदग्रहं प्रत्युपजीव्यत्वेन विपरीतवचनात् । भेदस्य स्वरूपत्वे सर्वासामेव धियां भेदोल्लेखिताया अवश्यंभावाच्च । अतिरिक्तान्योन्याभावादिकल्पदूषणेषु तत्कल्पानुपगमादेव न प्रतिवक्तव्यमस्ति । का चेयं वाचोयुक्तिः । यदन्यसाकाङ्क्षं पटस्य स्वरूपमन्येन प्रतियोगिना निरूप्यमाणं ततो भेदो भवतीत्यप्यनभियुक्तचोद्यम् । एकस्यैव रूपभेदेनान्यसाकाङ्क्षत्वनिराकाङ्क्षत्वोभयस्याप्यनेकत्र दर्शनात् । यथा चैत्रत्वादिना निराकाङ्क्षस्यापि पितृपुत्रत्वादिनाऽन्यसाकाङ्क्षता, यथा वा अभावाभावास्यातिरेकेऽनवस्थाभिया प्रतियोगिरूपत्वोपगमे प्रतियोगिनस्स्वरूपतो निराकाङ्क्षत्वेऽप्यभावत्वेन प्रतियोगिसाकाङ्क्षताऽपि ह्यनुभवसिद्धतया संप्रतिपद्यते । तेन घट इत्यादिव्यवहारेऽर्थैक्येऽपि प्रवृत्तिनिमित्तभेदेन प्रतियोगिज्ञानादिसापेक्षताया-मनुपपत्त्यभावात् । तथा चोक्तं सप्रतियोगिकत्वाप्रतियोगिकत्वविकल्पोऽपि भिन्न इति व्यवहारमात्रस्य प्रतियोगिनिरूपिताकारे व्युत्पन्नत्वात् प्रतियोगि-

साकाङ्क्षतेति निरस्त इति। सर्वत्र धर्म्येव भेदः, धर्म एव वेति नियमान-भ्युपगमेन क्वचिद्धर्म एव स्वस्वाश्रययोरितरभेदः। क्वचिच्च धर्म्यादिरपि स्वधर्मादेरित्यनियमोपगमेनान्यतरकल्पद्वयोक्तदूषणानां दूरोत्सारणात्। तथा च खण्डनग्रन्थोक्तानामर्भकप्रायचोद्यानां केषांचित् शतदूषण्यां विशिष्यानन्-वादेऽपि तत्र सर्वेषामपि खण्डनोक्तानां सामान्यतो विशेषतश्च निपुणदृष्ट्या प्रत्तमेव सम्यगुत्तरमिति न शतदूषणीविदां सन्निधौ खण्डनग्रन्थमादाय प्रत्यवस्थातुं शक्यमिति ध्येयम्।

## सत्त्वाच्चापरस्येति सूत्रभाष्याद्यसामञ्जस्यम्

अत एव 'सत्त्वाच्चापरस्ये'ति सूत्रभाष्यभामतीतव्याख्यावाक्योपादानमत्र निष्प्रयोजनमेव। अनन्यत्वाधिकरण एव हि तत्सूत्रं, कार्यकारणयोरनन्यत्वम-भेद एव तदधिकरणे प्रतिपाद्यते, न तु कार्यमिथ्यात्वमपीत्युपपादितं पुरस्तादेव। अयमर्थस्सत्त्वाच्चापरस्येति सूत्रशंकरभाष्यवाक्यस्वारस्यादपि स्फुटमवगम्यते। एवं हि तत्र भाषितं प्रागुत्पत्तेः कारणात्मनैव कारणे सत्त्वमवरकालीनस्य कार्यस्य श्रूयते, सदेव सौम्येदमग्र आसीदित्यादावित्युप-पाद्य यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति एवं कार्यमपि जगत् त्रिषु कालेषु सत्त्वं न व्यभिचरति। एकं च पुनस्सत्त्वं, अतोऽप्यनन्यत्वं कारणात्कार्यस्येति। अत्र कार्यस्य पूर्वमपि कारणात्मना सत्त्वमेव स्फुटी-क्रियते, न त्वसत्त्वं मिथ्यात्वं वा। यथा चेति वाक्यद्वयेन ब्रह्मसमानसत्ता-कत्वप्रतिपादनात् कार्यस्यापि जगतः पारमार्थिकत्वमेव हि व्यक्तीकृतम्। तत्र च कारणे सत्त्वं कार्यस्येत्युपक्रमस्थसत्त्वपदवत् सत्त्वं न व्यभिचरति, एकं च पुनस्सत्त्वमित्यत्रापि सत्त्वपदं धर्मभूतसत्त्वपरमेव युक्तमाश्रयितुम्। न्यूना-धिकभावभेदविरहेण कालत्रयानुगतसत्त्वरूपधर्मस्याविशेषेणाभेदोपपादनसंभ-वात्। तथाऽपि स्वसमीहितार्थे भाष्यनिनीषया भामत्यां सन्मात्रपरमित्युप-गम्य अभिन्नसत्तानन्यत्वात् कार्यकारणयोरभेदं प्रथममुपपाद्यानन्तरं कार्यका-रणाभ्यामनन्यत्वात्सत्ताया भेदप्रसङ्गस्य परिहारव्याजेन तत्र भेदाभेदयोरन्य-तरसमारोपकल्पनायां किं तात्त्विकाभेदोपादानाभेदकल्पना आहो तात्त्विकभेदो-पादाना अभेदकल्पनेति विचिकित्सामुत्थाप्य वयं तु पश्यामः भेदग्रहस्य प्रति-योगिग्रहापेक्षत्वात् भेदग्रहमन्तरेण च प्रतियोगिग्रहासंभवादन्योन्यसंश्रयापत्तेः।

अभेदग्रहस्य च निरपेक्षतया तदनुपपत्तेरेकैकाश्रयत्वाच्च भेदस्य एकाभावे तदनुपपत्तेः अभेदग्रहोपादानैव भेदकल्पनेत्युक्तम् । तत्रान्योन्यसंश्रयः घटत्वादिधर्मरूपाणां भेदानां प्रतियोगिग्रहणनैरपेक्ष्येणापि ग्रहणोपवर्णनादेव परिहृतप्रायः । उक्तं च सर्वार्थसिद्धौ घटपटौ हि गृह्यमाणौ युगपदेव घटत्वपटत्वाश्रयावेव गृह्येते, तावेव धर्मौ भेदौ । इतरेतराध्यासविरोधित्वात् स्वस्मिन्नपि तत्तदध्यासविरोधित्वात् स्वात्मनोऽपि भेदस्तावेव । अतो नान्योन्यशङ्काऽप्यङ्कुरति । कथं तर्हि प्रतियोगिनिरपेक्षणां धर्माणां भेदत्वमिति चेदित्थम्-यदा शुक्लत्वकृष्णत्वादयस्स्वरूपेण प्रतीतिविषयाः परस्पराध्यासं व्यावर्तयन्ति तदा शुक्लत्वकृष्णत्वादय इति व्यवह्रियन्ते । कुर्वन्ति चाध्यासनिवर्तनं तेनेव स्वरूपेण । यदा पुनरध्यासनिवर्तकत्वरूपधर्मान्तरवैशिष्ट्येन व्यवह्रियन्ते तदा भेदा इत्युच्यन्ते । तेन तेषामेव धर्माणां स्वरूपेण व्यवह्रियमाणानां न प्रतियोगिसापेक्षत्वम् । अध्यासनिवर्तकत्वरूपधर्मान्तरवैशिष्ट्येन व्यवह्रियमाणानां प्रतियोगिसापेक्षत्वमिति न कश्चिद्विरोधः । यथा घटे दण्डादीनां व्याप्रियमाणानां दण्डादिव्यवहारे न प्रतियोग्यपेक्षा घटकारणत्वव्यवहारे प्रतियोग्यपेक्षेति । भेदत्वेन रूपेण प्रतियोगिनिरूपिताकारेण ग्रहणे व्यवहरणेऽपि च भेदप्रतियोगित्वेन भेदभिन्नत्वेन वा प्रतियोगिनो ग्रहणमपि नापेक्ष्यते । प्रतियोगित्वादेस्संसर्गतयैव भानात् । किन्तु प्रतियोगितावच्छेदकं यत् घटत्वादिकं तेनैव रूपेण प्रतियोगिनो ग्रहणमेवापेक्षितम् । अभावग्रहस्य विशिष्टवैशिष्ट्यावगाहितया भिन्नसामग्रीवेद्यविशेषणतावच्छेदकप्रकारकनिर्णयसापेक्षत्वावश्यंभावात् । घटत्वादिग्रहणे च भेदग्रहणमनपेक्षितम् । चक्षुरादिघटितप्रत्यक्षादिसामग्र्यैव तत्संभवात् इति नान्योन्याश्रयः । न चैवं रजतादेरन्यप्रतियोगित्वेन रजतत्वेन वा ग्रहे तावता शुक्त्यादौ रजतादिभेदग्रहप्रसङ्गः भ्रमहेतुदोषादिप्रतिबन्धकाभावे सतीष्टत्वात् । सति च प्रतिबन्धके भ्रमहेतुदोषे सामग्र्यभावेन भेदग्रहात्मक कार्योत्पत्तिप्रसङ्गायोगाच्च । भेदस्यैकाश्रयत्वोपगमेऽपि आश्रयगतरूपादिधर्मान्तरवदैक्यस्यापि तद्गतस्य भेदाश्रयतायामप्रयोजकतया सत्तैक्यस्य कार्यकारणभेदं प्रत्युपजीव्यत्वाप्रसक्त्या चाभेदोपादाना भेदकल्पनेति स्वदर्शनमपि ह्यविमर्शनिबन्धनम् । न च कार्यकारणयोस्सद्रूपाभेदप्रतीतिमपेक्ष्यैव तयोस्सत्यभेदप्रतीतिस्संपादनीयेति वाच्यम् । कार्यकारणयोस्स्वतस्सत्यत्व-

प्रतीत्यैव भेदसत्यत्वप्रतीत्युपपत्तेः ।

एतेन—

**आपेक्षिकत्वाद् भेदो हि भेदग्रहपुरस्सरः ।**
**नैकज्ञानं समीक्ष्यैकं न भेदं तत्त्वहानतः ॥**

इति ब्रह्मसिद्धिरपि प्रत्युक्ता । अभेदस्याप्यापेक्षिकत्वात् । न हि स्वेनाभिन्नं सर्वतोऽप्यभिन्नमिष्यते । अतः अभेदोऽप्यैक्यधीसापेक्ष इति वक्तुं शक्यत्वात् । भेदाभावरूपस्याभेदस्यापि प्रतियोग्यपेक्षत्वाविशेषेण भेदसमीक्षणावश्यंभावस्य तुल्यत्वात् । करचरणाद्यवयवभेदग्रहणमपेक्ष्यैव शरीरैक्यग्रहणदर्शनाच्च ।

वस्तुतः अनन्यत्वाधिकरणे कार्यकारणयोरभेदोपदेशेन विरोधात्तयोः भेदस्य कल्पनोपगमेऽपि कारणकारणतावच्छेदककार्यकार्यतावच्छेदकादीनां मिथो विद्यमानस्य सत्यभेदस्य न निरसनसंभवः । विशिष्टमेव च कार्यं कारणमपि, न तु निर्विशेषमिति निरूपितमन्यत्र । अतो घटत्वादिकमेव स्वस्वाश्रययोरितरेभ्यस्सत्यभेदः, भेदरूपत्वेन तदाश्रयत्वायोगादेव-घटत्वमितरभिन्नमिति प्रयोग औपचारिक इष्यते । तद्ग्रहणे च प्रतियोग्यादिग्रहणनैरपेक्ष्यस्य निरूपणेन च यत्पुनरन्योन्याश्रयणप्रसङ्ग इत्यनिरूपकाणामाघोषणं, तदपि प्रशमितम् । व्यावहारिकभेदवादेऽपि अन्योन्याश्रयादिः परिहर्तव्य एव । व्यावहारिकतयाऽभिमतानां घटादीनामप्युत्पत्तिग्रहणकारणव्यवस्थातिलङ्घनादर्शनात् । तदुक्तं, न ह्यविद्येत्येवात्माश्रयनिवृत्तिः । तथासति घटादयोऽपि कुलालादिनिरपेक्षास्स्वयमेव भवेयुरिति । अतस्सत्यत्वे लोकमर्यादया प्राप्तं भेदग्रहघटितकारणकलापं विना भेदप्रतीतिर्न संभवतीति यदुच्यते तत्र सत्यत्वे इत्यनेन व्यावहारिकसत्यत्वमेव भवता विवक्षणीयम् । व्यावहारिकत्वेनाभिमताया लोकमर्यादाया व्यावहारिकसत्येष्वेव प्रवृत्तिसंभवात्, व्यावहारिकेष्वेव लोकव्यवहारदर्शनात् । अत एव प्रातिभासिकतयाऽभिमतमैन्द्रजालिकं चात्र न निदर्शनतामर्हति । अन्यथा भेदस्य प्रातिभासिकत्वमप्यापद्येत । यदि भेदः प्रातिभासिको न स्याद्युक्तिविरुद्धो न स्यादित्यप्यापादनसंभवादभिमतविशेषविरोधः । मायामयत्वेनैकीकरणे च ततोऽन्यत्र

लोकमर्यादाप्रदर्शनमेव ते दुर्घटमापद्येत । युक्तेरेवासिद्धया कथं युक्तिविरोधग्रहः । न ह्रीश्वरोऽपि गगनपर्वतादीन् वैपरीत्येन सृजतीत्यादिपरिमलवाक्येनापि व्यावहारिकप्रपंचेऽपि व्यवस्थानतिलङ्घनमेव ह्यभ्युपगम्यते । ऐदम्पर्येण ब्रह्मणि प्रमाणतया शारीरके विचारितानां कारणवाक्यानां अध्यारोपापवादेन ब्रह्मैक्यपरतया स्वार्थतात्पर्यविरहात् मायिकप्रपंचसृष्टिर्यथातथाऽस्त्विति विवेचनं च हार्दं बाह्यसौहार्दमेवाभिव्यनक्ति । सिद्धपरवेदवाक्येष्वध्यारोपापवादनयो न संभवतीत्युक्तमनेकत्र ।

## भेदपारमर्थ्यनिगमनम्

तदेवं भासमानस्य भेदस्य तर्काभासेनानिर्वाच्यत्वे अभेदस्यापि तत्प्रसङ्गात्, धर्मस्वरूपादिपक्षान्तर्भावेण भेदस्य निर्वचनीयत्वसंभवात् । बाधकतयाऽभिमतस्य प्रतियोगितयाऽनवच्छिन्नाया अपि भेदविषयताया अवश्यंभावेन बाधकत्वायोगाद् भेदसाधकस्य श्रुत्यादिसकलप्रमाणानुग्रहाच्च भेदः पारमार्थिक एवेत्युक्तम् । उक्तं च ब्रह्मण्यनृतादिव्यावृत्तेः पारमार्थित्वावश्यकत्वम् । अन्यथा सत्यादिवाक्यानामपि तत्त्वावेदकत्वरूपप्रामाण्यानुपपत्तेः ।

## अनृतादिव्यावृत्तेरपि मृषात्वे दूषणम्

एतेनानृतस्य मृषात्वेन तद्व्यावृत्तेरपि मृषात्वमित्यपास्तम् । प्रतियोगितदभावान्यतरसत्यत्वावश्यंभावाच्च । अन्यथा असद्व्यावृत्तेरप्यसत्त्वापत्याऽसत एवासिद्धया सर्वशून्यत्वापत्तेः । एवं प्रातिभासिकरूप्यव्यावृत्तेरपि प्रातिभासिकत्वापत्त्या इदं रजतं नेदं रजतमिति प्रत्यययोर्मिथ्याविषयकत्वाविशेषेण भ्रान्तिबाधकत्वव्यवस्थानुपपत्तेश्च । न च विशेषदर्शनजन्यत्व तदभावाभ्यां विशेषः तत्सत्त्वेऽपि बाध्यविषयत्वोपगमे सति तस्याकिंचित्करत्वात् । आप्तोपदेशजन्यरजतभेदज्ञानस्य बाधकत्वानुपपत्तेः । स्मृत्यादिद्वारा परम्परया आपणस्थरजतविषयकविशेषदर्शनप्रयोज्यत्वस्य शुक्तिरजतभ्रमसाधारण्याच्च । न च नेदं रजतमिति भासमाने रजतभेदे व्यावहारिकरजतस्यापि प्रतियोगितया प्रातिभासिकमात्रप्रतियोगिकत्वाभावेनास्य न प्रातिभासिकत्वमिति वाच्यम् । प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति न्यायेन इदं रजतं, नेदं रजतमित्यनयोः प्रतीत्योरेकरजतविषयकत्वावश्यंभावात् ।

अन्यथा आपणादिस्थव्यावहारिकसर्वरजतस्याप्यनेन बाधितत्वापत्तेः । तथा ब्रह्मप्रमातिरिक्तज्ञानबाध्यत्वोपगमे व्यावहारिकत्वानुपपत्त्या रजतसामान्यस्यैव प्रातिभासिकत्वापत्तेश्च । नेदं रजतमिति प्रतीतेः प्रातिभासिकरजतमात्र-प्रतियोगिकप्रातिभासिकभेदावगाहितायास्त्वन्मते दुर्वारत्वात् । प्रातिभासिका-वगाहितया चागन्तुकातीन्द्रियदोषविशेषजन्यत्वोन्नयनमपि तवानिवार्यमाप-द्येत । अतोऽनृतादेः मृषात्वेऽपि तद्व्यावृत्तिः ब्रह्मणि पारमार्थिकीत्येवोपगमे च न कश्चिदस्ति दोषः ।

वस्तुतस्तु अनृतजडादिकमप्यचिद्वस्तु, तन्मिश्रं चिद्वस्तु च पार-मार्थिकमेवेति सृष्ट्यादिपरसकलप्रमाणसिद्धं दुरपह्नवमित्यसकृदुक्तम् । किं च परमार्थभेदानभ्युपगमे भेदाभेदयोरपि भेदाभावादन्यतरखण्डनसाधनाभ्यामु-भयखण्डनसाधनप्रसङ्गोऽपि दुर्वारः । न च कल्पितभेदेन व्यवस्थोपपत्तिः । कल्पितेनाकल्पितकार्यप्रतिबन्धायोगात् । न चाविद्यया स्वप्रकाशब्रह्मकार्य-प्रतिबन्धः, मानाभावादनभ्युपगमाच्च । न च कल्पितकान्तया विश्लेषकार्य-प्रतिबन्धः । तज्ज्ञानेनैव तत्संभवात् । न च तदपि कल्पितविषयकत्वात्क-ल्पितमिति वक्तुं युक्तम् । ज्ञानमपि नोत्पन्नमिति बाधादर्शनेन तस्याकल्पित-त्वावश्यंभावात् । अन्यथा ब्रह्मणोऽपि कल्पितत्वापत्तेः । कल्पितसर्वजगद्भास-कत्वात् । तस्य भासा सर्वमिदं विभातीत्यत्र तथैव हि भाषितमित्युक्तम् । तत्सिद्धं पारमार्थिको भेदोऽवश्यमभ्युपगन्तव्य इति । स च प्रत्यक्षादिसकल-प्रमाणसिद्धः । प्रत्यक्षादेः प्रमाणत्वानभ्युपगमे तत्सिद्धस्वरूपमात्रस्यापि मिथ्यात्वाज्जितं माध्यमिकेनेत्यप्युक्तम् । एवं प्रमाणप्रमेयानुपपत्तिनिरासात् भेदपारमार्थ्यं दुरपह्नवमेव । श्रूयते हि "क्षरात्मानावीशते देव एकः" "द्वा सुपर्णा इत्यादावनेकत्र परमार्थचिदचिदीश्वरभेदः । गीतश्च भगवता "क्षर-स्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते" उत्तमः पुरुषस्त्वन्य इत्यादिना । तस्मादैक्यवादानां विशिष्टपरत्व एव सामञ्जस्यं न तु निर्विशेषपरत्व इति ध्येयम् ।

---

## वेदप्रामाण्यपरिग्रहानुपपत्तिवादः

अत एव निर्विशेषवादिनां वेदप्रामाण्यपरिग्रहोऽप्यनुपपन्न इत्युच्यते। तेषां मते वेदस्यापि निर्विशेषसन्मात्रातिरिक्तस्याविद्याख्यदोषमूलकत्वेन मिथ्यात्वाभ्युपगमाच्च। न हि मिथ्याभूतमपि प्रमाणं नाम सम्मन्यते। सौगतागमस्यापि प्रमाणतया परिग्रहापत्तेः। न च संभावितदोषत्वासंभावितदोषत्वाभ्यामुभयोर्विशेषस्तन्मते वक्तुं शक्यः; आविद्यकतयाऽभ्युपगतस्य वेदस्याप्यसंभावितदोषताया दुर्वचत्वात्। न च पौरुषेयत्वापौरुषेयत्वाभ्यां विशेषस्वीकारान्न साम्यमित्युक्तं युक्तम्। दोषमूलत्वाभ्युपगमे सति पुरुषस्वातन्त्र्यानभ्युपगमस्याकिंचित्करत्वात्। दोषमूलत्वनिबन्धनाप्रामाण्यशङ्कानिवारणाय हि पुरुषस्वातन्त्र्यं प्रतिषिध्यते। तथा चोक्तं वार्तिके

**तत्रापवादनिर्मुक्तिः वक्त्रभावाल्लघीयसी।**
**वेदे तेनाप्रमाणत्वं नाशङ्कामपि गच्छति॥** इति

यदि दोषमूलत्वमभ्युपगम्यते तर्हि वक्त्रभावविशेषोपन्यासेन किमिह साधितं स्यात्। न चाप्रामाण्यहेतोः कर्तृदोषस्येह प्रसक्त्यभावप्रदर्शनात्प्रामाण्यमेव साधितं स्यादिति वाच्यम्। कर्तृव्यतिरिक्तगतदोषेणाप्यप्रामाण्यदर्शनात्। प्रपञ्चितं चैतच्छतदूषण्यामेव वक्तृदोषो वेदे नाभ्युपेत इति चेत् किं दुष्टेन्द्रियादिषु सोऽभ्युपेतः? येन तदप्रामाण्यं सिद्ध्येत्। अतो येन केनापि दोषेणाप्रामाण्यं स्यादित्यनुसन्धत्स्वेति।

## वेद-सौगतागमवैषम्यायोगः

अत एव प्रमाणान्तराधिगतानधिगतार्थकत्वाभ्यां वैलक्षण्यवचनमप्यकिंचित्करम्। प्रमाणान्तरानधिगतानामप्रामाणिकार्थानां बहूनां सौगतागमेऽपि प्रतिपादनाच्च। एवं प्रामाणान्तरसापेक्षत्वतदभावाभ्यां वैषम्योपपादनमपि निष्प्रयोजनम्। श्रवणादौ मानान्तरसापेक्षताया वेदेऽपि विद्यमानत्वात्, अप्राप्तार्थे तदनपेक्षताया अन्यत्रापि सत्त्वाच्च।

वस्तुतस्त्वद्वैतमत एव प्रत्यक्षादेरपि सन्मात्रग्राहित्वोपगमादनधिगतार्थाभावेन वेदान्तशास्त्रस्य न मुख्यं निर्विशेषब्रह्मणि प्रामाण्यमुपवर्णितुं

शक्यते । तथा तत्र वेद्यत्वानभ्युपगमाच्च नामुख्यमपि । व्यक्तं चैतच्छत-दूषण्याम् । यत्तु—'आत्मा वारे द्रष्टव्य' इति वाक्यमुपादाय प्रत्यक्षादेः श्रवणफलत्वादिप्रतिपादनेन शास्त्रस्य तदनपेक्षत्वात्प्रामाण्यमिति समाधानं, तत्तावद्दन्धनमेव । 'आत्मा वार' इति वाक्यस्यान्यपर्यंप्रदर्शनेन प्रत्यक्षस्य शास्त्रजन्यतायाः पूर्वमेव निरस्तत्वात् । पण्डितपामरसाधारणस्य पटोऽस्ति सन् घट इत्यादिप्रत्यक्षस्य सन्मात्रग्राहितयाऽभ्युपगतस्य शास्त्रफलत्वा-योगाच्च । निर्विशेषवादे चापूर्वाकारायोगात्तत्प्रतिपादनाच्छास्त्रसाफल्यं तु न वक्तुं शक्यमित्यसकृदुक्तम् । अतः प्रत्यक्षादनुमानाद्वा सन्मात्राधिगम-मुपगच्छतां वेदितव्याकारविरहाददद्वैतविचारशास्त्रप्रवृत्तिरेव न घटते । तदुक्तं शतदूषण्यां द्वित्रावयवानुमानवाक्यपाठमात्रेण ब्रह्मविद्यानिष्पत्तौ कः खलु जडः श्रुतिनिकरशिखरपरिशीलनप्रयासादिकमारभेतेति । यदप्यस्यानु-करणमिव द्वित्रावयवानुमानवाक्यपाठमात्रेण बहुतरजटिलमधुरतरशब्दप्रयोग-मात्रेण चाद्वैतसिद्धान्तभङ्गसिद्धौ कः खलु जडः श्रुतिनिकरशिखरपरिशीलन-प्रयासादिकमद्वैतसिद्धान्तविरुद्धमारभेतेति वियातजल्पितम् । तदप्यपेशलम् । अस्मन्मते प्रत्यक्षादिना यथास्थितब्रह्मावबोधानभ्युपगमेन तत्संपादनायैव प्रेक्षावतां श्रुतिनिकरशिखरपरिशीलनप्रयासोपपत्तेर्दुरपह्नवत्वात् । सविशेष-ब्रह्मवादे प्रमाणान्तरानधिगतानन्तविशेषप्रतिबोधनेन शास्त्रतत्परिश्रमादि-साफल्यमित्यभ्युपगमेऽपि विरोधप्रसक्त्यभावाच्च । अत एवमन्यत्रापि परमार्थविशेषवादे मृषावादोक्तदोषसाम्यापादनमुन्मादत एव । तस्माददद्वैतमते सौगतागमाद्वेदशास्त्रे प्रामाण्योपयिकस्य विशेषस्य वक्तुमशक्यतया वेदस्यैव मुख्यं प्रामाण्यमिति निर्धारयितुं न पार्यत । अत एवाहुः "वेदोऽनृतो बुद्ध-कृतागमोऽनृत" इत्यादि । यदि चोक्तरीत्या विशेषाभावात् वेदवत्सौगतागम-स्यापि प्रामाण्याभ्युपगमप्रसङ्गभिया वेदप्रामाण्यमप्यद्वैतिभिः परित्यज्यते । तदैषामवशाच्चार्वाकमतानुप्रवेशो दुष्परिहर इत्यावेदितं शतदूषण्याम् ।

### सौगतसाम्योक्तिप्रयोजनम्

एतेन किं प्रयोजनेयमद्वैतमतावष्टम्भेन वेदसौगतागमयोस्साम्य-कथेत्यनुयोगोऽपि प्रत्युक्तः । यत्रोभयोरपि प्रामाण्यमिति पक्षस्तु प्रष्टुस्सम्म-तोऽपि गीर्वाणगुरुणाऽपि दुर्निर्वहः । सन्मात्रसत्यत्वशून्यत्वयोरत्यन्तविरोधेना-

न्यतरबाधावश्यंभावात् । न च विनिगमनाविरहादन्यतरबाधो न संभवतीत्युक्तं युक्तम् । विनिगमनाविरहे सत्युभयबाधस्यैवापादानसम्भवात् । शून्यवादेनाद्वैतवादस्य बाधे परत्वमेव विनिगमकमित्युक्तेरद्वैतसम्मन्तव्यत्वाच्च । नियतपौर्वापर्यस्थलेऽपि ह्यपच्छेदन्यायप्रवृत्तिस्तन्मतस्थैरनुमन्यते । अतस्साम्यकथाया इहाद्वैतमते वेदप्रामाण्यभङ्गावश्यंभावसूचनमेव परमं प्रयोजनम् । अन्यच्च यदवैदिकत्वादिकमद्वैतस्य प्रपंचितमिह शतदूषण्यां तत्तत एवानुसन्धेयम् ।

## वेदप्रामाण्ये श्रीभाष्याद्वैतमतयोरत्यन्तवैषम्यम्

न चैवं श्रीभाष्यकृतां मते वेदस्य सौगतागमाद्वैषम्येऽपि विषमयोरन्यतरेणान्यतरबाधविवक्षायां सौगतागमप्रामाण्यमात्रेणाद्वैतमतप्रामाण्यसहकृतेन वा श्रीभाष्यकृदभिमतवेदप्रामाण्यस्यैव बाधो युक्त इत्युक्तं युक्तम् । वैषम्ये सति प्रबलेन दुर्बलस्यैव बाधात् पौरुषेयतया संभावितदोषस्य सौगतागमस्य दुर्बलत्वमपौरुषेयतया अनाघ्रतदोषगन्धस्य वेदस्य प्राबल्यं चापि हि स्फुटप्रतिपन्नम् । न चैवमद्वैतमते संभवति । तन्मते वेदस्याप्यविद्याख्यदोषमूलत्वेनासत्यत्वाभ्युपगमात् । व्यावहारिकसत्यत्ववचनं च संवृतिसत्यत्ववचनवदसत्यत्वोक्तिपर्यायं वंचनार्थमित्युपदर्शितं शतदूषण्यामेव । असत्यत्वे सत्युभयं त्रयमित्येवं संहत्या न विशेषोऽस्ति । असत्यानां शतमपि एकेनापि सत्येन बाध्यत एव, स्वाप्निकार्थशतमिव जागरिकेण केनचिदेकेन । अतस्सौगतागमाद्वैतमतोभयविरोधेन श्रीभाष्याभिमतवेदप्रामाण्यस्यैव एकस्य बाध युक्त इत्युक्तमयुक्तमेव । अपि च श्रीभाष्यानुयायिन इवान्येऽपि वेदसत्यत्ववादिनो वेदान्तिनो मीमांसकनैयायिकादयश्च बहवस्सन्ति । तेषां भूयसां विरोधादल्पतरसाह्यान्तराद्वैतिकल्पितवेदमिथ्यात्वस्यैव बाधस्वीकारो युक्ततरः । श्रीभाष्याद्वैतसिद्धान्तयोः वेदप्रामाण्ये वैषम्यकथाभाव इत्येतत्तु कथामात्रम् । श्रीभाषयकृतां मते हि वेदः, तद्विषयः तत्प्रामाण्यं तद्वेदिता, तद्वेदनं तत्फलं सर्वमपि सत्यमितीष्यते । अद्वैतमते सर्वं विपरीतमेव । किं बहुना ? निर्विशेषवाक्यमपि सामान्यविशेषोत्सर्गापवादन्यायाद्यनवेक्षणेन विशेषसामान्यनिषेधपरतया व्याचक्षाणानां मते तुल्यन्यायेन सन्मात्रस्यापि

निषेध्यत्वापत्ताविष्टापत्तेरेवान्ततश्शरणीकरणीयतया वेदस्य कात्स्न्येन स्वरूपतो विषयतः प्रतिपत्तितः प्रतिपत्तृतः फलतोऽन्यतश्च सर्वप्रकारेणासत्यताया अभ्युपगन्तव्यत्वात् । अतस्तयोरत्यन्तवैषम्यं दुरपह्नवम् । तस्मादद्वैतमत एव वेदसौगतसाम्यप्रसक्तिः, वेदप्रामाण्यपरिग्रहानुपपत्तिः वैदिकत्वकञ्चुकविमुक्तिश्चेत्यादयः कथञ्चिदपि न निवारयितुं शक्यास्स्युः । अतः कर्मोपासनज्ञानकाण्डभेदेन त्रेधा विभक्तास्सर्वे वेदाः प्रमाणमित्याशेरते अद्वैतिनोऽपीति प्रारम्भवचनं वस्तुतः प्रतारणमेव । अत एवैतद्वादपरीक्षार्थं प्रवृत्तेनापि नवीनेनैतद्वादोक्ताद्वैतसौगतवैषम्यनियामकविकल्पदूषणेषु न कस्यचिदपि परिहारे यत्नः कृतः । किन्त्वन्यदन्यदिव यत्किंचन वैषम्यं वक्तुमुपक्रम्याथ शतदूषण्या दूषितप्रायमित्यवगत्येवापरितोषादन्ततो निगूह्य प्रदर्शितं यद्यदिहाधस्तादेव निरस्तम् ।

## सौगतागमात् पाञ्चरात्रस्य विशेषः

प्रथमतस्तु इहाप्रसक्तमेव भगवच्छास्त्रं पंचरात्रं सौगतागमेन समीकर्तुं सन्नाहः क्रियते, स चासङ्गतो निरर्थकश्चेति निरूप्यते । न ह्यद्वैतिनां मते वेदप्रामाण्यदौर्घटचस्य पांचरात्रप्रामाण्यनिराकरणेन परिहारस्संभाव्यते । न वा तावता वेदैकमूलकत्वेनानुमतस्य विशिष्टाद्वैतस्याप्यसन्मूलकत्वमापादयितुमवकाशस्स्यात् । नापि च विष्णुमनुस्मृत्यादिवद्वेदमूलकस्य पांचरात्रस्याप्रामाण्यं सुवचम् । न हि तद्वेदविरोधि स्वतन्त्रप्रमाणमित्यभ्युपेमः । येन सौगतागमेन समीक्रियेत । किन्तु वेदमूलतया वेदाविरुद्धार्थतत्परतयैव च तथोक्तं प्रामाण्यं 'कर्मकाण्डस्मृतिनयवशतस्सात्वतस्यापि सिद्ध'मिति । अंशेऽपि यथास्य न वेदविरोधगन्धस्तथा समर्थितः शारीरक एव पंचमाम्नायदर्शिना । तात्त्विकस्तदाशयश्च तत्रत्याक्षरस्वारस्येन प्रबन्धान्तरस्थतदीयस्फुटतरोक्त्यनुसारेण च विशदीकृतः श्रीभाष्यादौ । वक्तुश्च निर्दोषतया सर्वज्ञतया कारुणिकतया च परमाप्ततमत्वं निर्दोषश्रुतिशतसमधिगतम् । अतो न वेदविरुद्धपौरुषेयभ्रमविप्रलंभादिमूलबाह्यागमेनास्य साम्यसम्भावनाया अप्यवकाशः । एवं वेदमूलत्वेनाप्तमोक्तत्वेन च सिद्धे पंचरात्रस्य प्रामाण्ये सन्मूलकत्व स्वरूपसत्यत्वपारमार्थिकप्रामाण्याश्रयत्वाद्यभ्युपगमेनापि सौगतागमवैषम्यवैविध्यसद्भावनिष्कर्षसंपादनं न दुष्करं विदुषाम् ।

## पाञ्चरात्रस्य सौगतसाम्योक्तिनिराकरणम्

एतेन किं नाम वैषम्यमाश्रित्य पांचरात्रं प्रमाणं सौगतागमा अप्रमाणमिति श्रीभाष्यानुसारिभिर्निष्कृष्यत इत्याद्युक्तं प्रत्युक्तम्। वेदमूलकत्वेन हि पांचरात्रप्रामाण्यमिष्यत इत्युक्तं न तु प्रामाण्याश्रयत्वेन प्रामाण्यमिति। अतो न साध्यसाधनयोरैक्यम्। वयं तु पंचरात्रतत्प्रामाण्ययोः परमार्थसत्तामभ्युपैमः। सौगतागमतन्मानत्वयोस्तु पारमार्थ्यं तेऽपि नानुमन्यन्ते। अतस्स्वस्वदृष्ट्याऽपि स्वस्वागमप्रामाण्यपारमार्थ्याभ्युपगमेऽपि न साम्यमस्ति। प्रमातृत्वं चाद्वैतमत इव सुगतमतेऽप्याभिमानिकमेव, न तु तात्त्विकं प्रमाश्रयत्वम्। चैतन्यमात्रसत्तावादिनां कः प्रमाता? क्षणिकस्य च प्रमातुः कदा सामग्री, कदा प्रमोदयः। अतः श्रीभाष्याभिमतप्रमातृसत्यत्वमपि न सौगतमते सुवचम्। किन्त्वद्वैतभाष्याभिमतमेवेति तत्र सौगताद्वैतमतयोरेव साम्यमुक्तम्। कस्यचित्सत्यत्वस्वीकारे सर्वशून्यत्वाभ्युपगमायोगात् शून्यवादे सत्यप्रमितिहेतुत्वोपपादनं चानुपपन्नम्। नित्यत्वमनादित्वं वा मूलप्रमाणस्यैवापेक्षितं स्यात्, न तु प्रमाणमूलकस्यापीति मन्वादिस्मृतेरिव यथाश्रुतिप्रवृत्तस्य पाञ्चरात्रस्य नित्यत्वाद्यभावेऽपि न क्षतिः। स्वतन्त्रस्य बौद्धागमस्य नित्यत्वाद्यभावे पुरुषदोषाधीनमप्रामाण्यमवर्जनीयम्। बाह्यार्थपरिवादिना शून्यवादिना च सौगतेन स्वागमस्यापि मिथ्यात्वाद्दोषमूलत्वमुपगन्तव्यं, न तथा पाञ्चरात्रस्य तत्प्रामाण्यवादिनेति वैषम्यं चोक्तप्रायम्। वादिनां स्वोक्तसाधकप्रामाण्यस्य पराभ्युपगमावश्यंभावाभावेऽपि स्वाभ्युपगतेरप्यभावे मध्यस्थेन पाक्षिकतत्परिग्रहप्रत्याशाया अप्यनवकाशेन परिशेषात् मध्यस्थनिग्रतपरिग्राह्यपराभिमतसाधकप्रामाण्यप्रतिस्पर्धित्वाप्रसक्त्या उभयवैषम्यस्य शिलालिखितप्रायत्वात्। अतः परकीयदृष्ट्या सदोषत्वमुभयोरविशिष्टमिति साम्यापादानं प्रमादनिबन्धनम्। यस्सर्वज्ञ इत्यादिश्रुतिप्रसिद्धसार्वज्ञ्यादिगुणगणनिधिजगत्कारणश्रीमन्नारायण प्रद्वेषनिबन्धनं वा स्यात्। बुद्धस्य सर्वज्ञत्वप्रसिद्धिस्तु सर्वज्ञस्सुगतो बुद्ध इति बौद्धोक्तिमूला न विश्वसनीया। वक्तुश्चास्य बौद्धत्वं देवविशेषनामकथनप्रारम्भ एव बुद्धनामकीर्तनादवसीयते। नारायणस्य तु सर्वज्ञत्वं न पाञ्चरात्रमात्रसिद्धम्, अपि तु निर्दोषसकलश्रुत्यैककण्ठ्यसिद्धं, मन्वादिस्मृतिशतसिद्धं चेति विश्वसनीयमेतत्। अतः कर्तृगुणविशेषतोऽपि कार्ययोरुभयोरागमयो-

वैषम्यं दुरपह्नवम् । श्रौतव्यवहारसंवादश्च पाञ्चरात्रे शङ्करभाष्यस्याप्यभिमतः, अंशेऽपि न विसंवाद इति तु श्रीभाष्ये दर्शितम् । सौगतागमस्य श्रौतव्यवहारसंवादाभावः विसंवाद एव वा उभयं मतम् । संविन्नित्यत्वादिविषये बाह्यागमविसंवादस्य उभयाभ्युपेतत्वात् । वेदप्रामाण्यस्य चास्मन्मतेऽपौरुषेयत्वनिर्दोषत्वाभ्युपगमेन समर्थनान्न विपरिवर्तप्रसङ्गः । अतस्संवादेऽप्यवैषम्यसाधनमनवबोधनिबन्धनम् । बहुजनपरिगृहीतत्वं च न महाजनपरिग्रहः, किन्तु आस्तिक्यनिबन्धनः निपुणजनपरिग्रहः । स च सर्वेषामेवाज्ञानभ्रमकालुष्यादिकमुपगच्छतामद्वैतिनां मते वेदस्यापि संघटयितुं न शक्य इत्युक्तम् । विशिष्टाद्वैतिनामन्येषां च नैयायिकादीनां मते सर्वेषामप्यज्ञानभ्रान्तिनियमानभ्युपगमात् वेदतदनुयायिप्रमाणानां स शक्य एवोपपादयितुं । सौगतागमपरिग्रहस्य त्वल्पप्रयोजनलिप्सानिबन्धनत्वान्न महाजनकर्तृकत्वमिति व्यक्तं सर्वार्थसिद्धयादौ । अतः पाचरात्रसौगतागमयोरनेकथा वैषम्यस्य सद्भावात् पञ्चरात्रं प्रमाणं न सौगतागमा इत्यस्माकं निष्कर्षे न कश्चित्परिश्रमः । वस्तुतस्तु वेदमूलकत्वेनैव पाञ्चरात्रस्य प्रामाण्यं निश्चीयत इत्युक्तम् । किमतोऽस्य सौगतागमवैषम्यहेतुप्रकारान्तरोपपादनेन ।

## श्रीभाष्यकृन्मते वेदसौगतागमवैषम्यम्

नन्वेवमपि पाञ्चरात्रमूलवेदस्यैव प्रामाण्यसिद्धये सौगतागमवैषम्यं श्रीभाष्यानुयायिभिर्वक्तव्यमिति चेत् । उक्तमेवापौरुषेयत्वमनाघ्रातदोषगन्धत्वं चेति । न हि वयं मूलवेदस्य पौरुषेयत्वं ब्रूमः, नाप्यविद्या-संवृत्यादिदोषमूलत्वम् । उभयं चैतत् सौगतागमस्य तैरेव स्वीक्रियते । अत एव वैषम्यात् मूलवेदः प्रमाणं न सौगतागमा इति सिद्धे किं प्रकारान्तरेणापि वैषम्योपपादनप्रयासेन ।

वस्तुतस्त्विति बहुधा वैषम्यं नित्यत्वं, विसंवादरहितत्वं प्रमातृसत्यत्वं महाजनपरीगृहीतत्वमित्यादिना । प्रकारान्तरेणापि नित्यत्वं च वेदस्य पूर्वपूर्वक्रमेणैवोच्चार्यत्वमिति श्रीभाष्यकृतः । पूर्वपूर्वानुपूर्व्यनुसन्धानसापेक्षतत्समानानुपूर्वीकोच्चारणैककर्मत्वमेवास्य नित्यत्वमिति भावः । तच्च बुद्धेन स्वतन्त्रोच्चरितस्य सौगतागमस्य न सम्भवतीति व्यक्तमेव वार्तिकादौ ।

एतेन प्रलये वेदाख्याक्षरराशेरभावात् प्रकृत्यात्मनाऽवस्थानोपगमे प्रकृतिप्रयुक्तत्वोपगमावश्यंभावेन नित्यत्ववचनं व्याहन्येतेत्यप्यपास्तम् । अक्षराणां स्वरूपनित्यत्वानभ्युपगमेन प्रकृतिप्रयुक्तत्वोपगमेऽपि तदानुपूर्व्यंशे पूर्वानुपूर्व्यनुसन्धानैकसापेक्षताया उपगमे विरोधाभावात् । आविद्यकत्वमत एवानुपूर्व्या अप्यविद्याप्रयुक्तत्वाभ्युपगमावश्यंभावेन पूर्वानुपूर्व्यनुसन्धान-प्रयुक्तिविरोधस्स्यात् । प्रकृत्यात्मनाऽवस्थानमनित्यसाधारणं न नित्यत्वोप-पादकम् । तस्मादद्वैतमते वेदस्य नित्यत्वं प्रामाण्यं च दुर्घटमेवेत्येव परीक्षकम्मन्यनव्यवचनव्यक्त्याऽपि समर्थितं भवति ।

——

## दृश्यत्वानुमाननिरासवादः

### वेदे विश्वमिथ्यात्वाप्रसक्तिः

एवं वेदप्रामाण्यविषये श्रीभाष्याद्वैतभाष्ययोरत्यन्तवैषम्यं दर्शितम् । श्रीभाष्यकृतां मते सर्वेषामेव वेदवाक्यानामबाधितं प्रामाण्यमिष्यते । अद्वैतिनां तु मते तद्विपरीतमेव । कर्मकाण्डवाक्यानां सविशेषवाक्यानां च प्रामाण्यस्य निर्विशेषवाक्यानुरोधेन बाधः । निर्विशेषवाक्यप्रामाण्यस्य व्यावहारिकत्वोपगमाद् ब्रह्मज्ञानेनेति । तत्र निषेधवाक्यानां विहिताविहितत्वादिविशेषानादरेणा संकुचितप्रवृत्त्युपगमे ब्रह्मणोऽपि बाधापत्त्या न्यायतस्संकोचस्समाश्रितोऽस्त्यद्वैतभाष्यादावपीति प्रागेवाभिहितम् । न च तस्य न्यायस्य ब्रह्मविषये संचारितस्य विहितविशेषांशेऽपि दण्डेन वारणम् । न वा लोकन्यायप्रवृत्तियोग्यतयाऽभिमते वेदान्तवाक्ये उत्सर्गापवादादिमीमांसितन्यायप्रवृत्तेस्सर्पमारः । नापि न्यायानुसारेण श्रुतेरर्थविशेषपरतामनुसन्दधतः श्रुतिमन्यथयन्तीति व्यवहर्तव्या भवितुमर्हन्ति । न्यायचक्षुष्मतामेव श्रुत्यर्थतत्त्वदर्शनसंभवात् यद्यर्हन्ति तर्ह्यद्वैतभाष्यकृतोऽपि हि प्रकृतैतावत्त्वमित्यादौ तथाभाषणात् तथोपालब्धा भवेयुः । न ह्येतदेवं व्यवहर्तुरिष्टम् । अतो न्यायानुसारेण व्याख्यानमेव श्रुतेर्यथावस्थितार्थवर्णनमित्यनुमन्तव्यम् । तथा च निषेधवाक्यानां न्यायानुगृहीतानां विहितव्यतिरिक्तविषये प्रवर्तमानत्वेन ब्रह्मपरिशेषगमकत्वायोगात् सर्ववेदवाक्यानामप्यबाधितं प्रामाण्यं दुरपह्नवमेव सिद्ध्यतीति न वेदान्तवाक्यतः ब्रह्मेतरमिथ्यात्वसिद्धिप्रत्यशावकाशः ।

### मिथ्यात्वबोधकतया परोक्तश्रुतिवाक्यानामन्यथासिद्धिः

एतेन "नासदासीत् नो सदासीत्" "नेह नानाऽस्ति किंचन" "यत्तदद्रेश्यमग्राह्यं" "अतोऽन्यदार्तमि"ति श्रुतयः प्रपंचस्य सदसद्विलक्षणत्वं, प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं, स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं सद्विविक्तत्वं च चतुर्विधं मिथ्यात्वं क्रमेण बोधयन्तीत्याख्यातमपि प्रत्याख्यातम् । तत्र चाद्यवाक्ये सदसतोः प्रलये असत्त्वमात्रमेव हि प्रतिपाद्यते, न तु तदानीं सदसद्विलक्षणं किंचिदस्तीति । न च तदानीमात्म-

सद्भावसंप्रतिपत्त्या सन्नासीदित्यर्थस्य बाधेन विवक्षानर्हत्वात्, सदसद्भिन्न-मासीदिति पर्युदासपरत्वमाश्रयणीयमिति वाच्यम्। इह सन्तो न वा सन्तीत्या-दाविव सच्छब्दस्य सद्विशेषपरत्वेन तत्प्रतिषेधस्याबाधितत्वात्। अन्यथा 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यत' इत्यस्यापि बाधितत्वापातात्। 'सच्च त्यच्चाभव'दित्युत्पत्तिमत्त्वेन श्रूयमाणस्य सच्छब्दार्थस्य प्रलये प्रतिषेधो-पपत्तेः। तदानीमित्यधिकरणपरपदसमभिव्याहृतसमासाघटकनञः समभिव्या-हृतक्रियान्वयेन प्रतिषेधबोधन एव स्वारस्यात्। असति चानुयोगिवाचकपदे ऽन्योन्याभावबोधने स्वारस्याभावाच्च। तथा च भाष्यं 'नात्र कस्यचित्सद-सदनिर्वचनीयतोच्यते। सदसतोः कालविशेषे असद्भावमात्रवचना'दिति। द्वितीयवाक्येऽपि हि भेदसामान्यनिषेधे नानापदवैयर्थ्यापत्त्या तत्पदेन पृथग्भाव-विवक्षया स्वनिष्ठभेदमात्रनिषेधपरत्वस्यैवाश्रयणीयतया न प्रपंचमात्रनिषेधः। नानापदेन ब्रह्मणि भेदप्रपञ्चनिषेधे च किंचनेत्यस्य वैयर्थ्यात्। तथापि स्वनिष्ठप्रपंचसिद्धेर्दुर्वारत्वाच्च। तृतीयवाक्ये तु प्राकृतप्रसिद्धगुणा एव हि परस्मिन् प्रतिषिध्यन्ते, न तु तत्रैव प्रतीयमानाः। ये तावत्तत्र प्रतीयन्ते नित्यत्वादयः ते पुनर्विधीयन्ते, न तु निषिध्यन्त इति निगदव्याख्यातमेतत्। चतुर्थवाक्ये च पूर्वनिरुक्तान्तर्यामिसदृशान्यस्यैव साप्तमिकन्यायेनाभावः प्रती-यते, न त्वन्यमात्रस्येति श्रुतिवाक्येषु क्वचिदपि विश्वमिथ्यात्वगन्धबोधनप्रस-क्तेरेवाभावाच्च। अधिकं श्रीभाष्यतट्टीकादावनुसन्धेयम्। अतः दृश्यत्वा-नुमानं न श्रुत्यर्थोपष्टम्भकं, प्रत्युत श्रुत्यादिप्रमाणविरुद्धमेव। न केवलं तत्र प्रमाणान्तरविरोध एव, किन्तु प्रतिज्ञाविरोधः, प्रतिज्ञाहेतुविरोधः प्रतिज्ञोदा-हरणविरोध इत्येवं तदनुमानाङ्गानामेव मिथो विरोधा बहुधा सर्वार्थसिद्ध्या-दिषु प्रदर्शितास्सन्ति, शतदूषण्यां तु श्रीभाष्यवाक्यैरप्यत्रानुमाने व्याघातानै-कान्त्यादिसूचितमित्युपदर्शितम्।

## भाष्यसूचितदृश्यत्वानैकान्त्यवारकविशेषणदानादिष्टा-सिद्धिरनिष्टापत्तिश्च

यदत्र दृश्यत्वस्य स्वाधिकरणान्यूनसत्ताकत्वेन विशेषणादनैकान्त्य-परिहरणं, तदप्युपहास्यम्। एतदनुमानात्पूर्वं ब्रह्मगतदृश्यत्वस्याधिकरण-न्यूनसत्ताकत्वासिद्धेः। अस्मन्मते ब्रह्मगतदृश्यत्वस्यापि पारमार्थिकत्वाभ्युप-

गमेन स्वाधिकरणान्यूनसत्ताकत्वानपायात् मध्यस्थसन्देहेन सन्दिग्धानैकान्त्यस्य वा दुष्परिहरत्वात् । अद्वैतसिद्धावपि हि साध्याभावनिश्चयवति हेतुसन्देहे सन्दिग्धानैकान्त्यं दूषणमनुमन्यते । एवमुक्तविशेषणस्य पक्षसपक्षगतदृश्यत्वयोस्सत्ताभेदोपस्थापकत्वेन प्रातिभासिकदृश्यत्वगृहीतमिथ्यात्वव्याप्तिबलेन व्यावहारिकदृश्यत्ववति तदनुमानस्य प्रातिभासिकत्वादिना सोपाधिकत्वगमकतया प्रकृतविरुद्धत्वाच्च । वैधर्म्याच्च न स्वप्नादिवदिति न्यायेन शुक्तिरूप्यदृष्टान्तेऽपि वैधर्म्यसूचनात् जाग्रत्प्रपंचे मिथ्यात्वानुमानमप्यनुपपन्नमिति हि स्फुटीकृतं स्यात् । तथा च वरगोत्रप्रश्नोत्तरन्याय एव ह्यत्र स्मृतिमधिरोहति । किं चानुमानमिदं वह्न्यनुष्णत्वानुमानवत्प्रत्यक्षेण कालात्ययापदिष्टं च ।

एतेन प्रत्यक्षस्य दुष्टकारणलभ्यत्वसम्भावनया निर्दोषवेदोपष्टब्धानुमानबाधकत्वं न संभवतीत्युक्तमपि प्रत्युक्तम् । रज्जुसर्पादिप्रत्यक्षस्येव जाग्रत्प्रपंचप्रत्यक्षस्य कदाचिदपि कारणदोषसद्भावस्यानुपलम्भात् । तादृशसाजात्येन तत्संभावनाया वेदेऽपि तुल्यत्वात्, पुरुषेतरगतदोषेणाप्यप्रामाण्यस्य प्रागुपदर्शितत्वात् । अद्वैतमते वेदस्यापि दोषमूलकत्वोपगमात् वेदे च विश्वमिथ्यात्वप्रसक्तिरेव नास्तीत्युपपादितत्वात् वेदोपष्टम्भकतया प्रयुक्तमनुमानमिति प्रागुक्तेन वेदोपष्टब्धत्ववचनस्य व्याहतत्वाच्च । अत एव श्रुतितः प्रसिद्ध्या नास्याप्रसिद्धविशेषणत्वमित्यपास्तम् । साध्यविकल्पे प्रथमकल्प इव द्वितीयकल्पेऽपि प्रथममपसिद्धान्तमुक्त्वा ततस्सिद्धसाधनमपि दूषणमुक्तम् । तत्र तत्तदधिष्ठानारोपितत्वमात्रन्तदिति विवक्षायामपि तद्दोषतादवस्थ्यं दुर्वारम् । इदन्त्वेन भासमानस्य पुरोवृत्तिभास्वररूपवद्द्रव्यादेरेव भ्रमविशेष्यतयाऽधिष्ठानत्वेन तदारोपितत्वस्यापणस्थरजतादावेवाभ्युपगमात् । तत्र च रजतभेदाग्रहादज्ञानविषयत्वमपि न विरुद्ध्यते । सिद्धरजतादेरेवारोपात्तदुपादानत्वं परमज्ञानस्य न संभवति । तन्माभूत् । तस्यास्माभिरनभ्युपगमात् । अज्ञानविषयाधिष्ठानारोपितत्वं त्वस्माभिरप्युपगम्यत इति तस्यारोपितत्वमात्रस्य वा साध्यत्वे सिद्धसाध्यत्वं दुर्वारमेव । अतस्तत्तदधिष्ठानारोपितत्वमात्रं मिथ्यापदार्थ इति विवक्षायां न कोऽपि विरोध इति प्रतारणमेव ।

## साध्यविकल्पे तृतीयकल्पदूषणम्

यत्तु सदसद्विलक्षणत्वं तृतीयमिथ्यात्वमपि न परस्परविरोधाद् व्याहतम् । क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वस्य तुच्छमात्रासाधारणस्यासत्त्वपदेन विवक्षणात् । सदसद्विलक्षणत्वस्य शुक्तिरूप्ये संभवाच्च न व्याहतमित्यद्वैतसिद्धयादौ व्यक्तमिति । तदसंबद्धम् । क्वचिदप्युपाधौ सत्त्वेन प्रतीत्यनर्हत्वस्य तद्विपरीतस्य चासत्त्वपदेन सत्त्वपदेन च विवक्षणे तयोः परस्पराभावरूपत्वेन तत्तदभावयोस्तत्तदाश्रयसदसद्वैलक्षण्यस्य चैकत्र विरोधेन व्याहतेरपरिहारात्, अद्वैतसिद्धावेवमनुक्तेश्च । तत्र हि त्रिकालाबाध्यत्वरूपसत्त्वव्यतिरेको नासत्त्वं, किन्तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वं तद्वयतिरेकश्च साध्यत्वेन विवक्षितः । तथा च त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वरूपं साध्यं पर्यवसितम् । एवं च सति शुक्तिरूप्ये न साध्यवैकल्यमपि । बाध्यत्वरूपासत्त्वव्यतिरेकस्य साध्याप्रवेशात् । नापि व्याघातः, परस्परविरहरूपत्वाभावादित्येवमुक्तम् । तदपि न साधीयः । ब्रह्मतुच्छविलक्षणत्वस्येव त्रिकालाबाध्यब्रह्मविलक्षणत्वस्य सत्त्वेन प्रयीयमानत्वस्य चास्माभिरपि प्रपञ्चेऽभ्युपगतत्वेन सिद्धसाधनस्यानिवारणात् । कालानवच्छिन्नं यदबाध्यत्वं तदत्यन्ताभावस्सत्तादात्म्यं चेत्युभयवत्त्वमेवेह पर्यवसितं साध्यमिति लघुचन्द्रिकानुसरणेऽप्यप्रसिद्धविशेषणताया दुर्वारत्वात् । यथोक्तं न तृतीयः, परं प्रत्यप्रसिद्धविशेषणत्वादिति । न च शुक्तिरूप्य इदं मिथ्यात्वं प्रसिद्धम् । अस्माभिरनभ्युपगमात् । न च तत्रार्थापत्त्या उक्तमिथ्यात्वं साध्यत इति वाच्यम् । भेदाग्रहतद्ग्रहाभ्यामेव ख्यातिबाधोपपत्तेरनुपपत्तिरेव नास्तीति भाष्यतट्टीकादावुपपादितत्वात् । अख्यातिवादान्यथाख्यातिवादयोः मीमांसकनैयायिकादिप्रामाणिकदार्शनिकान्तरैरपि परिगृहीतत्वेनानिर्वचनीयख्यातिवाद इवानुभवविरोधस्य सहसा वक्तुमशक्यत्वात् । भवदभिमतशुक्तिरूप्यस्यैवास्माभिरनभ्युपगमाच्च । अत एवेहोदाहरणस्याश्रयवैकल्यमप्यनिवार्यमाचक्षते । यथाहुः सर्वार्थसिद्धौ "सत्येषु शुक्त्यादिष्वन्यतमस्यैव कयाचिद्विवक्षया शुक्तिरजतव्यवहारविषयत्वात्, अन्यथा वर्णक्रमनिर्देशवन्निरर्थकत्वापातात् । तथा चाश्रयहीनमुदाहरणमिति न कथंचिदपि व्याप्तिसिद्धिरिति । एतेन शतदूषण्यामद्वैतिनामनुमानप्रयोगं प्रकृतं शुक्तिरूप्य-

दृष्टान्तेनानुवदन्ती दृष्टान्तासिद्धिमनापादयन्ती स्वहृदयेनानुमनुत इत्युक्तमप्यपास्तम् । अनुवादस्य निरसनार्थस्यानुमतिगमकत्वादृष्टेः, अन्यथा गौणश्चेदित्याद्यनुवादात्तदनुमतत्वापत्तेः । अप्रसिद्धविशेषणत्वादित्युक्त्यैव त्वदुक्तदृष्टान्तस्याप्यसिद्धेरुक्तप्रायत्वाच्च । सत्त्वग्राहिप्रत्यक्षेण कालात्ययापदेशश्चास्यापरिहार्य इत्युक्तम् । अत एव प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपं मिथ्यात्वं साध्यमिति पक्षेऽपि सिद्धो बाधः । उक्तनिषेधबोधकमानानुपलम्भात् । प्रत्यक्षेण ह्यस्तीत्येव प्रपंचः प्रतीयते, मिथ्यात्वानुमानमपि ह्येवमिह परिभूयते । आगमिकस्तु निषेधः विध्यनुरोधेन नेतव्यः । अन्यथा ब्रह्मणोऽपि निषेधापत्तेरिति ह्युक्तम् । एवं बाध्यमिथ्यात्वसाध्यस्य प्रपंचसत्यत्व एव पर्यवसानात्सिद्धसाधनं दुर्वारमित्युक्तम् ।

**बाध्यत्वबाध्यत्वे सत्यत्वनियमः**

यत्तु—बाध्यत्वस्य बाध्यत्वेऽपि न प्रतियोगिनः प्रपंचस्य सत्यत्वं शुक्तिरूप्यादिस्थले प्रतियोगितदभावयोरेकमिथ्यात्वेऽपरसत्यत्वमिति न्यायस्सत्ताभेदनिबन्धनः । प्रकृते तु ब्रह्मज्ञानेन प्रपंचतदभावयोरुभयोरपि प्रपंचत्वरूपैकनिषेध्यतावच्छेदकधर्मेण बाधाद् ब्रह्मणि प्रपंचतदभावयोरुभयोरप्यारोपाच्च न बाध्यत्वबाध्यत्वेन प्रपंचसत्यत्वापत्तिः । स्वाप्नस्थले गजतदभावभ्रमे गजतदभावयोरुभयोरपि मिथ्यात्वं दृष्टमिति प्रतियोगितदभावयोरेकमिथ्यात्वेऽपरसत्यत्वनियमस्यानैकान्तिकत्वादिति । तन्न । स्वाप्नस्य गजस्य मिथ्यात्वोपगमेऽपि तदभावस्य बाधादर्शनेन सत्यत्वानपायादुक्तनियमस्यानैकान्त्याभावात् । प्रपंचवन्निष्प्रपंचस्याप्यारोपोपगमे प्रपंचनिषेधवाक्यानामपि तत्त्वावेदकत्वलक्षणप्रामाण्याभ्युपगमानुपपत्तेः । निषेध्यतावच्छेदकप्रपंचत्वस्य प्रपंचतन्निषेधसाधारण्यायोगे प्रपंचस्य ब्रह्मज्ञानेन बाधे मिथ्यात्वानुमानवैयर्थ्येन अनुमानत एव प्रपंचाभावास्यापि बाधे च स्वसाध्यापहाराद् व्याघातेन च एकबाधकबाध्यत्वानुपपत्त्या प्रपंचतदभावयोस्समानसत्ताभ्युपगमायोगात् । अभ्युपगमेऽपि च परस्परविरहात्मकयोः परस्परविरहसमनियतयोर्वा प्रपंचतदाभावयोस्तत्सत्यत्वमिथ्यात्वयोर्वा समानसत्ताकयोः परस्परविरोधेनैकतरमिथ्यात्वे अपरसत्यत्वस्यावर्जनीयत्वात् सत्ताभेदस्यैव च काल्पनिकसत्यत्वव्यावहारिकमिथ्यात्वयोरिव परस्पराभावरूपयोरप्यविरोधोपपादकत्वेन विरोधैकसाधनीयैकतरसत्यत्वनिबन्धनत्वोक्तेरयुक्तत्वाच्च ।

वस्तुतस्त्वस्मन्मते पारमार्थिकेतरसत्ताया एवानभ्युपगमान्न सत्ताभेदनिबन्धनं प्रतियोगितदभावयोरेकतरमिथ्यात्वेऽपरसत्यत्वं, किन्तु परस्पराभावरूपत्वप्रयुक्तं तद्विरोधप्रयुक्तमेव वाऽभ्युपेतव्यम् । न च संयोगतदभावन्यायेनात्र समुच्चयस्स्यात् । तद्वदिहाव्याप्यवृत्तिताधीनाविरोधग्राहकप्रमाणाभावात् । प्रमाणभावश्च पूर्वमेवोपपादितः । अतो मिथ्यात्वमिथ्यात्वे सत्यत्वपर्यवसानात्सिद्धसाधनमर्थान्तरं वेति सुष्ठूक्तम् । अतो बाध्यमेव बाध्यत्वं साध्यमिति नैवाभ्युपेतुं शक्यम् । अबाध्यं बाध्यत्वमेव साध्यमिति पक्षेऽपि तस्य ब्रह्मस्वरूपत्वे सिद्धसाधनमित्युक्तम् । पक्षीभूतप्रपञ्चे ब्रह्मस्वरूपेण साध्येन सह कार्यकारणभावशरीरशरीरिभावादिसंबन्धाभ्युपगमात् । संबन्धविशेषानिर्देशेन तत्तदभिमतसंबन्धेन साध्यसिद्धिमादाय सिद्धसाधनोद्भावनस्य दुर्वारत्वात् । अबाधितं साध्यमित्युपस्थिते आध्यासिकसंबन्धस्य निर्देशायोगाच्च, बाध्यत्वस्य ब्रह्मस्वरूपत्वादित्यभिधाय बाध्यत्वोपलक्षितं ब्रह्म बाध्यत्वमिति निष्कर्षस्त्विदंप्रकरणादुत्कर्षमेवार्हति । अन्यथा ब्रह्म ब्रह्मोपलक्षितमिति व्यवहारवदिह व्याहतेरपरिहार्यत्वात्, सौगतादिबाह्याभिमतस्य बाध्यत्वस्य ब्रह्मणि विशेषणताया उपलक्षणताया वा वैदिकम्मन्येन केनाप्यभ्युपगमायोगाच्च ।

## ब्रह्मातिरिक्तमेवाबाध्यं बाध्यत्वं साध्यमिति पक्षे दूषणम्

एतेन शतदूषणी किं प्रपञ्चेन सम्बन्धमद्वैताभिमतमाध्यासिकं स्वीकरोति, यदि च बाध्यत्वस्य प्रथमं विशेषणतया भातस्य पश्चादभावेनोपलक्षणत्वं च स्वीकरोति, बाध्यत्वोपलक्षितरूपेणैव ब्रह्मणोऽबाध्यत्वरूपत्वमित्यद्वैतसिद्धान्तानुसारेणेत्याद्युक्तं परास्तम् । ब्रह्मस्वरूपादन्यदेवाबाध्यं बाध्यत्वं साध्यमिति पक्षे तत्रैवानैकान्त्यमित्युक्तम् । यत्त्वत्र हेतुरेव न वर्तत इत्युपगम्यानैकान्त्यवारणं; तत्तु तर्हि दृश्यत्वानुमानेन तत्साधनं न शक्यते । तज्जनितज्ञानविषयत्वे दृश्यत्वावश्यंभावादित्यादिना शतदूषण्यामेव दूषितम् । उक्तानुमानात्पूर्वं सत्ताभेदासिद्ध्या स्वाश्रयान्यूनसत्ताकत्वविशेषणं चाकिंचित्करमित्युक्तम् । शब्दाजन्यवृत्तिविषयत्वं सप्रकारकवृत्तिविषयत्वं वा यदि दृश्यत्वमितीष्यते तदापि शब्दाजन्यानुमानिकसप्रकारकवृत्तिविषयत्वस्य च ब्रह्मणि च सत्त्वेनानैकान्त्यं दुर्वारमेव । अस्मन्मते वृत्तेरेवानभ्युपगमेन वृत्ति-

विषयत्वं दृश्यत्वमित्युक्तावन्यतरासिद्धो हेतुः। ज्ञानविषयत्वमेव दृश्यत्वमित्युक्तौ "ज्ञात्वा देवं मुच्यते सर्वपाशैः", "तमेवं विद्वानमृत इह भवति" इत्यादिप्रमाणावगतं सप्रकारकज्ञानविषयत्वं ब्रह्मणि दुरपह्नवम्। माध्यमिकग्रन्थमध्योद्धृतपंचमप्रकाराविद्यानिवृत्तेः अद्वैतसिद्ध्यैव गलहस्तितत्वात्तद्वारणाय विशेषणदानं निष्प्रयोजनमेव। विशेषणदानेऽपि ब्रह्मणि व्यभिचारो दुर्वार एव स्यात्। अज्ञानकालवृत्तित्वविशेषितदृश्यत्वस्यापि तत्र दुरपह्नवत्वात्। स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वं साध्यमिति कल्पोऽपि प्रत्यक्षाद्यैस्तद्विधायकैस्तदभावग्रहासंभवादित्यादिना निरस्तः। स्वात्यन्ताभावसमानाधिकरणतया प्रतीयमानत्वं च किं स्वात्यन्ताभावसामानाधिकरण्यप्रकारकप्रतीतिविषयत्वमुत वस्तुतः स्वात्यन्ताभावाधिकरणं यत्तद्वृत्तित्वमात्रप्रकारकप्रतीतिविषयत्वम्? न तावदाद्यं, तच्च प्रतियोगिग्राहिणा प्रत्ययेन तदधिकरणे अभावस्यापि ग्रहण एव संपत्स्यते न चैवं गृह्यत इत्युक्तसाध्यस्य बाधापत्तेः। न चान्त्यमपि, सर्वैरेव प्रमाणैः प्रतियोगिभूतप्रपंचग्रहणात् तदभावग्रहणायोगेन प्रमाणाभावात् तदभावस्याप्रसिद्ध्या तदधिकरणवृत्तित्वघटितसाध्यस्याप्यप्रसिद्ध्या तदनुमानानुपपत्तेः। कथंचिदनुमाने तस्य कृत्स्नप्रत्यक्षविरोधेन निर्मूलतया प्रामाण्यायोगात्। अप्रमाणेनापि साधनोपगमे अतिप्रसङ्गाच्चेति भावः। न चैवं सति लोके भ्रान्तिबाधव्यवस्थानुपपत्तिरिति शङ्क्यम्। प्रातिस्विकप्रतियोगिभ्रमानन्तरं तत्सद्भावानवगाहिना प्रमाणान्तरेणापि तदभावोऽधिगन्तुं न शक्य इत्यवचनात्। किन्तु प्रतियोगिसत्वावगाहिना तदभावो न शक्यः प्रत्याययितुमत्र प्रतियोगिग्राहकमेव प्रमाणजातमिति ह्युच्यते। न हि लोके शुक्त्यादौ रजतादिग्राहिणैव प्रमाणेन तदभावोऽपि गृह्यत इत्युपैमः, किन्त्वन्येनैव। तद्वदत्र प्रतियोगिप्रपंचाग्राहकप्रपंचाभावग्राहिप्रमाणस्यैवानुपलब्ध्या लोकसिद्धभ्रान्तिबाधस्थलात् विशेषस्य दुरपलपत्वात्। बाधकश्रुतिश्च विध्यनुरोधिनी, अन्यथा विधिबाधो ब्रह्मबाधश्च दुर्वार इत्युक्तम्। अतः प्रतिषेधश्रुतिबलात् स्वात्यन्ताभावसामानाधिकरण्यलाभ इत्यचतुरं वचनम्। न च कपालादौ घटादेस्स्वाभावसामानाधिकरण्यं केनचित्प्रमाणेन प्रत्याय्यते। नापि ब्रह्मणि, सन् घटः घटोऽस्तीत्यादिप्रत्यक्षादेः घटादिगतसत्त्वरूपधर्मग्राहकत्वं, न तु सन्मात्रग्राहकत्वं, न वा घटाद्यधिष्ठानतया सत्तावगाहित्वमिति प्रागेव

निरूपितत्वात् । भूतलकपालादावधिगतस्य घटादिप्रपंचस्य ब्रह्मणि निषेधेऽपि तत्समानाधिकरणत्वाभानात् अन्यथासिद्धप्रतिषेधश्रुत्या अनन्यथासिद्धप्रत्यक्षविरोधेन कपालादावेव घटादिप्रतिषेधायोगाच्च श्रुत्युपष्टब्धत्वं तदुपष्टम्भकत्वं वाऽस्यानुमानस्य न संभवतीति शतदूषण्युक्तं साध्याप्रसिद्ध्यादिदूषणमपरिहार्यमेव ।

## सद्विविक्तत्वकल्पे दूषणम्

एवं सद्विविक्तत्वमित्यस्य दोषासहकृतकरणजन्यज्ञानविषयान्यत्वमित्यर्थवर्णने तस्य ज्ञानाविषयतया अभिमते तुच्छे ब्रह्मण्यप्यतिप्रसङ्गः । ब्रह्मणो वृत्तिज्ञानविषयत्वोपगमेऽपि तत्करणस्याविद्यकत्वोपगमेन अविद्याख्यदोषसहकृतत्वावश्यंभावात् दोषासहकृतत्वविशिष्टकरणजन्यज्ञानविषयान्यत्वं ब्रह्मण्यक्षतमेव । अविद्यातिरिक्तत्वेन दोषविशेषणे च घटादिप्रपंचप्रत्यक्षादिकरणेऽपि अविद्यातिरिक्तकाचकामालादिदोषसहकृतत्वस्य प्रत्यक्षादिप्रमाणविरोधेन दुर्वचतया तत्र साध्यबाधः । अत एव सत्यसामान्यभेदस्य सत्यत्वात्यन्ताभावस्य वा न साध्यत्वसंभवः । प्रपंचसत्यत्वग्राहिप्रमाणशतबाधात् श्रुतिप्रमितसत्यभेदस्य तादृशसत्यत्वात्यन्ताभावस्य साध्यतायामर्थान्तरमित्युक्तमेव । ब्रह्मभिन्नत्वं भेदघटितं ब्रह्मतादात्म्यमित्यसंबद्धम् । भेदविरोधित्वात्तादात्म्यस्य । अत एवाध्यस्ताधिष्ठानतादात्म्यमप्यसंप्रतिपन्नम् । शरीरात्मभावेन तादात्म्यवचनं च विशिष्टविषयम्, न तु शरीरनिष्कर्षाभिप्रायम् । निष्कर्षकेतरशरीरवाचिपदस्य शरीरिपर्यन्तबोधकत्वदृष्टेः । परिणामिशरीरकत्वमेव परिणाम्युपादानत्वमित्यूर्णनाभिदृष्टान्तेन श्रुतिरेव प्रतिपादयतीति प्रागेवो पपादितम् । नरपशुपक्षिसरीसृपादिष्वनुगतः नियतनियाम्यनियामकभावादिरेव मुख्यश्शरीरशरीरिभाव इत्युपदर्शितम् । अतः श्रीभाष्यकृदभिमतमभिन्ननिमित्तोपादानत्वमेव श्रुत्यादिप्रमाणसम्मतं सूत्रारूढमनुपपत्तिगन्धरहितं चेति पूर्वमेव प्रपंचितत्वान्नात्र तत्र वक्तव्यमस्ति । सद्विविक्तत्वमपि साध्यं न भवितुमर्हतीति हि प्रकृतम्, तत्र सत्यब्रह्मभिन्नत्वस्य सत्यान्तरसाधारण्यात् तत्साधने अर्थान्तरम् । ब्रह्मैकमेव सत्यमिति श्रुतिसिद्धावधारणोपजीवने आत्माश्रयः अनुमानवैयर्थ्यं च । श्रुतिप्रामाण्ये विप्रतिपन्नं प्रति सार्थक्योपगमे विप्रतिपद्यमानश्रौतावधारणोपजीवनासंभवः । श्रुतेश्च प्रत्यक्षाविरुद्ध-

विषयसिद्धया प्रत्यक्षविरुद्धानुमानोपजीव्यत्वायोग इत्यादिना शतदूषण्यामेव दूषितानां तत्तद्दूषणानुद्धारेण पुनरनुकीर्तनं ग्रन्थपूरणमेव। आत्मानं प्रत्येव मननविधया श्रुत्युपबृंहणार्थमिदमनुमानमिति पक्षस्तु सिद्धसाधनवारकविशेषणप्रक्षेपाद्यनुपपत्तेरुपेक्षणीयः। न हि श्रुतिसिद्धार्थमनने सिषाधयिषाधीने सिद्धसाधनं दोषस्स्यात्। उक्तं च शुक्तिरूप्ये सिद्धसाधनवारणाय ब्रह्मज्ञानेतराबाध्यत्वं पक्षविशेषणमित्यादिकमद्वैतसिद्धौ। न चानुमानस्य क्वचिदपि स्वतन्त्रप्रामाण्यं नास्ति, धूमादिना वह्न्यादिसिद्धेरप्यनुपपत्तेः। अतीन्द्रिये विषये परं न तस्य स्वतन्त्रप्रामाण्यमिति हि शास्त्रयोन्यधिकरणसमधिगतम्। स्वतन्त्रप्रमाणमप्यनुमानं निर्दुष्टप्रत्यक्षविरोधे तेन वह्न्यनुष्णत्वानुमानवद् बाध्यत एव। दोषतदभावौ चोपलंभतदभावव्यवस्थाप्यौ। चन्द्रप्रादेशिकत्वादिप्रत्यक्षे दूरत्वादिदोषोऽप्युपलभ्यते। न चैवं घटादिप्रपंचप्रत्यक्ष इति विशेषस्य स्फुटत्वात् अविशेषेण पराक्रमणं परिभवावहमेव। केवलतर्कावलम्बिनः प्रतीदमनुमानमिति स्वीकारे अर्थान्तरादिकं पूर्वोक्तमेव। सत्यत्वं किंचिन्निष्ठात्यन्ताभावप्रतियोगि धर्मत्वादित्यनुमानं प्रमेयत्ववाच्यत्वादौ व्यभिचरितम्। निर्विशेषवादे सत्यत्वस्य धर्मत्वाभावात् स्वरूपासिद्धं, सत्यत्वग्राहिप्रत्यक्षादिना बाधितं च।

## प्रत्यक्षेण मिथ्यात्वविरोधिसत्त्वग्रहणम्

यत्तु प्रत्यक्षेण मिथ्यात्वविरोधिसत्त्वं न गृह्यते त्रिकालाबाध्यत्वस्यैव तथात्वात् तस्य चातीतादिघटितस्य अयोग्यत्वादिति। तन्न। त्रिकालाबाध्यत्वस्य कालत्रयावच्छिन्नं कालानवच्छिन्नं वा यदबाध्यत्वं तद्रूपतया विवक्षणे तस्य सत्यतयाऽस्मदभिमतेष्वनित्येष्वविद्यमानत्वात्सत्यत्वात्मकत्वासंप्रतिपत्तेः। कालत्रयावच्छिन्नं यद्बाध्यत्वं तदभावरूपत्वे तस्य वर्तमानकालमात्रसम्बन्धिन्यप्यविद्यमानतया वर्तमानकालसंबन्धरूपताया अप्युपगन्तव्यत्वेन प्रत्यक्षयोग्यत्वोपगमे विरोधाभावात्।

वस्तुतस्तु प्रामाणिकत्वमेव हि सर्वत्र सत्त्वमभ्युपगच्छामः। तदुक्तं भाष्ये व्यवहारयोग्यतासत्त्वमितीति शतदूषण्यामिह मिथ्यात्वविरोधिसत्त्वं प्रदर्शितम्। तेन भाष्योक्तं व्यवहारयोग्यत्वं प्रामाणिकत्वमेवेति व्याख्यातं भवति। तच्च कालसंबन्धित्वेन प्रमाविषयत्वं तेन निषेध्यतया प्रमाविषय-

त्वमादायासति नातिप्रसङ्गः। न च प्रमाघटितस्य सत्त्वस्य चक्षुरादिप्रत्यक्षायोग्यत्वमित्युक्तं युक्तम्। प्रत्यक्षज्ञानस्यापि स्वप्रकाशत्वेन तत्प्रामाण्यस्य स्वतोग्राह्यतया च प्रमाघटितसत्त्वस्य प्रत्यक्षयोग्यत्वोपपत्तेः। तदुक्तं भट्टपादैः

**स्वतः सर्वप्रमाणानां प्रामाण्यमिति गम्यताम्।**
**न हि स्वतोऽसती शक्तिः कर्तुमन्येन शक्यते॥**
**आत्मलाभे च भावानां कारणापेक्षता भवेत्।**
**लब्धात्मनां स्वकार्येषु प्रवृत्तिस्स्वयमेव तु॥** इति।

यस्त्वत्र सतदर्थविषयकत्वं प्रमात्वं; प्रमाविषयत्वं सत्त्वमिति परस्परसिद्धावन्योन्याश्रयः उक्तः। स त्वविवेकविवर्तः। प्रमात्वप्रयोजकस्य प्रमात्वरूपस्यैव वाऽर्थसद्भावस्य विशेष्यसंबन्धरूपस्य कालसंबन्धरूपस्य वा प्रामाणिकत्वरूपसत्त्वाद्भिन्नत्वात्।

## प्रपञ्चप्रत्यक्षमिथ्यात्वानुमानयोर्भिन्नविषयत्वनिरासः

एतेन यच्चोक्तं प्रत्यक्षेण व्यावहारिकसत्त्वग्रहणेऽपि दृश्यत्वेन पारमार्थिकसत्त्वाभावसाधने प्रत्यक्षानुमानयोर्भिन्नविषयत्वान्न विरोधगन्धोऽपीति। तच्च प्रत्युक्तम्, प्रामाणिकत्वरूपसत्त्वस्यैव प्रत्यक्षाद्ग्रहणनिर्वाहेण पारमार्थिकसत्त्वाभावसाधनस्य विषयभेदासिद्धेः, प्रामाणिकत्वपारमार्थिकत्वयोः पर्यायत्वात्। किं च प्रत्यक्षे सत्तात्वेन सामान्यरूपेणैव हि सत्त्वं गृह्यते न, तु व्यावहारिकत्वादिविशेषेणेत्युपेयं भवता। अन्यथा शुक्तिरूप्यादेरपि तदसाधारणप्रातिभासिकसत्ताकत्वेन प्रत्येतव्यतया बाधात्पूर्वमपि प्रवृत्त्यनापत्तेः, तत्रेदं व्यावहारिकरूप्यं नेति प्रत्ययस्य भिन्नविषयत्वेनाविरोधित्वापत्तेः। प्रातिभासिकरूप्यव्यावहारिकसत्ताकतदभावयोरविरोधेन भ्रान्तिबाधव्यवस्थाद्यनुपपत्तेः। एवमौष्ण्यानौष्ण्यप्रत्यक्षानुमानयोरप्यविरोधापत्तेश्च। परीक्षयाऽपि प्रत्यक्षप्रतिषेधयोस्सत्ताभेदस्य दुर्निवारत्वात्। सामान्यरूपेण सत्तावगाहिप्रत्यक्षं च न तावदसिद्धे विशेषे व्यवस्थापयितुं शक्यम्। न च प्रपंचमिथ्यात्वसाधनात्पूर्वं व्यावहारिकपारमार्थिकसत्ताभेदसिद्धिः। अतो मिथ्यात्वानुमानजीवने सत्ताभेदसिद्धिः। सत्ताभेदसिद्धौ प्रत्यक्षानुमानयोर्विषयभेदेन बाधाभावः। बाधाभावाच्च मिथ्यात्वानुमानजीवनमित्यत्र चक्रकादिकमपरिहार्यम्।

यदप्युक्तं—सन् घट इत्यादौ घटादौ सत्तादात्म्यमात्रं भासते, न तु सत्त्वमिति तदप्यसत् । सत्तादात्म्यस्य सद्भेदाभावात्मकस्य प्रतियोगितावच्छेदकसत्तानतिरिक्ततया, अतिरेकेऽपि तन्निरूप्यतयाऽभ्युपगन्तव्यत्वेन च सत्तादात्म्यं भासते, न तु सत्त्वमित्युक्तेः व्याहतत्वात् ।

यत्पुनरुक्तं मिथ्यात्वानुमानस्य श्रुत्यनुगृहीतस्य विपक्षे बाधकतर्कसचिवस्य प्रबलत्वान्न स्वबाध्यप्रत्यक्षबाध्यत्वमिति । तदप्यसाधु । श्रुतिविरुद्धत्वेन तस्य श्रुत्यनुगृहीतत्वन्तदनुग्राहकत्वं च न संभवतीति प्रागेव निरूपितत्वात् । धर्मभूतज्ञानद्रव्यस्य विषयसंयोगाद्यविरोधेन दृग्दृश्य संबन्धानुपपत्त्यादीनां प्राचीनैरेव निरस्तत्वेनानुकूलतर्काभावाच्च तदनुग्रहाप्रसक्त्या अनुमानस्यास्यैव दुर्बलत्वात्स्वभावत एव प्रबलप्रत्यक्षबाध्यताया अत्राप्यपवादानवकाशात् ।

अथ प्रत्यक्षेण प्रपञ्चस्य सत्यत्वमेव न गृह्यते, येन प्रकृतानुमानबाधशङ्कावकाशस्स्यादित्याग्रहगृहीतग्राहिणां पूर्वोक्तसमीचीनसमाधानानभ्युपगमे प्रतियोग्यप्रसिद्ध्या सत्यत्वाभावरूपसाध्याप्रसिद्धिरित्यनिष्टप्रसङ्गः उक्तः । तदुत्तम्भकतया तुल्ययुक्त्या ब्रह्मण्यप्यविशिष्टस्सत्त्वापहार इत्यप्युक्तम् । तत्र आनन्दो विषयानुभवो नित्यत्वं चेत्यादिना पञ्चपादिकोक्तरीत्या कल्पितं तत्त्वं ब्रह्मण्यपीत्युपगमेन सत्त्वाभावस्य प्रतियोग्यप्रसिद्ध्या नाप्रसिद्धिरिति यदुक्तं तदयुक्तमेव । ब्रह्मणि प्रसिद्धस्य कल्पितसत्त्वस्य प्रपञ्चेऽप्यभ्युपगमेन तत्प्रतिषेधायोगात् । प्रतिषेध्यतयाऽभिमतस्य परमार्थसत्त्वस्य क्वचिदपि प्रसिद्धेरप्रदर्शितत्वाच्च । ब्रह्मभिन्नत्वापरपर्यायं सद्विविक्तत्वं साध्यत इत्युक्तमपि सिद्धसाधनमित्युक्तदूषणम् । स्वतस्सद्रूपत्वमहेतुकत्वमिति कल्पे सद्विविक्तत्वमित्यनेन सहेतुकत्वस्यैव लाभात्तस्य नित्यानित्यप्रपञ्चसद्भाववादिनां मते सिद्धत्वेन सिद्धसाधनमित्युक्तम् । तत्र पराभिमतविवर्तत्वानभ्युपगमेन परिहारस्तु परिहास्यः । सद्विविक्तमित्यनेन पूर्वोक्तरीत्या विवर्तत्वविशेषानभिधानात् । कथञ्चित् तत्परत्वाभ्युपगमे च साध्यासंप्रतिपत्तेरनिवार्यत्वापत्तेः ।

न ह्यस्मन्मते क्वचिद्विवर्तत्वमुपगतमस्ति । एवं स्वयंप्रकाशत्वं सद्रूपत्वमिति कल्पे सद्विविक्तमितिशब्देन परप्रकाश्यत्वस्यैव लाभात्तस्य जडघटित-

प्रपञ्चवादिनामिष्टत्वेन पूर्ववद्दोष इत्युक्तम् । तत्र ब्रह्माश्रिताज्ञानतत्कार्यान्यतरत्वविवक्षणे उदक्षरत्वं ब्रह्माश्रिताज्ञानानभ्युपगमेनान्यतरासिद्धिश्च स्यात् ।

सत्त्वाभावेऽपि सद्रूपमिति कल्पे न सिद्धसाधनमर्थान्तरं वा शतदूषण्यामभिहितं, किन्तु दृश्यत्वेऽपि ब्रह्मणस्सद्रूपत्ववत् प्रपञ्चस्यापि सद्रूपत्वे को विरोध इति । ब्रह्मणि सद्रूपभेदाभावेऽपि विद्यमानेनात एव तदनैकान्तिकेन दृश्यत्वेन प्रपञ्चे सद्रूपभेदसाधनं न शक्यमिति भावः । अतस्सद्रूपभिन्नत्वानुमाने सद्रूपत्वमादायार्थान्तरापादानायोग इत्यनुक्तोपालम्भनमेव ।

## अप्रसिद्धमिथ्यात्वसाधनानुपपत्तिः

यत्तु अन्यथाख्यातिवादिपराभिमतमिथ्यात्वं न मिथ्यात्वमित्यद्वैतिनस्स्वीकुर्वन्ति, किन्तु तद्विलक्षणम् । तत्साधनायैवेदमनुमानमिति । तन्न विलक्षणमिथ्यात्वस्यान्यत्र क्वचिदप्यसंप्रतिपन्नत्वेन साध्यत्वायोगात् । अन्यत्र क्वचित्संप्रतिपन्नमेव हि साध्यं भवितुमर्हति, न त्वप्रसिद्धमपि । अन्यथा शशशृङ्गस्यापि केनचिद्युक्त्याभासेन साधनापत्तेः । तदिह सिषाधयिषितविलक्षणमिथ्यात्वमन्यत्र कुत्र परैरपि सम्प्रतिपद्यते ? असंप्रतिपन्नस्य च कथं क्वचित् व्याप्तिप्रदर्शनम् ? व्याप्यवत्तोपनयो वा ? अतः कथमनेनानिर्वचनीयत्वसिद्धिः ? कथं वा जल्पादिकथायां परमतनिरसनम् ? वादकथायां तु तत्त्वोपदेशोऽस्य प्रयोजनमित्यभिधीयते । सर्वमिथ्यात्वे उपदेशानुपपत्तिरेव हि वक्ष्यते । प्रमाणोपन्यासमन्तरा कथं कथायाः प्रवृत्तिः । प्रमाणान्यपि यदि मिथ्यात्वानुमानेन मिथ्येत्यवसीयेरन् कथं तैस्सकृदुक्तैरपि तत्त्वाधिगमःस्यात् । मिथ्याभूतस्य तत्रापि मिथ्यात्वेन परिज्ञातस्यार्थक्रियाकारित्वं च सर्वानुभवविरुद्धम् । न हि मिथ्येति ज्ञातमपि शुक्तिरजतादिकं कस्यचित् यत्किञ्चिदर्थक्रियाकारि भवताऽपि दृष्टम् । मिथ्यात्वेन ज्ञातस्यापि प्रमाणस्य साधकत्वे हेत्वाभासैरपि किमपराद्धं, कुतो न तेषां साधकत्वम् ? दोषमूलस्यापि साधकत्वाभ्युपगमात् । अविद्यामूलकस्य साधकत्वोपगमेऽपि तदितरदोषमूलकस्य साधकत्वं नाभ्युपेयत इति चेत्, तर्ह्यत्रानुमाने शुक्तिरजतं दृष्टान्ततया कथं साधकमभिधीयते । तस्याविद्यातिरिक्तदोषमूलत्वोपगमात् । दोषमूलत्वाविशेषे कस्यचित्साधकत्वं नान्यस्येत्यत्र च किं नियामकम् ?

लोकव्यवहार इति चेत्तर्हि कथं प्रमाणान्तरविरुद्धमपि साधकमुपगम्यते ? न ह्युष्णत्वप्रत्यक्षविरुद्धमप्यनुष्णत्वानुमानं बाधकमिति लोकव्यवहारोऽस्ति। तथापि शास्त्रज्ञव्यवहारसिद्धमपच्छेदनयात्पूर्वप्रमाणविरुद्धस्यापि परप्रमाणस्य स्वविषयसाधकत्वमिति चेन्न। तस्य न मिथ्येत्यस्मदुक्तेस्ततोऽपि परत्वादित्यादिना शतदूषण्यामेव दत्तोत्तरत्वात्।

## विश्वप्रत्यक्षान्मिथ्यात्वानुमानस्यापच्छेदनयात् प्राबल्यमित्युक्तिनिरासः

ननु नह्यद्वैतिनः परत्वमात्रेण परस्य प्राबल्यमभिप्रयन्ति। किन्तु प्रमाणस्य सतः परत्वेनेति चेत्। मैवं। प्रमाणसत्ताभ्युपगमस्य विश्वमिथ्यावादविरुद्धत्वात्। मिथ्याभूतप्रमाणस्य च सर्ववाक्यसाधारणत्वाच्च। पुनश्च लोकव्यवहारेण तद्व्यवस्थापने दत्तमेवोत्तरम्।

वस्तुतस्तु प्रमाणत्वे बाध्यत्वं, बाध्यत्वे प्रमाणत्वं च व्याहृतमेव। तर्हि कथमपच्छेदनय इति चेत्। तत्रोक्तं शतदूषण्यामेव—अनियतविरोधपौर्वापर्यतया अन्यतरोदयसम्भावनया च प्रयोगान्तरेषु प्रामाण्योपपत्तेरिति।

यत्तु तेनैव न्यायेनात्रापि मिथ्यात्वानुमानेन प्रत्यक्षबाधेऽपि न प्रत्यक्षप्रामाण्यस्य सर्वात्मना बाधः। व्यावहारिकप्रामाण्येन व्यवहारोपयोगितया श्रीभाष्योक्तं व्यवहारोपयोगितालक्षणं प्रामाण्यमपि निरपोहमेवेति तदसत् वैषम्यात्। तत्र हि क्रमिकापच्छेदद्वयप्रवृत्तिस्थले पूर्वनिमित्तप्रवृत्तशास्त्रस्य उत्तरनिमित्तनैमित्तिकशास्त्रेण बाधेऽपि प्रयोगभेदेन प्रामाण्यं बाध्यत्वं चोभयमप्युपपाद्यते। तद्वत्प्रकृते प्रपञ्चसत्त्वप्रत्यक्षस्य विश्वमिथ्यात्वानुमानेन बाधोपगमे तत्प्रामाण्योपपादकं न किञ्चन वक्तुं शक्यम्। कालभेद एव तदुपपादक इति चेन्न। व्यवहारकाल एव प्रत्यक्षेण प्रपञ्चो गृह्यते, तदेव तत्प्रत्यक्षं बाध्यते त्वदुक्तानुमानेनेति वक्तव्यतया कालभेदाभावात्। न च मिथ्यात्वानुमानं मुक्तिदशाभिप्रायमित्युक्तं युक्तम्। तदानीमुक्तानुमानस्य तद्विषयस्य च अनभ्युपगमात्। व्यवहारकाले प्रपञ्चस्य बाधाभावे मिथ्यात्वानुपपत्तेश्च। व्यवहारकाल एव हि प्रपञ्चः प्रतिपद्यते। प्रतिपन्नदेशकालाद्युपाधौ निषेधादेव हि मिथ्यात्वं गम्येत। कालविशेषे प्रतिपन्नस्य कालान्तरे प्रतिषेधो ह्यनित्यसाधारणो न मिथ्यात्वं तदविना-

भावेन तद्गमको वा। किन्त्वनित्यत्वमादायांशतस्सिद्धसाधनस्यार्थान्तरस्य वा प्रसञ्जकस्स्यात्। पूर्वोक्तापच्छेदस्थले च उत्तरशास्त्रस्य पूर्वशास्त्रं बाधमानस्यैव प्रवृत्तिरुच्यते, न तु बाधिष्यमाणस्य। तदुक्तं—पूर्वाबाधेन नोत्पत्तिरुत्तरस्य न विद्यत इति। तद्वदिहानुमानमपि व्यवहारदशायामेव स्वविरोधि पूर्वं प्रत्यक्षं बाधमानमेवोत्पद्यत इति वक्तव्यत्वात् व्यवहारदशायामेव बाधेऽभ्युपगन्तव्ये सति कथमस्य व्यावहारिकं प्रामाण्यं? बाधाभावे च अत्यन्तबाधे वा कथमिहापच्छेदनयः। प्रयोगभेदादिना प्रामाण्यबाधयोरुपपत्तावेव हि तन्न्यायः।

एतेन एकसत्तावादेऽत्यन्तबाध इत्युक्तमप्यपास्तम्। न च व्यवहारोपयोगित्वं प्रामाण्यमिति श्रीभाष्यकृद्भिरुक्तम्। किन्तु व्यवहारयोग्यत्वं सत्त्वमिति। तच्च प्रामाणिकत्वमिति शतदूषण्यां व्याख्यातमित्युक्तम्। तच्च प्रमाणविषयत्वं न तु प्रामाण्यमिति न कथञ्चिदपि भवदुक्तस्य श्रीभाष्यसंवादप्रसक्तिः। अबाधितमेव प्रमाणमिति तदाशयस्य स्फुटत्वात्। तादृशं च विश्वप्रत्यक्षमपि स्वारसिकबाधादर्शनात्। न चास्य रज्जुसर्पशुक्तिरजतादि भ्रमवद् दुष्टकारणजन्यत्वं, काचकामालादिदोषेष्वत्र कस्याप्यनुपलम्भात्। तेन च मिथ्यात्वानुमानस्य परोक्षत्वेन दुष्टकारणजन्यत्वेन च दुर्बलत्वादत्यन्तबाधः। प्रमाणस्यैव चात्यन्तबाधो नाङ्गीक्रियते, न तु हेत्वाभासतया अप्रमाणस्यापि। हेत्वाभासत्वं चास्य बहुधा निरूपितमधस्तात्। विशेषश्चास्य प्रथमकक्ष्यायामेव स्फुटप्रतीतव्याघातादिभिर्विलय इत्युक्तम्।

यत्तु दुष्टकारणजन्यत्वेन भ्रमत्वं प्रत्यक्षस्यैव, न तु परोक्षस्येति। तन्न। तथासति हेत्वाभासानामेव विलयापत्तेः। बाह्यागमानामप्रामाण्यानुपपत्तेश्च। अतो यन्नानुमानं परोक्षं भ्रमकथामपि सहत इति नारायणतीर्थवार्तिकं, तद्वार्तमेव। अत एव सुष्ठूक्तं यत् कथंचिदपि विश्वमिथ्यात्वप्रतिज्ञानं न शक्यमिति। मिथ्यात्वस्य विकल्पासहत्वेन दुर्वचत्वात् पक्षहेत्वादिभिर्व्याघातात्, दृष्टान्तासिद्धेः साधकाभावात्, बाधसंभवाच्च।

## दृश्यत्वविकल्पदूषणसमर्थनम्

दृश्यत्वं ब्रह्मण्यनैकान्तिकमिति भाष्येणैव सूचितमिति प्रथमत एवोक्तम्। तदेवान्तेऽपि पंचधा विकल्प्य सर्वत्रापरित्यक्तदोषमिति प्रपंचि-

तम् । तत्र यदुक्तं ज्ञानविषयत्वं दृश्यत्वं अत्र ज्ञानपदेन वृत्त्यवच्छिन्नचैतन्यं विवक्ष्यते, वृत्तिमात्रविषयस्यापि ब्रह्मणः वृत्त्यवच्छिन्नचैतन्याविषयत्वान्नानैकान्तिकतेति । तत्तुच्छम् । घटादिप्रपंचस्यापि वृत्तिविषयत्वमात्रेण शास्त्रेण ब्रह्म जानामीतिवत् चक्षुरादिना घटादिकं जानामीति प्रतीतिव्यवहारोपपत्त्या वृत्त्यवच्छिन्नचैतन्यविषयत्वे मानाभावेन हेतोरसिद्ध्यापत्तेः । अत्र आवृतचैतन्याध्यस्तमनावृतचैतन्यतादात्म्येन भासते, अभेदाभिव्यक्तिचिदुपरागावारणाभिभवार्था वृत्तिरित्याद्यद्वैतिकल्पितनानाविधपारिभाषिकप्रक्रियाणां विश्वमिथ्यात्वसिद्ध्यधीनजीवनसंभावनानां ततः पूर्वमुपन्यासेन न किंचित्प्रयोजनमुपलभामहे । अतः "मनसैवानुद्रष्टव्यं" "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सहे"ति श्रुत्योः नान्तं गुणानां गच्छन्ति वर्षायुतैर्यस्य गुणा न शक्या वक्तुं, मनसा तु विशुद्धेन इत्यादिप्रमाणत एव विरोधशमनेन यतो वाचो निवर्तन्त इति वाक्यस्य घटादिवद्वेद्यत्वनिषेधपरतया व्यवस्थापनमप्यनुपादेयम् । आनन्दातिशयपरिच्छेदपरपूर्वप्रकरणस्य "आनन्दं ब्रह्मणो विद्वानित्यनन्तरवाक्ये वेद्यत्ववचनस्य च व्याघातापातात् ।

एवं ज्ञानविषयत्वस्य ब्रह्मण्यनभ्युपगमे द्वितीये दृश्यत्वे न व्यर्थविशेषणतेति ब्रह्मण्यनैकान्त्यवारणं विशेषणप्रयोजनमित्युक्तमपि न घटेत । तत्र ज्ञानपदस्य वृत्तिमात्रपरत्वविवक्षया तद्घटनीयमिति चेत् । तर्हि सन्मात्रब्रह्मणः प्रत्यक्षत्वविशेषितवृत्तिविषयत्वस्याप्युपगमादनैकान्त्यवारणासंभवेन विशेषणवैयर्थ्यंतादवस्थ्यस्य शतदूषण्यामेव दर्शितस्यापरिहारात् । एवं तत्र दृश्यतिरिक्तत्वं दृश्यत्वमिति कल्पे च व्यतिरेकस्य पारमार्थिकत्वापारमार्थिकत्वादिविकल्पेन साधनवैकल्यस्वरूपासिद्ध्यनैकान्त्यान्युक्तानि । दृश्यतिरिक्तत्वपदेन दृक्तादात्म्यविवक्षणं चानीलपदे नीलतादात्म्यविवक्षणवद्व्याहतम् । किं च मिथ्यात्वसिद्धेः पूर्वमध्यासनिबन्धनं तादात्म्यमसिद्धमेव । पारमार्थिकव्यतिरेकविवक्षायां शुक्तिरूप्यदृष्टान्तस्य साधनवैकल्यमेवोक्तम् । न तु तत्रानैकान्त्यमपि । अतश्शुक्तिरूप्यस्यापि पक्षसमत्वाङ्गीकारेण न पारमार्थिकव्यतिरेकित्वं शुक्तिरूप्यादावनैकान्तिकमिति यदुक्तं, तत्समासभ्रमनिबन्धनम् । एवमग्रेऽपि शुक्तिरूप्यादेः पक्षसमत्वाङ्गीकारे उदाहरणस्याश्रयवैकल्यमपरिहार्यम् । व्यतिरिक्तपदस्य व्यतिरेकपदस्य वा व्यतिरेकप्रकारकधीविशेष्यत्वपरत्वमशाब्दमनर्थकं च । अपरमार्थव्यतिरेकप्रकारकधीवि-

शेष्यत्वस्य ब्रह्म वृत्यतिरिक्तमिति भ्रान्तोक्तवाक्यजबोधमादाय ब्रह्मण्युपपादनसंभवेनानैकान्त्यापरिहारात् । प्रमाणभूतागमेषु क्वचिदपि मिथ्यात्वबोधकाक्षरलेशोऽपि नास्तीत्युपपादनेन अद्वैतसिद्ध्याद्युक्तभाविबाधोपपादनस्यानुपपन्नत्वात् । सत्कार्यवादिनां प्रपंचस्य स्वरूपेण त्रिकालाबाध्यत्वरूपपारमार्थिकत्वमविरुद्धमेव । तेन न च प्रपंचे त्रिकालाबाध्यत्वं केनापि निर्णीतमित्युक्तमप्ययुक्तमेव ।

वस्तुतस्त्वत्र व्यतिरेक एव पारमार्थिकत्वापारमार्थिकत्वयोर्विकल्पनात् प्रपंचे तत्तदुपपादनतत्प्रतिषेधयोर्न सङ्गतिरस्ति । अपारमार्थिकव्यतिरेकित्वपल्लवाज्ञानतत्कार्यान्यतरभिन्नत्वमित्युक्तमपि अन्यतरानात्मके ब्रह्मण्यनैकान्तम् । शुद्धं ब्रह्म अपारमार्थिकव्यतिरेकवदिति वाक्यजन्यज्ञानीयव्यतिरेकप्रकारतानिरूपितविषयताया अपि शुद्धब्रह्मण्यनिवार्यत्वात् । पल्लवाज्ञानानभ्युपगन्तृमते स्वरूपासिद्धं च स्यात् ।

एतेन प्रातिभासिकव्यतिरेकप्रकारकज्ञानविशेष्यत्वस्य ब्रह्मण्यभावान्न व्यभिचार इत्युक्तमपि प्रत्युक्तम् । प्रातिभासिकव्यतिरेकवच्छुद्धं ब्रह्मेति वाक्याधीनज्ञानविषयत्वस्य तत्र दुरपह्नवत्वात् । यद्यप्यद्वैतमते शुद्धब्रह्मणि ब्रह्मशब्दवृत्त्यनुपपत्तिः प्रथमत एव प्रतिपादिता । तथापि तन्मते ब्रह्म न शब्दप्रतिपाद्यमित्यपि न वक्तुं शक्यमिति शतदूषण्यामिहैवाधस्तादुपपादितत्वादनैकान्त्यमपरिहार्यमेव । एवं वृत्तिविषयतयैव सर्वव्यवहारोपपत्तौ फलव्याप्यत्वरूपमपि दृश्यत्वमुपेतव्यमित्यत्र न किंचन मानं प्रयोजनं वेति पुरस्तादेवोपपादितम् । दृश्यत्वं चात्र पंचधा विकल्प्य निर्दुष्टं दुर्निरूपमिति स्फुटीकृतम् । तत्र पंचमकल्पेन वृत्तिविषयत्वमपि क्रोडीकृतम् । तच्च ज्ञानविषयत्वकल्पदूषणेनैव दूषितमिति न पृथक् प्रत्युक्तम् । स्वसमानसत्ताकवृत्तिविषयत्वं दृश्यत्वमित्यादयो नवीनोत्प्रेक्षितकल्पाश्च कृत्स्नमिथ्यात्वसिद्धेः प्राक् ब्रह्मणि सन्दिग्धानैकान्त्यादिना दूषणेन चण्डमारुतेनैव दूरोत्सारिताः । अद्वैतमते प्रपंचस्यापि व्यावहारिकस्यैव दृश्यत्वस्याभ्युपगमात् ब्रह्मणि दृश्यत्वं व्यावहारिकमेवेत्युक्त्या न कश्चिद्विशेष उक्तो भवति । अधिकरणान्यूनसत्ताकत्वविशेषणेऽपि सन्दिग्धानैकान्त्यमनिवार्यमित्यादावेवोक्तम् । उपहितस्य ब्रह्मणो वृत्तिविषयत्वं, न त्वनुपहितस्येति कल्पस्तु

अत्यन्तबल्बजः। ब्रह्मणश्शब्दप्रतिपाद्यत्वानभ्युपगमे ब्रह्म न शब्दप्रतिपाद्यमिति न वक्तुं शक्यमिति शतदूषण्युक्तरीत्या वृत्तिविषयत्वानभ्युपगमे अनुपहितं न वृत्तिविषय इत्यपि वक्तुमशक्यत्वात्। तस्य श्रुत्यादिप्रमाणविषयत्वस्याप्यनभ्युपगमे अप्रामाणिकत्वापत्तेः। स्वयंप्रकाशमानत्वे च तत्र पण्डितपामरवैषम्यानुपपत्तेः। ज्ञेयब्रह्मेति वाचोयुक्तेरप्ययुक्तेः। येनाक्षरं पुरुषं वेद सत्यमित्यादिवाक्यविरोधात्। वेदान्तपरिश्रमवैयर्थ्यापाताच्च। अतो वाक्यजन्यवृत्तिविषयत्वमवश्यमभ्युपेत्यमिति तत्र सिद्धमनैकान्त्यम्।

वस्तुतो वृत्तिसाधकयुक्तीनामिह चण्डमारुतेनैव निर्धूतत्वात् ज्ञानविषयत्वमेव दृश्यत्वम्। तच्च ब्रह्मासाधारणमेवेति न मिथ्यात्वसाधकमिति युक्तमुक्तं, मिथ्यात्वानुमानमप्रयोजकमिति।

---

## व्यावर्तमानत्वानुमानभङ्गवादः

एवं व्यावर्तमानत्वानुमानेष्यनैकान्त्यमप्रयोजकत्वादिकं च प्रदर्शयितुं शतदूषण्यां तत् षोढा विकल्पितम् । तत्र यतः कुतश्चिदन्यत्वमिति प्रथमः कल्पः । तत्र युष्मदर्थादन्येन ब्रह्मणैवानैकान्त्यमुक्तम् । तत्र युष्मदस्मत्प्रत्ययगोचरयोः विषयविषयिणोस्तमःप्रकाशवद्विरुद्धस्वभावयोरितरेतरभावानुपपत्तावित्यध्यासभाष्यमुपादाय संप्रतिपत्तिः प्रदर्शिता । अत्र यदाहास्य सन्दर्भस्याध्यासपूर्वपक्षभाष्यत्वान्न सिद्धान्त्यभिमतत्वमिति । तन्न । तत्र सिद्धान्ते युष्मदर्थान्यित्वस्य निराकरणादर्शनात् । तथाप्यन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येतरेतराविवेकेनेत्यादिसिद्धान्तभाष्येणापि प्रतीत्यभावेऽपि युष्मदर्थान्यित्वाभ्युपगमाधिगमेन तदनभिमतत्वायोगात् । भेददूषणनिस्तारे भेदप्रतीतिस्तु सर्वसंप्रतिपन्नैव । अत एव युष्मदस्मत्प्रत्ययगोचरयोरिति विवेकग्रहेणाध्यासाक्षेपोपक्रमः शङ्करभगवत्पादानामिति भवतैवोक्तत्वाच्च । युष्मत्प्रत्ययगोचरान्यत्वस्य सिद्धान्तानभिमतत्वे तदैक्यस्याभिमन्तव्यतया मिथ्याभूतप्रपंचैक्यात् ब्रह्मणोऽपि मिथ्यात्वं, सत्यब्रह्मतादात्म्यात् प्रपंचस्यापि वा सत्यत्वमिष्यतामिति प्रसङ्गस्य शतदूषण्यामेव दर्शितस्य न निवारणप्रसक्तिरस्ति । इष्टापत्तावपसिद्धान्तप्रसङ्गश्च दुस्तरस्स्यात् ।

अत्र च यद्विषया बुद्धिर्न व्यभिचरति तत् सत्, यद्विषया बुद्धिर्व्यभिचरति तदसदिति सदसद्विभाग इत्यादिभगवत्पादीयभाष्यस्य देहात्मविवेकप्रकरणस्थया नासतो विद्यते भाव इति गीतयेव यतः कुतश्चिदन्यत्वं व्यावर्तमानत्वमित्यनेनापि कल्पेन न कश्चित्संबन्धोऽस्ति । शतदूषण्यां यतः कुतश्चिद्व्यभिचरितत्वं व्यावृत्तत्वमिति कल्प एव विशिष्य नोपक्षिप्तः । अथापि तदुक्ततया तदनुवादे यतः कुतश्चित्सद्बुद्धेर्व्यभिचरितत्वमित्येवार्थ इति तद्व्याख्यानकरणे चान्ध्यमेव दृढं निबन्धनं भवितुमर्हति ।

### ब्रह्मण्यनैकान्त्यस्यानिवार्यता

यतः कुतश्चिदन्यत्वमित्यस्य कथंचिदपि सद्बुद्धिव्यभिचारपरत्वं न शक्यमुपपादयितुम् । शक्यत्वेऽपि न तत्र वक्तृतात्पर्यमित्यनैकान्त्यादिति

दूषणोक्त्याऽपि गम्यते। अन्यथा अन्यतरानैकान्त्यमित्येवाभिधीयेत। न ह्यस्ति घटः, सन् घट इत्यादावस्तीत्यादिना सतो ब्रह्मण एव घटाद्यधिष्ठानतया भानमित्युपेमः। किन्तु "अस्ति ब्रह्मेति चेद्वेद" इत्यादाविव तत्तद्धर्मभूतसत्ताया एव कालदेशप्रमाणसंबन्धादिरूपाया आश्रयविशेषणतया भानमिति। अतस्सन् घट इत्यादौ ब्रह्मणो विषयत्वानभ्युपगमेन तत्र सद्बुद्धिव्यभिचरितत्वस्यावार्यत्वादस्मन्मतरीत्यैव तत्रानैकान्त्यस्य वक्तुं शक्यत्वात्। मिथ्यात्वप्रत्यनीकस्य प्रामाणिकत्वरूपस्य प्रपंचसाधारणस्य सत्त्वस्य प्रागेव निर्वचनेन सद्विशेष्यकस्वातिरिक्तपटादिविषयकबुद्ध्यविषयत्वरूपतया फलितस्य व्यावृत्तत्वस्यापि तद्घटकबुद्धिपदेन ब्रह्मेतरसद्विशेष्यक बुद्धिग्रहणे ब्रह्मसाधारण्यं दुरपह्नवमेव। सत्पदेन सन्मात्रविशेषविवक्षायां च हेतोरन्यतरासिद्धिः। अस्मन्मते सन्मात्रानभ्युपगमेन तद्विशेष्यकबुद्धेः तद्घटितहेतोश्चासंप्रतिपत्तेः। संप्रतिपन्नेन हि हेतुना भाव्यम्। यथाह :— 'नाश्रौषीः साधनत्वं किं प्रसिद्धस्य द्वयोरपी'ति। ब्रह्मण एव विवक्षायां तु तद्विशेष्यकबुद्धिविषयत्वस्य घटादिनिष्ठस्याभावोऽपि ब्रह्मण्यविरुद्ध एव। विषयत्वसामान्याभावविवक्षायां च भवन्मतेऽपि सन् घट इत्यादितथाविध प्रतीतिविषये घटादावसिद्धिः। स्वातिरिक्तविषयकेति बुद्धिविशेषणेऽपि सन्तौ घटपटाविति तथाविधबुद्धिविषयतया घटादौ तदभावासिद्धितादवस्थ्यम्। किं च ब्रह्मविशेष्यकबुद्धिविशेषाविषयत्वेन घटादेर्व्यावृत्तत्वोपगमे तुल्ययुक्त्या घटो नष्ट इत्यादिघटादिविशेष्यकप्रतीत्यविषयतया ब्रह्मणोऽपि व्यावृत्तत्वं स्यादिति विपरिवर्तप्रसङ्गोऽपि दुर्निवारः।

एतेन स्वाधिष्ठानविशेष्यकस्वातिरिक्तविषयकबुद्ध्यविषयत्वं व्यावर्तमानत्वमिति निष्कर्षश्च निरस्तः। अद्वैतमतेऽपि स्वाधिष्ठानब्रह्मविशेष्यकस्वातिरिक्तसद्विषयकसन् घट इत्यादिबुद्धिविषयत्वस्यैव घटादौ सत्त्वेन तदभावासिद्धेः। प्रातिभासिकानिर्वचनीयोत्पत्तिमनभ्युपगच्छतां क्वचित्सिद्धस्यैवान्यत्रारोपमिच्छतां मते ब्रह्मतादात्म्यभ्रमविशेष्यतया ब्रह्माधिष्ठानभूतप्रतिमादिविशेष्यकप्रतिमा दारुमयीत्यादिबुद्ध्यन्तराविषयत्वस्य विपक्षभूतब्रह्मण्यनिवार्यत्वाच्च। अस्मन्मतासिद्धस्य कस्यचिदर्थस्याधिष्ठानपदेन विवक्षायां तद्घटितहेतोरन्यतरासिद्धिः।

## द्वितीयकल्पेऽनैकान्त्य—अप्रयोजकत्वस्थापनम्

अत एव यत्र कुत्रचिद्देशादावसत्त्वं व्यावर्तमानत्वमिति द्वितीयकल्पोऽपि पूर्वोक्तहेतुघटकाभावप्रतियोगिबुद्धिविषयत्वे देशकालविशेषावच्छिन्नत्वविशेषणाभिप्रायेणेत्युक्तमपि प्रत्युक्तम्। स्वाधिष्ठानप्रतिमादिविशेष्यक नष्टा प्रतिमेति बुद्धिविषयत्वस्य ब्रह्मणि क्वचिदपि काले देशे वा अभावेनानैकान्त्यानिवारणात्। देशकालविशेषावच्छिन्नत्वविशेषणस्यानर्थकत्वाच्च। न च तेन देशान्तरे कालान्तरे वा उक्तविधबुद्धिविषयत्वमादाय हेत्वसिद्धिशङ्का वार्यत इत्युक्तं युक्तम्। देशकालविशेषावच्छिन्नत्वविशेषणेन तदवारणात्। अनवच्छिन्नत्वविशेषणेन हि तद्वारणसंभवः। असिद्धिवारकत्वेऽपि व्यभिचारावारकत्वेन हेतुविशेषणस्य वैयर्थ्यंतादवस्थ्याच्च। तदुक्तमाचार्यैः—एकामसिद्धिं परिहरतो द्वितीयापत्तेरिति। सर्वेषु देशेषु सर्वेषु कालेषु घटादि बुद्धिदशायां सन् घट इत्येव प्रतीतिरित्यप्यसत्। अतीतदशायां नष्टो घट इत्येव प्रतीतेः। सन्निति प्रतीतावपि सत्ताश्रयतया घटादेरेव भानं, न तु सन्मात्रस्येत्युक्तम्। तथा च द्वितीयकल्पस्य यथाश्रुतार्थपरत्वे अनित्यसाधारण्यात् मिथ्यात्वं प्रत्यप्रयोजकत्वमुक्तम्। उक्तरीत्या कालदेशभेदावच्छिन्नसद्बुद्धिविशेषविषयत्वाभावपरत्वे तु नित्यस्यापि साधारणत्वादप्रयोजकत्वं सुतराम्। न च शुक्तिरूप्यादिवत् प्रतिपन्नदेशकालाद्युपाधौ घटादिप्रपंचस्यासत्त्वं, तदवच्छेदेन बुद्धिविषयत्वाभावः बुद्धिविषयाभावप्रतियोगित्वं वा वक्तुं शक्यः। येन तद्वन्मिथ्यात्वमाशङ्क्येत। देशकालान्तरासत्त्वं स्वाविषयकबुद्ध्यविषयत्वं वेत्येवमादीनि सत्यसाधारणानि न मिथ्यात्वं गमयेयुः। देशकालबुद्ध्यन्तरवैशिष्ट्येनासत्त्वं तु ब्रह्मणोऽपि तदवृत्तिना येन केनापि सदसद्विलक्षणत्वादिनाकारेण यदसत्त्वं तत्तुल्यमेव। यदिचास्य मिथ्यात्वप्रयोजकत्वमिष्यते तर्हि ब्रह्मणोऽपि मिथ्यात्वं दुर्वारम्। यदि च न तदा प्रपंचस्यापि न मिथ्यात्वमिति यत्र कुत्रचिद्देशादावसत्त्वमित्यस्य यथाश्रुतार्थादुक्तपरिष्कारे अप्रयोजकत्वांशे न कश्चिद्विशेषः। अपि तर्हि अनैकान्त्यसंपादन एव। अतो यथाश्रुतार्थस्यैव ग्रहणौचित्येन तत्र च क्वाचित्कस्य कादाचित्कस्य च सर्वत्र सर्वदा सत्वानभ्युपगमादप्रयोजकत्वमुक्तमप्रकम्प्यमेव।

## तृतीयकल्पदूषणसमर्थनम्

प्रध्वंसवत्वं व्यावर्तमानत्वमिति तृतीयः कल्पः, ध्वंसप्रतियोगित्वमिति यथाश्रुतार्थः। तत्र सत्येष्विव मिथ्याभूतेषु ध्वस्त इति व्यवहाराभावेन बाधविनाशपदयोरर्थभेदव्युत्पादनेन दृष्टान्तस्य साधनवैकल्यमुक्तम्।

यत्तूक्तदोषपरिहाराय प्रध्वंसपदेनाधिष्ठानसाक्षात्कारजन्यनिवृत्तेरेव विवक्षणादित्युक्तं। तद्वार्तम्। नायं सर्पो रज्जुरेषेत्यधिष्ठानसाक्षात्कारानन्तरं रज्जुसर्पो ध्वस्त इति प्रामाणिकव्यवहारापत्तेः। अस्मन्मते घटादिप्रपंचस्य अधिष्ठानसाक्षात्कारनिवर्त्यत्वानभ्युपगमेनोक्तहेतोरसिद्धत्वाच्च। अत एव कार्यात्मना कारणात्मनेति निवृत्तिद्वैविध्यप्रतिपादनस्य ग्रन्थपूरणादन्यत्र न किंचित्प्रयोजनमत्रेति तत्रेदानीमुदास्महे। अतो यथाश्रुतार्थपरिग्रहे विपरीतसाधकत्वमप्यधिकदूषणमुक्तम्।

## चतुर्थकल्पदूषणसमर्थनम्

प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं व्यावर्तमानत्वमिति चतुर्थकल्पे असिद्धेरिति दूषणमुक्तम्। घटाद्याश्रये भूतलादौ घटाद्यभावस्य तत्प्रतीतेर्वप्यभावेनोक्तहेतोरसिद्धिरिति भावः। यच्च तत्रोक्तं स्वाधिष्ठाननिष्ठात्यन्ताभावप्रतियोगित्वं विवक्ष्यते, तस्य चाधिष्ठान साक्षात्कारनिवर्त्यत्व एव फलतः पर्यवसानमिति, तदपि पूर्वोक्तरीत्या असिद्धिपराहतमेव। न च नेह नानास्ति किंचनेति श्रुतिसिद्धं दृश्यत्वादिना प्रसाध्य तद्धेतूकृत्य ज्ञाननिवर्त्यत्वादिरूपं मिथ्यात्वान्तरं साध्यत इत्युक्तं युक्तम्। नेह नानास्तीत्यादि श्रुतेरतत्परत्वस्य पूर्वमेवोपपादितत्वात् श्रुतिसिद्धत्वे दृश्यत्वादिना तत्साधनवैयर्थ्यात्, दृश्यत्वस्यानैकान्त्यादिदोषभूयस्त्वेन असाधकतायास्साधितत्वाच्च।

एतेन सन्निष्ठात्यन्ताभावप्रतियोगित्वमिति निष्कर्षश्च निरस्तः। असिद्धेः, न हि सति घटो नास्तीति कश्चित्प्रत्येति। सन् घटस्सन् पट इत्यनुगतसतो विशेष्यतया भानोपगमेऽपि सन् पट इत्यनेन न तु घट इति घटान्यत्वमेव प्रतीयेत, न तु घटात्यन्ताभावः। सन् घट इत्यत्र तादात्म्यभानमेव ह्युपगम्यते, प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति प्रमाणतत्त्वविदः। मिथ्यात्वसिद्धेः प्राक् घटस्वरूपातिरिक्तसत एव सन् घट इत्यत्र भानमित्य-

ध्यसिद्धम् । अस्ति ब्रह्म घटोऽस्तीत्यादावित्र तत्तद्धर्मभूतसत्तावच्छिन्नगोचरत्वौचित्यस्य दर्शितत्वात् । अत एव घटोऽस्तीत्यादावपि सन् घटोऽस्तीति सद्बुद्ध्युपरागेणैव प्रतीतिर्वक्तव्या । अधिष्ठानानुभवं विना आरोप्यानुभवादर्शनादित्युक्तमपि प्रत्युक्तम् शुक्तिरूप्यादिवद्घटादिरप्यारोप्य एवेत्यस्य असंप्रतिपत्तेः । घटोऽस्तीत्यादावस्तित्वबुद्ध्यतिरेकेण सद्बुद्ध्युपरागस्यानुभवविरुद्धत्वात् । अन्यथा घटो नष्ट इत्यत्रापि सद्बुद्ध्युपरागे सन् घटो नष्ट इत्यपि प्रामाणिकव्यवहारापत्तेश्च ।

## पञ्चमकल्पदूषणसमर्थनम्

कदाचित् क्वचिदेव प्रकाशमानत्वं व्यावर्तमानत्वमिति पंचमकल्पे कुत्रचित्प्रमितत्वमात्रेणैव सत्यत्वसिद्ध्या मिथ्यात्वं प्रत्यप्रयोजकत्वं दूषणमुक्तम् । यदत्रोच्यते—क्वचिदेव प्रकाशमानत्वं अधिष्ठानविशेष्यकस्वप्रकारकधीविषयत्वे सति अधिष्ठानविशेष्यकबुद्ध्यन्तराविषयत्वं तत्रापि अधिष्ठानविशेष्यकबुद्ध्यन्तराविषयत्वमेव प्रकृते हेतुतया विवक्ष्यते, न तु विशेषणांशोऽपि, प्रयोजनाभावात् । तथा च नाप्रयोजकत्वं, अधिष्ठानविशेष्यकस्वव्यतिरिक्तविषयकबुद्धिविषयत्वाभावस्याधिष्ठाने कल्पितत्वं विना अनिर्वाहादिति । तदसारम् । द्वितीयकल्पे अयमेवार्थो विवक्षित इति भवदुक्त्या अंशतोऽपि भेदाभावे कल्पान्तरत्वायोगेनास्य पंचमकल्पविवक्षितत्वानुपपत्तेः । द्वितीयकल्पदूषणस्थापनावसर एवात्रास्मिन् अर्थेऽपि अनैकान्त्याप्रयोजकत्वाद्युपपादनेन अत्र पुनः प्रतिवक्तव्यशेषाभावाच्च । न च शुक्तिरूप्यसाधारणस्य क्वचित्प्रकाशमानत्वस्य कथं प्रपंचसत्यतानियामकत्वमिति शङ्क्यम् । दोषबाधाद्यभावसहकृतस्य तस्यैव नियामकत्वे विरोधाभावात् । न हि शुक्तिरूप्यादिग्रह इव कारणदोषो बाधकप्रत्ययो वा प्रपंचग्रहेऽपि वक्तुं शक्यते । प्रपंचग्राहकप्रतीतीनामनुगतसद्विशेषविशेष्यकत्वं प्रपंचांशे भ्रमत्वं कल्पितविषयकत्वं च पूर्वमेव निरस्तम् । तथा घटाद्यधिकरणदेशकालावच्छेदेन तदविषयकत्वं चासिद्धम् । स्वानधिकरणदेशकालान्तरावच्छेदेन स्वेतरगोचरबुद्ध्यविषयत्वं स्वस्य क्वाचित्कत्वे कादाचित्कत्वे वा मिथ्यात्वं विनापि उपपन्नमेवत्यापणस्थरजतादावनुभवसिद्धमेतत् ।

## ब्रह्मणस्सर्वबुद्धिविषयत्वे प्रमाणादिविरोधः

सार्वत्रिकस्य सार्वदिकस्यापि ब्रह्मणः रूपस्पर्शादिरहितस्य सर्व-बुद्धिविषयत्वमद्रेश्यमग्राह्यमिति श्रुत्यैव प्रतिषिध्यते। अद्वैतमतेऽप्याब्रह्म-साक्षात्कारमज्ञानतिरोहितस्य ब्रह्मण अप्रकाशमानत्वमभ्युपगम्यते। अत एव श्रवणादिषु प्रवृत्तिरर्थवतीत्यभिमन्यते, प्रमाणज्ञानसामान्यस्याप्रकाशितार्थप्रकाशकत्वमप्यङ्गीक्रियते। ब्रह्मज्ञानस्य तदनभ्युपगमे भागासिद्धिः, ब्रह्मज्ञानासिद्धिश्च। न च तथापि सर्वाधिष्ठानभूतस्य ब्रह्मणः अधिष्ठानान्तराभावात् स्वाधिष्ठानविशेष्यकस्वातिरिक्तविषयकबुद्ध्यविषयत्वरूपं व्यावर्तमानत्वमप्रसक्तमिति वाच्यम्। ब्रह्मभ्रमाधिष्ठानस्यापि प्रागेव दर्शितत्वात्। यथा सालग्रामे हरिः, सालग्राम इव विष्णोरित्यादिना शङ्करभाष्य एव दृष्टान्तप्रदर्शनपूर्वकं ब्रह्मणोऽप्युपलब्धिस्थानतया चक्षुर्हृदयाद्यधिष्ठानसाधनात्, तत्र तत्र च पामरबुद्ध्यविषयत्वादिना निरुक्तव्यावर्तमानत्वस्य ब्रह्मण्यप्यनिवार्यत्वाच्च।

एतेन ब्रह्मणस्सर्वाधिष्ठानत्वात्तदधिष्ठानस्याप्रसिद्धेः घटादिवद् ब्रह्म कदाचिदेकत्र प्रकाशते, अपरत्र न प्रकाशत इत्यसंभवात् उक्तरूपं व्यावर्तमानत्वं न ब्रह्मणीति न तत्र व्यभिचारः। न वा घटादिवत्तस्यापि मिथ्यात्वापत्तिः। ब्रह्मणः अज्ञानावरणनिबन्धनाप्रकाशमानत्वे सत्यपि न तत् मिथ्यात्वसाधकं, किन्तूक्तलक्षणव्यावर्तमानत्वघटकाप्रकाशमानत्वमेव। तत्तु न ब्रह्मणः। यावदज्ञाननिरासकवृत्तिस्वप्रकाशत्वनिबन्धनं प्रकाशमानत्वं तिरोधाननिबन्धनमप्रकाशमानत्वं च युगपदुपपद्यते। घटादीनां त्वज्ञानकार्याणां न ज्ञानेन तिरोधानं, न वा स्वप्रकाशत्वमिति न ब्रह्मसाम्यमित्युक्तं प्रत्युक्तम्। स्वप्रकाशत्वादिना साम्याभावेऽपि मिथ्यात्वप्रयोजकतया यद्व्यावर्तमानत्वमभिमन्यते, तेन रूपेण साम्यस्य प्रदर्शितत्वात्। प्रकाशमानत्वाप्रकाशमानत्वयौगपद्यस्याद्वैतमते चेतनविषयादिभेदाभावेन अविरुद्धस्य दुरुपपादत्वात्। कथंचिदुपपादने घटादीनामपि स्वकालवृत्तितया नित्येश्वरबुद्ध्या सर्वदा प्रकाशमानत्वेनाविशेषात्। घटादीनामज्ञानेन तिरोधानानभ्युपगमे घटादिप्रमाणज्ञानस्य स्वविषयावरणपूर्वकत्वायोगेन अज्ञानसाधनानुमाने वाधस्यानैकान्त्यस्य वा प्रसङ्गाच्च। न च घटाद्यव-

च्छिन्नचैतन्यमभिप्रेत्य तिरोधानादिवचनमिति वाच्यम् । अवच्छेदकतिरोधानमन्तरा अवच्छिन्नस्य तिरोधानायोगात् । अवच्छेदकघटादिमात्रे प्रकाशकप्रमाणप्रवृत्तेरनभ्युपगमाच्च । अनात्माकारप्रमाणवृत्तीनां तत्तदवच्छिन्नचैतन्यविषयत्वं ह्यद्वैतसिद्धावुच्यते । वस्तुतस्तु तदनुभवविरुद्धमेव । घटादिवृत्त्यनन्तरं एतावन्तं कालं मया न ज्ञातोऽयं घट, इदानीं ज्ञात इत्येव ह्यनुभवः, न त्वज्ञातं घटावच्छिन्नं चैतन्यं ज्ञातमिति । तत्र ह्यज्ञानावृतत्वं ज्ञानविषयत्वं च केवलघटस्यैव प्रतीयते, न तु चैतन्यस्यापीति स्फुटमेव । न च तत्र ज्ञात इति चैतन्यस्यापि भानमस्तीति शङ्कनीयम् । तथापि ज्ञानविषयत्वेनाभानात् मया ज्ञात इत्यात्मधर्मतया भातस्य धर्मिचैतन्यरूपत्वायोगात् । स्वप्रकाशस्य प्रमाणवृत्तिविषयत्वाभ्युपगमे प्रयोजनाभावात्, अवच्छिन्नस्य स्वप्रकाशत्वानभ्युपगमे अन्तःकरणावच्छिन्नचैतन्यं जीव इति मते जीवात्मनां स्वप्रकाशत्वानुपपत्तेश्च । अतोऽस्मदाद्यपेक्षया घटादीनां क्वचिदेव प्रकाशमानत्वमन्यत्राप्रकाशमानत्वं च समानं ब्रह्मणा, ईश्वराद्यपेक्षया सर्वदा प्रकाशमानत्वं च तथैव । तथा चोक्तव्यावर्तमानताया ब्रह्मसाधारण्यात् मिथ्यात्वं प्रत्यप्रयोजकत्वे च न विवदितव्यमित्युक्तं भवति । ईश्वरगतज्ञानेन जीवानां मुक्तिः, सार्वदिकघटादिप्रकाशश्च भवतीत्यस्यात्र न काचित्प्रसक्तिः, येन तत्प्रतिषेधोऽप्यत्र सार्थकस्स्यात् । ततः यदुक्तं न चेश्वरीयमायावृत्त्या तदीयेन धर्मभूतज्ञानेन वा जीवानां मोक्षः स्वपरसिद्धान्तसंमतः, नित्येश्वरबुद्धिविषयत्वेन न जीवानां नित्यं घटादिप्रकाश इत्यादिकं, तदिदमभागिप्रतिषेधः ।

## भ्रान्तबुद्धिविषयत्वेन शुक्तिरूप्यस्यापि नित्येश्वरबुद्धिविषयत्वसमर्थनम्

एवं शुक्तिरजतादेरपि नित्येश्वरबुद्धिविषयतया नित्यप्रकाशापत्तिरप्यपास्तेत्युक्तिरपि प्रसक्तिविरहादितः प्रच्युतिमेवार्हति । अस्मदाद्यपेक्षया कदाचित्प्रकाशमानत्वस्य ब्रह्मसाधारण्यादीश्वराद्यपेक्षया कदाचित्प्रकाशमानत्वस्यैव मिथ्यात्वं प्रति प्रयोजकत्वोपगमे घटादिपक्षे स्वरूपासिद्धेः । शुक्तिरजतादिदृष्टान्ते साधनवैकल्यस्य च प्रदर्शनाय 'नित्यो नित्याना'मित्यादिशास्त्रसिद्धनित्येश्वरबुद्धिविषयत्वेन घटादेरपि नित्यं प्रकाशमानत्वात् भ्रान्तबुद्धिविषयतया शुक्तिरजतादेश्च इत्येतावदेवोक्तम् शतदूषण्याम् । अत्र भ्रान्त

बुद्धिविषयतया शुक्तिरजतादेस्सर्वज्ञेश्वरबुद्धौ भानावश्यंभावादीश्वरापेक्षया नित्यं प्रकाशमानत्वमेवोच्यते, न त्वस्मदाद्यपेक्षया। तेनास्मदादोनामन्तःकरणवृत्तिं विना आवरणाभिभवाभावेपि शुक्तिज्ञानेन बाधेऽपि च निरावरणनित्येश्वरबुद्ध्या शुक्तिरजतादेः भ्रान्तबुद्धिविषयत्वेन विषयीकरणादीश्वरापेक्षया नित्यं प्रकाशमानत्वे न कश्चिद्विरोधः। अतः अन्तःकरणवृत्त्यभावादिनाऽस्माकं नित्यप्रकाशवारणप्रयासो विफल एव। ईश्वरबुद्धिविषयाणां च सर्वेषां जीवापेक्षया प्रकाशमानत्वापत्तेर्जीवेश्वरभेदवादे न कथञ्चित्प्रसक्तिरस्ति। ब्रह्मणो हेयप्रत्यनीकत्वेन नित्यं स्वयंप्रकाशमानत्वेन नित्यासङ्कुचितधर्मभूतज्ञानवत्वेन च अविद्यादिदोषसंसर्गस्य तदधीनतिरोधानस्य चानुपपन्नत्वेऽपि जीवानां हेयसम्बान्धार्हत्वेन चिद्रूपत्वेपि सविशेषत्वेन च कर्मादिहेयसम्बन्धः। तदधीनं तिरोधानं। स्वधर्मभूतज्ञानस्य सङ्कोचः ब्रह्मतद्गुणविभूतिविषयीकरणाभावः। अत एव कर्मणा ब्रह्मावरणमिति व्यपदेशः। सर्वमिदमस्मन्मते सम्यगुपपद्यते। अद्वैतमत एव जोवेश्वरादिभेदाभावेन उक्तविषये नित्यप्रकाशकादाचित्कप्रकाशौ, नित्यनिर्दोषस्य चिन्मात्रस्याविद्याद्यवद्यसम्बन्धः, प्रकाशैकरसस्य ब्रह्मणस्स्वयं नित्यं प्रकाशमानस्यैवाविद्यया तिरोधनमित्यादयो दुर्घटा इति स्फुटमाकरे। जीवभावहेतुभूताया अविद्याया जीवाश्रितत्वमते यथा चान्योन्याश्रयादिरवर्जनीयः न तथा कर्मणां स्वतस्सिद्धजीवाश्रितत्वोपगमे कश्चन दोष इति वैषम्यस्य स्फुटत्वात्। कर्मरूपाविद्याया जीवाश्रितत्वेऽपि कथं नान्योन्याश्रय इति प्रतिबन्द्यनुवचनं च स्वमते उक्तदोषस्य न कथञ्चन समाधानम्। एवं कदाचित् क्वचिदेव प्रकाशमानत्वमित्यत्रावधारणार्थस्यैव विवक्षितत्वोपगमेऽपि तस्य सत्यत्वप्रयोजकाभावरूपतयैव मिथ्यात्वं प्रति प्रयोजकताया वक्तव्यतया तत्प्रतियोगिप्रकाशस्य सत्यत्वप्रयोजकतायामबाधितत्वमेव तन्त्रमिति निरूपणेन घटादावपि तदबाधात् न मिथ्यात्वमित्युपपादयितुं प्रवृत्तत्वादुक्तव्यावर्तमानत्वघटकप्रकाशनित्यत्वाबाधितत्वादिविकल्पतदनुबन्धिदूषणानां निरालम्बनत्ववचनमनवबोधनिबन्धनम्।

## षष्ठकल्पदूषणसमर्थनम्

बाधतुल्यस्य बाधफलस्य वा षष्ठकल्पविवक्षितत्वे घटादावनुलब्ध्या स्वरूपासिद्धिवचनं बाधितत्वस्यापि तुल्यम्। बाधितानुवृत्तिकुसृष्टेनिराकृत-

त्वेन जीवन्मुक्तिकुयुक्तेश्च निरसिष्यमाणतया तद्दशायां बाधोपलब्धिरस्तीति वचनं बन्ध्यासुतस्य बाधोपलब्धिरिति वचनेन तुल्ययोगक्षेमम्। घटादीनां व्यवहारदशायामेव बाधोपगमे व्यावहारिकसत्यत्वमपि हीयेतेत्यपसिद्धान्तश्च-स्यात्। पूर्वोक्तकल्पेषु घटादौ सम्भावितानां व्यावर्तमानत्वविशेषाणां ब्रह्मसाधारण्यस्य दर्शितत्वात्, व्यतिरेकासिद्धिश्च दुरुद्धरा। अनुवृत्त्यनु-मानेऽपि व्यतिरेकासिद्धिरुक्ता। सा च सुश्लिष्टबहुतन्तुष्वारोपितायामेकस्यां रज्जौ व्यभिचारादित्युक्तं चण्डमारुते। उक्तव्यावर्तमानत्वानुमाननिरसनन्याय एव भिन्नत्वादिमिथ्यात्वहेतुजालेऽप्यतिदिष्टः। तत्सिद्धं मिथ्यात्वानुमानं सर्वमनैकान्तिकमप्रयोजकं चेति।

---

## दृग्दृश्यसम्बन्धानुपपत्तिपरिहारवादः

एवं दृग्दृश्यसम्बन्धानुपपत्त्या दृश्यमिथ्यात्वमिति मृषावादिनां दुष्कल्पनाऽपि शतदूषण्यादौ समूलमुन्मूलिता ।

### दृश्यत्वे परोक्तगौणमुख्यभावनिरासः

यदुक्तं—ईश्वरसृष्टं जीवसृष्टं चेति द्विविधं जगत् । स्वरूपतो विद्यमानमज्ञातं जगदीश्वरसृष्टम् । तदेव ज्ञातताभोग्यत्वादिविशेषेण जीवसृष्टं । तत्रेश्वरसृष्टत्वं मायोपहितचैतन्यांशमात्रे जगतोऽध्यासमात्रेण । जीवसृष्टत्वं तु तत्तदाकारवृत्त्युपहिततत्तदवच्छिन्नचैतन्यतादात्म्येन । यदत्र शुद्धाज्ञान-चिन्मात्रसंबन्धादेकं दृश्यत्वं तत्केवलदृक्संबन्धेन मुख्यम् । यच्चापरं तत्तदा-कारवृत्त्युपहित चैतन्यसंबन्धाद्दृश्यत्वं तद् वृत्त्यात्मक ज्ञानाकारत्वात् गौणम्-दृश्यस्य व्यावहारिकसत्यत्वेऽप्युपपद्यते । तत्र मुख्यं दृश्यत्वं दृश्यस्य सत्यत्वे-प्युपपद्यते न वेत्यालोचनीयमिति । तदयुक्तं । निर्दोषत्वेन सर्वज्ञत्वेन च श्रुत्यादिप्रमाणप्रसिद्धस्येश्वरस्याध्यासायोगात्, अध्यासनिबन्धनत्वे च ईश्वरसृ-ष्टस्य रज्जुसर्पादेरिव सृष्टत्वव्यपदेशानुपपत्तेः; अज्ञातस्य सतः स्वरूपतो विद्य-मानत्वरूपस्वकीयतल्लक्षणोक्तेरप्ययुक्तेः; तस्यैव ज्ञातत्वभोग्यत्वादिमात्रेण जीवसृष्टत्ववचनस्य तदज्ञातत्वोक्त्या व्याहतत्वात्, भिक्षोपलब्धभक्ष्यवर्गे भिक्षुसृष्टत्ववचनस्येवोपहास्यत्वात् । जगतोऽध्यासनिबन्धनत्वे प्रमाणगन्धा-भावात्, "यतो वा इमानि भूतानि जायन्ते" विष्णोस्सकाशादुद्भूतमित्या-दिश्रुतिस्मृत्याद्यक्षरस्वारस्यविरोधात्, दृश्यत्वस्य ज्ञानविषयत्वरूपस्य जीव-सृष्टे चेश्वरसृष्टे चैकरूपत्वेन गौणमुख्यविभागायोग्यत्वात्, सर्वज्ञेश्वरशुद्धदृक्सं-बन्धस्य सर्वान्तर्गतब्रह्मस्वरूप इव तदितरदृश्यवर्गेऽपि सत्यत्वे सत्यप्युप-पाद्यमानत्वाच्च । न च दृग्रूपब्रह्मसंबन्धः कार्यकारणभाव एक एवेति निर्बन्धे किंचित्प्रमाणमस्ति । शरीरशरीरिभावादीनामन्येषामपि संबन्धानां बहूनामनेकप्रमाणसिद्धत्वात् । कार्यकारणभावोऽपि न विवर्तवादानुरोधेन प्रमाणे क्वचिदधिगम्यते । परिणामवादेनैव श्रुतिस्मृतिसूत्रेषु कारणत्व-प्रतिपादनात् ।

## परिणामवाद एव श्रुतिस्मृतिसंमतः प्रामाणिकः, तत्रैव ब्रह्मणा प्रपञ्चस्य पारमार्थिकः सम्बन्ध इति निरूपणम्

एतेन च प्रपंचस्य ब्रह्मणा साक्षात्संबन्धः विवर्तवाद एव, न तु मायाशरीरकगौणब्रह्मपरिणामवादे । गौणमुख्ययोश्च मुख्ये कार्यसंप्रत्यय इति हि न्यायविद इत्युक्तं प्रत्युक्तम् । विवर्तवाद एव संबन्धासंभवात् । न हि मिथ्यात्वाभिमतस्य सत्येन सह वस्तुतः साक्षात्संबन्धस्संभवदुक्तिकः । कल्पितस्तु सर्वत्र वक्तुं शक्य इति कस्तेन विशेषस्स्यात् ? विवर्तोपादानस्य मुख्यत्वं च क्व संप्रतिपन्नम् ? न हि शुक्तिरजतादिभ्रमस्थले अनिर्वचनीय-रजतादिजननमभ्युपेमः, येन तदुपादानमभ्युपगन्तव्यम् । सत्यरजतादेरेव हि तत्रापि भानमुपेयते । अन्यथाख्यात्यख्यातियथार्थख्यातिवादेष्वन्यतमावलंबनेन च तदुपपाद्यते । अतो विवर्तोपादानस्यैवासिद्धौ क्व तन्मुख्यत्वसिद्धिः ? कथं वा तत्र कार्यसंप्रत्ययः; श्रुत्यादिप्रमाणेषु च न विवर्तगन्धः । परिणामि-मृत्पिण्डादिकं हि तत्र निदर्शनतया प्रदर्श्यते, न तु शुक्तिरजतरज्जुसर्पाद्यु-पादानम् । अतः परिणामवाद एव श्रुतिसम्मतः । तत्रापि न साक्षात्परिणाम-वादः । अनुप्रवेशपूर्वकनामरूपव्याकरणवचनेन शरीरद्वारा परिणामस्यैव विवक्षितत्वावगमात् । न च साक्षात्परिणममानस्य तद्भावे तदनुप्रवेशेन भाव्यम् । न हि मृत्पिण्डादिकं घटादिरूपेण जायमानं घटादावनुप्रविशति । "तदनु प्रविश्य" "सच्च त्यच्चाभवदि" त्येवं ह्यन्यत्रापि श्रूयते । ऊर्णनाभि-तन्तुसृष्टिदृष्टान्तप्रदर्शनेनापि शरीरद्वारकपरिणाम एव श्रुतितात्पर्यमव-धार्यत इत्युक्तम् । अत एव मृत्पिण्डादिदृष्टान्तेषु विवर्तवादान्धगर्तनिपतन-व्यावर्तनाय परिणामित्वमात्रेण साधर्म्यं विवक्षितम् । न तु तत्साक्षात्त्वेनापि । कथमेवं निश्चयः ? उक्तोभयदृष्टान्तसामञ्जस्यादेव । सर्वात्मना साधर्म्या-भावेऽपि हि अग्निरिव माणवक इति दृष्टान्तोपादानं परिदृश्यते । विवक्षितांशं मुक्त्वा सर्वसारूप्ये दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यादिति ह्याहुः । अत्र "अस्मान्मायी सृजते, सोभिध्याय शरीरात्स्वात्सिसृक्षुरित्यादि-कमप्यनुसन्धेयम् । अतः शरीरद्वारा परिणामवाद एव श्रुतिस्मृतिसम्मतः । तत्रैव च प्रपञ्चस्य ब्रह्मणा पारमार्थिकः सम्बन्धः । स च सम्बन्धिनोरु-भयोरपि सत्यत्वं विना नोपपद्यते । स च शास्त्रेणैवावसेयः, न तु पामर-

साधारणघटपटादिप्रत्यक्षेण । तथासति शास्त्रवैयर्थ्यापत्तिः । शास्त्रयोनित्वाधिकरणविरोधश्च स्यात् । न च निर्विशेषवादे सद्रूपेण ज्ञानमानन्दरूपेणाज्ञानं चेति ब्रह्मण एव युगपत् रूपविशेषेण ज्ञानाज्ञानवर्णनं स्वरसतस्सुघटम् ।

## सन् घट इत्यत्र ब्रह्मभानव्युदसनेन प्रामाण्यसाधनम्

न च घटादिधर्मभूतसत्तावगाहितया सन् घट इत्यादिप्रत्ययानां प्रमात्वे संभवति तत्र सन्निति नास्तिकानामपि ब्रह्मैव सद्रूपेण भासते, तेन तद्भिन्नानां घटादीनां प्रतीयमानस्संबन्धः काल्पनिक एव, न वस्तुसन् । स च सम्बन्धः एकस्य मिथ्यात्वं विना नोपपद्यत इत्यादिना विश्वमिथ्यात्वोपपादने किञ्चिन्निबन्धनमस्ति । कारणदोषादिना विनापि प्रत्ययानां भ्रमत्वे ब्रह्मप्रत्ययसामान्यस्यापि भ्रमत्वापत्त्या शून्यवाद एव परिशिष्येत । "नास्ति ब्रह्मेतिवादिनामपि जायमाने सन् घट इति प्रत्यये ब्रह्मण एव सद्रूपेण भानमित्यपि दुर्घटमेव । परकीयस्वकीयत्वभ्रमादावनारोपितयोरेव आरोपितसम्बन्धस्य दृष्टत्वा"दिति शतदूषण्यामेव दर्शितत्वाद्व्यभिचरितेन काल्पनिकसंबन्धेन अन्यतरमिथ्यात्वमपि न कल्पयितु शक्यम् । अन्यथा उभयमिथ्यात्वकल्पनाया अपि दुर्वारत्वात्, प्रतियोगित्वानुयोगित्वादिभेदस्याकिंचित्करत्वात् । न च शुक्तिरूप्यादिमिथ्यात्वं काल्पनिकसंबन्धप्रतियोगित्वप्रयुक्तम् । अपि तु बाधितत्वप्रयुक्तमेव । अन्यथा घटादिनिष्ठदृग्विषयत्वे काल्पनिकतयाऽभ्युपगते प्रतियोगितया दृशोऽपि मिथ्यात्वापत्तेः । शुक्तिरूप्यादीनामिव घटादीनां प्रतिपन्नोपाधौ बाधितत्वं नास्त्येवेति वैषम्यं च प्रागेव दर्शितम् । अतो नैवात्र शुक्तिरूप्यन्यायः । न वा अध्यासनिबन्धनः भासमानस्संबन्धः । नापि सद्रूपब्रह्मणः सन् घट इत्यत्र भानमिति कथमनेन विश्वमिथ्यात्वमुन्नीतं स्यात् । एतदुक्तं भवति-प्रपंचस्य ब्रह्मविवर्ततायां मानाभावात् तदपृथक्सिद्ध विशेषणपरमार्थपरिणामरूपतायामेव श्रुत्यादिप्रमाणप्रदर्शनात् सन् घट इत्यादिप्रत्ययानां च पारमार्थिकघटादितत्सत्तातद्वैशिष्ट्यमात्रगोचरत्वेन संबन्धिनोस्संबन्धिनः संबन्धस्य वा अनुपपन्नत्वकाल्पनिकत्वादिकथाया एव अनवकाशाच्च न विश्वस्य मिथ्यात्वविवर्तत्वकल्पितत्वकल्पितसँबन्धिप्रतियोगित्वाध्यस्तत्वाधिष्ठानसाक्षात्कारनिवर्त्यत्वादिना शुक्तिरूप्यसाम्यं ब्रह्मवैषम्यं वेति । अतः प्रपंचस्य ब्रह्मणा सह कार्यकारणभावादिरपि संबन्धः पारमा-

र्थिक एव । अत एव स न संबन्धिनोरन्यतरस्य मिथ्यात्वकल्पनायावकल्पते ।

## दृग्दृश्यसम्बन्धस्य दुरपह्नवता, काल्पनिकसंबन्धप्रतियोगिनः काल्पनिकत्वानियमश्च

वस्तुतस्तु दृग्दृश्यसंबन्ध इत्यत्र न कार्यकारणभाव एव सम्बन्धः, अपि तु संयोगसंयुक्तसमवायादिरित्युक्तम् । स च दर्शनबलादतीतानागतसाधारणः पारमार्थिक एव सिद्ध्यन् सम्बन्धिनोरुभयोरपि सत्यत्व एव घटमानः स्वविरोधिभूतं सम्बन्धिमिथ्यात्वं दूरत एव प्रतिक्षिपति, न तु स्वोपपादकतया तदाक्षिपति । यथोक्तं शतदूषण्यां—न च दृग्दृश्यसंबन्धस्योपपादकं दृश्यमिथ्यात्वं अपि तु तत्प्रतिक्षेपकमेव । अत उपपादककल्पनापदेशेनानुपपत्तिकल्पनमेवेत्यायातम् । मिथ्याभूतसम्बन्धस्योपपादकमेवेति चेन्न । तथाविधस्य तस्यादर्शनेन तदुपपादकान्वेषणायोगादिति ।

एतेन शुक्तिरजतसम्बन्धकाल्पनिकत्वदर्शनानुरोधेन सन् घट इत्यादावपि काल्पनिकसम्बन्धस्वीकारनिर्बन्धोऽपि निरस्तः । इदं रजतमित्यादावध्यस्ताधिष्ठानयोः पारमार्थिकसम्बन्धानुपपत्त्या काल्पनिकसंबन्धभानोपगमेऽपि सन् घट इत्यादावारोपिताधिष्ठानभानानभ्युपगमेन भासमानसम्बन्धस्य पारमार्थिकत्वे बाधकाभावेन काल्पनिकत्वानुपपत्तेः । अतः कल्पकस्यादृष्टत्वात् कथमिह मिथ्यात्वकल्पनम् । अन्यथा ब्रह्मण्यपि तत्कल्पनापत्तेः । व्यापिन्या नित्यदृशः कथं वा व्यवहारदशायामबाधितत्वेनानुमतेन दृश्यप्रपंचेन वस्तुतस्संयोगादिरपि न संपत्स्यत इति वक्तुं शक्यम् । अबाधितः प्रतीयमानश्च संसर्गः पारमार्थिक इत्येव सिद्ध्येत् । दृश्यमिथ्यात्वेन तत्सम्बन्धमिथ्यात्वकल्पनं तु अन्योन्याश्रयपराहतम् । सम्बन्धानुपपत्त्या तदुपपादनार्थं दृश्यमिथ्यात्वकल्पनमिति ह्याद्यः कल्पः, स एव चेह प्रकृतः, तत्रोपपादकतया कल्प्यं दृश्यमिथ्यात्वम् । तदेव च कथं स्वकल्पकसम्बन्धमिथ्यात्वकल्पकमिति वक्तुं शक्येत । अतः परिदृश्यमानः परमार्थ एव सन् दृग्दृश्यसम्बन्धः स्वोपपादकतया दृश्यसत्यत्वस्यैवाक्षेपकस्स्यात्, न तु स्वप्रत्यनीकस्य दृश्यमिथ्यात्वस्य । संबन्धिनो मिथ्यात्वे सम्बन्धस्य सत्यत्वायोगात् । अत एव न दृग्दृश्यसम्बन्धस्योपपादकं दृश्यमिथ्यात्वम्, अपि तु तत्प्रतिक्षेपकमेवेत्यादि सुष्ठूक्तम् ।

एतेन सन् घट इत्यादौ प्रतीयमानो घटादिसम्बन्धः न मिथ्यात्वस्य प्रतिक्षेपकः। मिथ्याभूतसम्बन्धः प्रतियोगिनो मिथ्यात्वमुपपादयतीति शुक्तिरूप्यादौ दृष्टचरमित्युक्तमिहासम्बद्धमित्यावेदितम्। शुक्तिरूप्यादेस्सम्बन्धस्येव घटादेरपि सम्वन्धस्य मिथ्यात्वासिद्धेः। सम्बन्धमिथ्यात्वोपपादकतया प्रतियोगिमिथ्यात्वस्य कल्पनावसरे प्रतियोगिनो मिथ्यात्वमुपपादयतीत्युपपाद्यत्वोक्त्यसंगतेश्च। तत्सिद्धमुक्तप्रथमकल्पदूषणस्य न कथंचिदप्युद्धारः कर्तुं शक्य इति।

अथ सम्बन्धाभावसिद्धवत्कारेण सम्बन्धिनोऽप्यभावसाधनमिति द्वितीयः कल्पः शतदूषण्यां निरस्यते-नापि द्वितीय इति। अत्र च सम्बन्धाभावस्य सिद्धवत्करणं तु समवायादिसम्वन्धाभावमभिप्रेत्य, न त्वनिर्वचनीयसम्बन्धाभावमपि। तथा चानिर्वचनीयसम्बन्धः प्रतियोगिनोऽसत्यत्वं गमयतीत्येव द्वितीयकल्पाशय इति यदुक्तं, तदयुक्तमेव। प्रथमकल्पाविशेषात्। सम्बन्धाभावं सिद्धं कृत्वा तेनैव सम्बन्धिनोऽप्यभावसाधनमिति द्वितीयकल्पाभिलापकवाक्ये तेनैवेति पूर्वोक्तसम्बन्धाभावस्य तत्सिद्धवत्कारस्यैव वा परामर्शेन तस्यैव सम्बन्ध्यभावसाधकत्वेन विवक्षायास्स्फुटतया तदपह्नवायोगात्। विकल्पितकल्पविवक्षितार्थं परित्यजतस्तत्कल्पपरित्यागस्यैव फलितत्वेन तद्दूषणपरिहारप्रयासवैफल्यात्। वादिविकल्पितकल्पस्यार्थान्तरे तात्पर्यकल्पनया तदुक्तदूषणवारणस्य छलत्वेन हेयत्वाच्च। अत एव निर्वचनीयसम्बन्धाभावसहकृतानिर्वचनीयसम्बन्धस्यैव सम्बन्ध्यभावप्रयोजकत्वमित्युक्तमप्यनुपादेयमेव। सन् घट इत्यादावुक्तप्रयोजकासिद्धेरुक्तप्रायत्वात्। निर्वचनीयसम्बन्धसत्वेऽनिर्वचनीयसम्बन्धभानाप्रसक्तेरुक्तप्रयोजकविशेषणवैयर्थ्यात्। दूरस्थवनस्पत्योस्संसृष्टत्वभ्रमस्थले प्रयोजकतयाऽभिमतस्य उक्तविशिष्टसम्बन्धस्य सत्वेऽपि सम्बन्ध्यभावानभ्युपगमेन व्यभिचरितत्वाच्च। अतस्सम्बन्धस्यानिर्वचनीयत्वे तस्यैव मिथ्यात्वं स्यात्, न तु तत्प्रतियोगिनोऽपि असति बाधे।

**सम्बन्धमिथ्यात्वेन सम्बन्धिनोऽपि मिथ्यात्वे ब्रह्मणोऽपि मिथ्यात्वापत्तिः**

शुक्तिरजतस्य मिथ्यात्वं बाधितत्वप्रयुक्तं, न त्वनिर्वचनीयसम्बन्धप्रतियोगित्वप्रयुक्तमिति प्रागेवोक्तम्। अबाधितत्वादेव च शुक्तेर्न मिथ्यात्वम्।

न तु मिथ्याभूतसम्बन्धप्रतियोगित्वाभावात्तदनुयोगित्वाद्वा । अतः प्रतियोग्यनुयोगिभावविशेषस्यात्राकिंचित्करत्वादनिर्वचनीयसम्बन्धेन निर्वचनीयसम्बन्धाभावेन वा सम्बन्ध्यसत्त्वापादने विशेषाभावात् । दृश्यस्येव दृशोऽपि कल्पितत्वापत्तिरनिवार्यैव स्यात् । न च दृशेरधिष्ठानत्वान्न मिथ्यात्वमिति वाच्यम् । भ्रमहेतुदोषादिमिथ्यात्ववादिनामधिष्ठानमिथ्यात्वोपगमेऽपि विरोधाभावात् । विश्वसत्यत्ववादिभिर्दृशेरधिष्ठानत्वानभ्युपगमात्, विश्वमिथ्यात्वसिद्धेः पूर्वं दृगधिष्ठानत्वासिद्धेश्च । न च दृशः स्वयं प्रकाशतया नित्यसिद्धत्वान्न मिथ्यात्वमिति वाच्यम् । दृगन्तरविषयत्वानभ्युपगमे दृशः स्वयंप्रकाशतायां प्रमाणस्यैव वक्तुमशक्यत्वात् । प्रमाणाभावेऽपि दृशः स्वयंप्रकाशत्वोपगमे दृश्यस्यापि तथात्वाभ्युपगमापत्तेरनिवार्यत्वात् । तथात्वोपगमेऽपि दृश इव दृश्यस्याप्यज्ञानतिरोधानोपगमेन सर्वदा प्रकाशापत्तिश्च न कर्तुं शक्यते । न चाज्ञानकार्यस्य जडस्याज्ञानेनावरणं न सम्भवति । आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवलापूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति, नापि गोचर इति संक्षेपशारीरकोक्तेरिति वाच्यम् । उक्तनियमस्य जीवाज्ञानवादिभिरेवानभ्युपगमात् । ब्रह्मकार्यस्य दृश्यजातस्याज्ञानकार्यत्वाभावात् । मूलाज्ञानकार्यत्वोपगमेऽपि तूलाज्ञानेनावरणोपगमे विरोधाभावात् । निर्विशेषचिति मात्रस्यैवाज्ञानेनावरणोपगमे तदविषयकप्रमाणज्ञानस्य भावरूपाज्ञानसाधनानुमानेन स्वविषयावरणपूर्वकत्वसाधनानुपपत्तेः । स्वयंप्रकाशस्यापि जीवात्मस्वरूपस्येव तद्धर्मभूतज्ञानस्येव च परं प्रति सर्वदा प्रकाशमानत्वाभावेऽपि क्षतिविरहाच्च । अत एव दृशस्स्वप्रकाशत्वं स्वतश्चिद्रूपत्वेन प्रदीपस्येव युक्तम् । दृश्यस्यापि प्रकाशात्मकत्वे स्वीक्रियमाणे तस्यानावृतस्योक्तरीत्या सर्वदा भानापत्तिरित्यादिकमपि दत्तोत्तरम् । स्वप्रकाशत्वस्य चिद्रूपत्वप्रयुक्तत्वे प्रदीपस्येवेति प्रदर्शितदृष्टान्तस्य प्रयोजकवैकल्यमनिवार्यम् । न हि प्रदीपश्चिद्रूपः । प्रदीपादावेव स्वप्रकाशत्वस्य सर्वदा भानव्यभिचारेण च व्याप्तिविकलस्सदाभानप्रसङ्गः । न च दृश्यस्यापि स्वयं प्रकाशत्वे ज्ञानव्यतिरेकेण विषयाभावात् योगाचारमतप्रवेशापत्तिरिति वाच्यम् । दृश्यतिरिक्तकृत्स्नमिथ्यात्ववादिनां योगाचारमतप्रवेशेनानिष्टाभावात् ।

## उपलब्ध्यधिकरणविरोधाविरोधचिन्ता

अत एवोपलब्ध्यधिकरणं योगाचारमतस्येवाद्वैतमतस्यापि निरासकमेवेत्युक्तम्। वैधर्म्याच्च न स्वप्नादिवदिति स्वाप्न जागरयोः वैधर्म्यसिद्धवत्कारेण जाग्रत्प्रत्यये स्वप्नदृष्टान्तेन निरालम्बनत्वानुमानस्येवा द्वैत्यभिमतमिथ्यावगाहित्वानुमानस्यापि निरस्तप्रायत्वात्। न चाद्वैतमतेऽपि स्वाप्नजागरिकयोः प्रातिभासिकत्वव्यावहारिकत्वलक्षणवैधर्म्यस्वीकारात् न तन्निरासस्यापि सिद्धिस्स्यादिति वाच्यम्। विषयमिथ्यात्वाविशेषे तदवान्तरभेदस्वीकारेऽपि सदालम्बनत्वौपयिकवैलक्षण्यानभ्युपगमात्। उक्तवैधर्म्यस्य अद्वैतभाष्येऽप्यप्रदर्शनाच्च। बाधाबाधाभ्यामेव हि तत्र वैधर्म्यं भाषितम्। बाध्यते हि स्वप्नोपलब्धं वस्तु प्रतिबुद्धस्य। नैव जागरितोपलब्धं वस्तु स्तम्भादिकं कस्याञ्चिदप्यवस्थायां बाध्यत इति। टीकायामपि बाधाबाधौ वैधर्म्यं, स्वप्नप्रत्ययो बाधितः जाग्रत्प्रत्ययश्चाबाधितः। अपि च स्वतः प्रामाण्ये सिद्धे जाग्रत्प्रत्ययानां यथार्थत्वमनुभवसिद्धम्, नानुमानेनान्यथयितुं शक्यमित्यादि सर्वमिदं जाग्रत्प्रत्ययमिथ्यात्ववादविरुद्धं कथं तन्मतं नोपरुन्ध्यात्। न च स्वाप्नवैधर्म्यस्य जागरिके श्रीभाष्यानुयायिभिरनङ्गीकारात्तन्मते सूत्रमिदमस्वरसमित्युक्तं युक्तम्। बाध्याबाध्यव्यवहारहेतुतानिबन्धनवैधर्म्यस्य श्रीभाष्यानुयायिभिरपि स्वाप्नजागरिकयोरङ्गीकृतत्वात्। स्वाप्नयाथार्थ्येऽपि तस्य जागरदृष्टसारूप्येण तद्भेदाग्रहात् कालान्तरे तत्प्रवृत्तिबाधः। नापि कृत्वाचिन्तयेदं सूत्रमिति श्रुतप्रकाशिकायां हृदयेनाद्वैतमताभ्यनुज्ञानाच्चाद्वैतमत एव स्वारस्यमित्युक्तं साम्प्रतम्। सोपाधिकत्वं स्वप्नादेर्मिथ्यात्वाभ्युपगमेनोक्तं सूत्रकारैः, तदेव नास्तीति वक्ष्यते इत्येव ह्यत्र श्रुतप्रकाशिका। वस्तुतस्स्वप्नादेरपि मिथ्यात्वं नास्तीति हृदयमुद्घाटयन्तीयं श्रुतप्रकाशिका कथं जागरितस्यापि मिथ्यात्वोपगमेनैव लब्धजीवितमद्वैतमतमभ्यनुजानातीति पण्डितेन प्रत्येतुं शक्यम्। स्वप्नादेः पराभिमतं मिथ्यात्वमभ्युपगम्य परोक्तानुमानस्य बाधितत्वादिना वैधर्म्येण सोपाधिकत्वमस्मिन् सूत्रे दर्शितम्। मिथ्यात्वमेव नास्ति स्वप्नादेरपीत्यनन्तरसूत्रे साध्यवैकल्यादिकं वक्ष्यत इति ह्युक्तश्रुतप्रकाशिकावाक्याशयः। प्रपञ्चितश्चायमर्थः प्रागेव सूत्रस्वारस्यप्रदर्शनावसरे।

**प्रमाणमन्तरा दृशस्स्वप्रकाशत्वे दृश्यस्यापि तत्प्रसङ्गः**

यत्तु श्रीभाष्यमतेऽपि आत्मतद्धर्मयोरिव दृश्यानामपि स्वयंप्रकाशत्वं कुतो नाङ्गीक्रियत इत्याक्षेपस्य तत्परिहारस्य चाद्वैतमतेऽपि समत्वात् कृतमनेन स्वमतविघातकेन परमतनिराकरणयत्नेनेत्युक्तं, तदविवेकविलसितम् । अस्माभिस्संवित्स्वयंप्रकाशत्वस्य संविदन्तरवेद्यत्वाभ्युपगमादिति शतदूषण्येव वैषम्यस्य दर्शितत्वात् । प्रमाणमन्तरेण स्वयंप्रकाशत्ववाद एवेयमापत्तिरापतति, न तु प्रमाणानुरोधेन तद्वादे । घटादीनां स्वप्रकाशत्वे मानाभावात् । दृग्दृश्यसंबन्धमपह्नुवानेन तु दृशस्स्वप्रकाशत्वे प्रमाणविषयत्वं न वक्तुं शक्यमिति भावः ।

एतेन दृश्यस्य संविद्वेद्यत्वं, न तु दृशेरिति वैषम्यात्, न दृक्साम्येन दृश्यस्य स्वप्रकाशत्वमित्यप्यपास्तम् । केनचिदाकारेण वैषम्येऽपि आकारान्तरेण साम्याविरोधात् । संविद्वेद्यतायास्स्वयंप्रकाशत्वाविरोधित्वात् । दृग्रूपस्य ब्रह्मणश्शास्त्रयोनित्वादिति शास्त्रैकवेद्यतायाः समर्थितत्वाच्च ।

वस्तुतस्तु वेदनविषयत्वमेव वेद्यत्वं, तच्च स्वयंप्रकाशस्य वेदनान्तरविषयत्वानुपगमेऽपि स्वात्मकवेदनविषयत्वादप्यक्षतमेव । न च स्वस्य स्वविषयत्वानुपपत्तिः, बुद्धिलक्षणबुद्धेः लक्ष्यभूतकृत्स्नबुद्ध्यभिव्याप्तासाधारणधर्मविषयायाः तद्योगेन स्वात्मनोऽपि विषयीकरणस्याभ्युपेयत्वात् । अत एव स्वसंवेद्यमात्मसंवेद्यमित्यादिव्यपदेशोऽपि संगच्छते ।

**फलव्याप्यत्व-वृत्तिव्याप्यत्वभेदव्युदासः**

एतेन वेद्यत्वमिह फलव्याप्यत्वमेव । यद् दृशः प्रतिषिध्यते वृत्तिव्याप्यत्वरूपं तु तद् दृशोऽप्यनुमन्यते । "येनाक्षरं पुरुषं वेद सत्यं" "यया तदक्षरमधिगम्यते" "शास्त्रयोनित्वादित्यादौ वृत्तिव्याप्यताया एवावगमान्न विरोध इति प्रतारणमपि परास्तम् । चक्षुरादिबाह्यकरणवृत्तीनामिव अन्तःकरणवृत्तेरपि ज्ञानशब्दतत्पर्यायवाच्यत्वे दृश्याकारपरिणामे तत्र दृक्प्रतिफलने च मानाभावात् । प्रत्युत तदभ्युपगमे तदतिरिक्तचैतन्याभ्युपगमवैयर्थ्यापातात् । दृश्यतिरिक्तानुपलब्धदृश्याकारपरिणामकल्पनस्यान्याय्यत्वाच्च । तदुक्तं सर्वार्थसिद्धौ—बाह्यकरणव्यापाराणामिवान्तःकरणव्यापारस्यापि ज्ञानशब्दवाच्यत्वाभावात् । भावे वा तदतिरिक्तचैतन्यस्वीकारायोगात् ।

एतेन वृत्त्यवच्छिन्नचैतन्यं मिथो वेद्यं, न तु शुद्धमित्यादिकमपि दुराशामात्रमिति । अतो दृश्यस्य संविद्वेद्यत्वं तु दृश्याकारपरिणतान्तःकरण-वृत्तिप्रतिफलितदृक्तादात्म्येन, न तु दृक्संबन्धमात्रेण इत्यादिकल्पनायां न किञ्चिदपि प्रमाणं वक्तुं शक्यम् । अत एवाभेदाभिव्यक्त्यर्था वृत्तिः चिदुपरागार्था वृत्तिरित्येवं वृत्तिवैविध्यकल्पनमपि निर्मूलम् ।

## दृश्यत्वस्य स्वप्रकाशत्वाविरोधित्वम्

कालभेदेन पुरुषभेदेन स्वयंप्रकाशस्य स्वेतरप्रमाणविषयत्वोपगमात् दृश्यस्य स्वप्रकाशत्वेऽपि न प्रमाणप्रवृत्त्यनुपपत्तिप्रसक्तिः । अन्यथा दृश्यपि तदापत्तेर्दुर्वारत्वात् । न च तस्याः चक्षुराद्यविषयत्वेन तदप्रवृत्तेरिष्टत्वमित्य-द्वैतिना वक्तुं युक्तम् । प्रत्यक्षस्य क्षणिकत्वेन सन्मात्रग्राहित्वमिति स्वसिद्धान्त-विरोधात् । दृशस्स्वप्रकाशत्वस्यानुमानेन साधनानुपपत्तेः । महावाक्याल्ल-क्षणया पदार्थयोश्चित्त्वेनैक्यबोध इति स्वीयसिद्धान्तेन व्याघाताच्च । अतो दृश्यत्वादेः स्वप्रकाशत्वाविरोधेन जडत्वेनेव दृश्यत्वघटत्वादिनापि स्वप्रकाश-त्वसाधनापत्तेः मम माता वन्ध्येतिवचनतुल्यतापादनमापातत एव । अनुभूति-स्वप्रकाशत्वानुमानस्यानुभूतिविषयकत्व एव विप्रतिपद्यमाने श्रुत्युपष्टम्भादिना तस्य किं संपत्स्यते, येन दृश्यस्वप्रकाशत्वानुमानाद्बलीयो भविष्यति । दृश्या न स्वप्रकाशा इति श्रुतेः क्वचिदप्यनुपलम्भात् । श्रुतिविरोधस्तु दुर्वच एव । अतस्स्वयंप्रकाशत्वगमक प्रमाणविषयतयैव दृशस्स्वयंप्रकाशत्वं सिद्ध्यतीति यावन्नाभ्युपेयते तावद् दृश एव स्वयंप्रकाशत्वं, न दृश्यसामान्य-स्येति न नियन्तुं शक्येत ।

एतेन अनुमानादिविषयत्वमपि चितः तदावारकासत्त्वापादकाज्ञान-निवर्तकवृत्तिमात्रोपयोगितया न तु निवृत्तासत्त्वापादकाज्ञानवृत्त्युपहितचैतन्य-संबन्धेनेत्यादिकमप्यपास्तम् । समानविषयकज्ञानस्यैवाज्ञाननिवर्तकतया चितस्संविदन्तरविषयत्वानुपगमे तदज्ञाननिवृत्त्यसंभवात् । अन्तःकरणवृत्तेश्च बाह्यकरणवृत्तिवन्न ज्ञानत्वमित्युक्तम् । अतो दृशस्स्वयंप्रकाशत्वसिद्धेर्दृगन्तर-सम्बन्धाधीनतया तत्सम्बन्धस्य काल्पनिकत्वे दृशोऽपि मिथ्यात्वापत्त्या पारमार्थिकताया उपगन्तव्यतया तन्न्यायेन दृश्यतत्सम्बन्धयोरपि पारमार्थिकत्वे न कश्चिद्विरोधः । ब्रह्मणो विवर्तोपादानत्वं दृश्यतत्सम्बन्धयोरध्यासमूलकत्व-

कल्पनं च निर्मूलकं, सौगतसौहार्दमूलकमेव वा न तु सन्मूलकमित्युक्तमेव। नित्यसिद्धत्वकादाचित्कत्वयोः न सत्यत्वमिथ्यात्वप्रयोजकत्वमित्यपि प्रागेवोक्तम्। दृश्यस्य घटोदरस्वप्रकाशत्वस्य सम्मतत्वेऽपि दृशः प्रमाणमन्तरेणापि स्वप्रकाशत्ववादिने तन्मते दृश्यस्यापि प्रमाणाभावेऽपि स्वप्रकाशत्वाभ्युपगमापादनप्रतिबन्दीदानस्याप्यवसरः प्राप्त एव, न त्वप्राप्त इति मन्तव्यम्। अत एव घटादेः स्वप्रकाशत्वे तद्वत्स्वप्रकाशसंविदोऽपि जडत्वापत्तिरिति प्रतिबन्द्या नावसरः प्राप्नुयात्। स्वप्रकाशत्वापादनस्य जडत्वव्युदास एव विश्रान्तत्वेन घटादीनामेव जडत्वापगमात् तद्दृष्टान्तेन जडत्वापादनानुपपत्तेः। प्रमाणान्तरविषयतामुपगच्छतां मते अत्रायं पुरुषस्स्वयंज्योति रित्यादिप्रमाणबाधप्रदर्शनस्यैवोक्तापत्तेः प्रतीकारत्वात् कः प्रतीकार इति तत्प्रतिक्षेपो न योयुज्यते। संविदो वृत्तिव्याप्यत्वमेव, न फलव्याप्यत्वं, दृश्यस्य घटादेरेव फलव्याप्यत्वमित्येवं निर्बन्धोऽपि निर्निबन्धन इति प्रागेवोक्तम्। तथा फलव्याप्यत्वस्य संविद्रूपत्वेन विरोधश्च निरस्तः। स्वप्रकाशत्वप्रकाशकप्रमाणविषयत्वानभ्युपगमसाम्येनैव दृग्वद्दृश्यस्यापि स्वप्रकाशत्वमापादितं, न तु फलव्याप्यत्वाभावादिसाम्येनेति प्रतिवचनमिह पिष्टपेषणमेव। दृशो वृत्तिव्याप्यत्वस्वीकारेऽपि विषयविषयिभावसम्बन्धोऽपि स्वीकृत एव स्यात्। तस्य च काल्पनिकत्वे तत्प्रतियोगिदृशोऽपि मिथ्यात्वापत्त्या पारमार्थिकत्वोपगमे तुल्यन्यायेन दृश्यप्रतियोगिकसम्बन्धस्यापि पारमार्थिकत्वे बाधकाभावात् न दृश्यमिथ्यात्वकल्पनाया आवश्यकता स्यात्।

## वृत्तिव्याप्यत्वेऽपि ब्रह्मणो विषयताभ्युपगमावश्यंभावः

एतेनाद्वैतमते वृत्तिव्याप्यत्वस्वीकारेऽपि न विषयविषयिभावः, आवरणनिवृत्तिमात्रेण दग्धेन्धनाग्निवत् स्वयं निवृत्ताया वृत्तेः स्वप्रकाशया संविदा संबन्धाभावादित्युक्तमपि प्रत्युक्तम्। वृत्तिविषयत्वानुपगमे वृत्तिव्याप्यत्वोपगमस्याप्ययोगात्। तदविषयिण्यापि वृत्त्या तदावरणनिवृत्त्युपगमे घटादिवृत्त्यापि चिदावरणनिवृत्तिप्रसङ्गेनाखण्डाकारवृत्तिप्रतीक्षणानुपपत्तेः। अखण्डाकारवृत्तेः ब्रह्मविषयत्वस्याप्यनुपगमे निर्विषयत्वापत्तेः। अन्यूनानधिककालीनयोरेव संबन्ध इत्यनियमेन पूर्वं निवर्तमानेन पित्रादिना पुत्रादेरिव आवरणनिवृत्त्या दग्धेन्धनाग्निवत् स्वयं निवर्तमानयाऽपि वृत्त्या

तत्काले पश्चादनुवर्तमानाया अपि संविदस्संबन्धोपगमे बाधकाभावाच्च । उपगम्यते हि स्वज्ञाननिवर्त्येनाप्यज्ञानेन सह विषयविषयिभावश्चिन्मात्रस्य नित्यस्य । तथाचोक्तं संक्षेपशारीरके आश्रयत्वविषयत्वभागिनी निर्विशेष-चितिरेव केवलेति । मिथ्याभूताज्ञानविषयतामुपगच्छतां परमार्थज्ञानविष-यत्वोपगमे परं कः प्रद्वेषः । ज्ञानविषयत्वानुपगमे च आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादयः श्रुतयः संविदात्मनः श्रवणादिविषयत्वाभिधायिन्यो दुर्निर्वहा एव संपद्येरन् । अत एव न हि केवला दृक्, याऽधिष्ठानं सर्वस्य प्रपंचस्य सा विषयो नामेत्युक्तमप्यपास्तम् । प्रपंचपारमार्थ्यवादिभिः प्रपंचसंविदात्मनोः अध्यस्ताधिष्ठानभावानभ्युपग-माच्च । युष्मत्प्रत्ययोऽप्यस्मत्प्रत्ययवत् प्रायशश्चेतनेष्वेव वेदे लोके च दृश्यते । तत्त्वमसि त्वंवाऽहमस्मि भगवो देवते, त्वं नो राजा जनेश्वर इत्यादौ चेतन एव हि युष्मत्प्रत्ययगोचरः । पदार्थतत्त्वविदश्च युष्मत्पदं तद्घटितवाक्याधीनबोधाश्रयत्वेन वक्तुरिच्छाविषये चेतने एव शक्तमाहुः । अतो युष्मत्प्रत्ययगोचरस्य विषयत्वाभ्युपगमेऽपि संविदात्मन एव विषय-त्वमभ्युपगतं स्यात् । अचेतनस्यैव युष्मद्ग्रहणमत्यन्तभेदोपलक्षणार्थ-मित्युपगमेऽपि अस्मत्प्रत्ययगोचरस्य दृशः विषयत्वव्यवच्छेदार्थं विषयि-पदेनोपन्यास इति न वक्तुं युक्तम् । तथा सति अस्मत्प्रत्ययगोचरत्वोक्ते-र्व्याहतत्वापातात् । देहादावात्माध्यासोपगमेन संविदात्मन्यध्यासविषयताया अप्युपगमावश्यंभावात् ।

## आत्मनोऽपि देहादावध्यासः

देहादावात्माध्यासश्च तद्विपर्ययेण विषयिणस्तद्धर्माणां च विषयेऽध्यास इति शङ्काग्रन्थे अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मान् चाध्यस्य इति परिहारभाष्ये, तथा चैतन्यादीनात्मधर्मान् देहादावध्यस्तात्म भावे समारोप्येति टीकायां च प्रदर्शितः । एवमात्माध्यासे देहादेरधिष्ठान-त्वोपगमेन दृशस्सर्वाधिष्ठानत्वं निरधिष्ठानकत्वं चेति प्रपंचवैषम्यं तत्र तत्रोक्तं परास्तम् । न च चिदात्मनोऽपि विषयत्वोपगमे विषयविषयिणोरिति विषयिपदेन निर्देशो निरर्थकस्स्यादिति शङ्क्यम् । विषयत्वस्य उभयसाधा-रणत्वेऽपि विषयित्वस्य जडव्यावृत्तत्वेन तद्वैलक्षण्यगमकतयाऽप्यर्थवत्वो-पपत्तेः । अतश्चिदात्मनो विषयत्वं दुरपह्नवम् । तत्रापि वृत्तिव्याप्यत्वं

फलव्याप्यत्वमिति भेदकल्पनया संविदात्मप्रपंचवैषम्यव्यवस्थापनं तु निष्प्रमाणत्वान्निर्युक्तिकत्वाच्च न श्रद्धेयमिति प्रागेवोक्तम्। अतः संविदः प्रमाणविषयत्वानभ्युपगमे स्वप्रकाशत्वासिद्धिः। सिद्धौ वा घटादीनामपि सिद्ध्येदिति सुष्ठूक्तम्। प्रमाणविषयत्वोपगमे च तत एव विषयविषयिभावाख्यः व्यावहारिकः पारमार्थिक एव वा संबन्धोऽभ्युपगत एवेति न तदभावसिद्धवत्कारेण संबन्ध्यभावसाधनप्रसक्तिः। शुक्तिरजतादेस्तु बाधितत्वेन मिथ्यात्वात् पारमार्थिकसंबन्धायोगेन काल्पनिकसंबन्धप्रतियोगित्वम्। न चैवं घटादीनां स्वारसिकबाधग्रहोऽस्ति। नेह नानास्ति किंचनेत्यादेः ब्रह्मपृथक्सिद्धवस्तुनिषेधपरत्वाभ्युपगम एव पदानामर्थवत्त्वमुपपादयितुं शक्यं न त्वन्यथेति पूर्वमेवोक्तम्। अतो न शास्त्रात् घटादिप्रपंचबाधः।

## भाविबाधानुपपत्तिः

अत एव भाविबाधोपवर्णनमपि दुराशामात्रनिबन्धनमित्यावेदितम्। वाक्यघटकनिखिलपदानामर्थवत्तानुरोधेन प्रमाणभूतविस्पष्टार्थकवाक्यान्तरानुरोधेन चैव हि वाक्यतात्पर्यं निर्णेतव्यम्। नत्वेकद्व्यादिपदमात्रदर्शनेन। पूर्वापरापरामृष्टश्शब्दः अन्यां कुरुते मतिमिति ह्याहुः। अत एव उपक्रमोपसंहारादीनां तात्पर्यनिर्णयलिङ्गत्वमनुमन्यते। तस्मादखिलवैदिकपदवाक्यानुरोधेन वेदवाक्यतात्पर्यमवधार्य वेदाविरुद्धमर्थमनुमन्यमानस्य कृत्स्नवेदैकरूपप्रामाण्यपरिग्रहेण अव्याहताभिधानात्मकवेदमहिमसंरक्षणेन च बहिरन्तश्च सुदृढवैदिकपरिबृढतायाः स्फुटत्वात् कंचुकमात्रे वैदिकत्वमित्युपालम्भो न कथंचिदपि संबद्धो भवितुमर्हति। किन्तु द्वित्रादिपदमात्रापातप्रतीतार्थसुदृढाभिनिवेशिनो वेदवाक्यपरस्परविरोधमप्यविगणयतः गणनेऽपि प्रायेण वेदवाक्यानामप्रामाण्यपर्यायमन्यादृशमेव प्रामाण्यमुपवर्णयतः प्रमाणमनपेक्ष्य यथारुचि अप्रामाणिकमप्यर्थं परिगृह्णत एव वेदविरुद्धनिगूढाभिसन्ध्यभिव्यक्त्या तथोपालम्भस्संभवितुमर्हति। अत एवोक्तं शतदूषण्यां यथारुचि परिग्रह इति तु स्यात्। तथा च कृतं वैदिकत्वकंचुकवहनवृथा प्रयासेनेति। एवं च दृश इव दृश्यप्रपंचस्याप्यबाधितत्वेन पारमार्थिकत्वात् तत्संबन्धोऽपि पारमार्थिक एव, न त्वनिर्वचनीयो व्यावहारिको वा।

## पारमार्थिकस्य पारमार्थिकं प्रत्येवोपादानत्वम्

प्रपंचस्य पारमार्थिकत्व एव तदुपादानत्वं पारमार्थिकदृग्रूपब्रह्मणस्संगच्छेत, न तु मिथ्यात्वे। न हि सत्यं मिथ्योपादानं क्वचिद् दृष्टम्। विवर्तोपादानत्वं तु क्वचिदप्यसिद्धम्। वेदेऽपि परिणाम्युपादानमेवेह निदर्शनं प्रदर्श्यंते। तत्राप्यूर्णनाभ्यादिदृष्टान्तप्रदर्शनात् शरीरद्वारा परमार्थकार्यपरिणाम्युपादानत्वमेव दार्ष्टान्तिकेऽपि श्रुत्यभिप्रेतमिति तदक्षरस्वारस्यविदां दुरपह्नवमेव। अतो दृश्यस्य ब्रह्मण्यध्यासकल्पनं तदर्थं काल्पनिकसंबन्धकल्पनं च निर्मूलकमेव। सन् घट इति च घटे धर्मभूतसत्तावैशिष्ट्यावगाही प्रमात्मक एव प्रत्ययः पारमार्थिकसंबन्धेनैव निर्वोढुं शक्य इति न तदर्थमपि दृग्दृश्ययोरनिर्वचनीयसंबन्धः कल्पयितव्यः। सत्तारूपधर्मविशिष्टेन घटादेरभेदादेव पारमार्थिकात् सन् घट इत्यादिसमानाधिकरणप्रत्ययः न तु भेदाभेदाभ्यां तयोरेकस्मिन्नसम्भवात्। प्रवृत्तिनिमित्तयोरेव भेदे तदाश्रयाभेद एव च प्रतिपाद्ये हि पदानां सामानाधिकरण्यमनुशिष्यते, न त्वेकस्मिन्नेव भेदाभेदयोः प्रतिपाद्ययोः। अतः सन् घट इत्यादौ घटादिधर्मभेदस्येव सत्त्वघटत्वादिधर्मभेदस्येव च संबन्धस्यापि पारमार्थिकस्यैव भानमिति निर्वाहसंभवे तत्रातीन्द्रियदृग्दृश्यैक्यभानं स्वीकृत्य भेद इव संबन्धोऽप्यनिर्वचनीयस्स्वीकर्तव्य इत्यनुशासनमनुपपन्नत्वादनुपादेयमेवेति कृतं पिष्टपेषणेन।

## शतदूषण्यामनिर्वचनीयानुमतेरप्रसक्तिः

यत्तु—शतदूषण्यपि परमसौहार्देन दृग्दृश्ययोः संबन्धमुपपादयितुं प्रवृत्ता, संज्ञाविशेषेण स्वरूपविशेषेण लक्षणेन प्रकारान्तरादिना च दृग्दृश्ययोः संबन्धं दुर्वचमभिप्रयन्ती तदनिर्वचनीयत्वमेव हृदयेनानुमन्यत इति। तन्न। तदसाधारणसंज्ञास्वरूपलक्षणादीनां विशिष्य दुर्वचत्वाभिधाने वस्तुतः तात्पर्योपगमेऽपि सामान्यरूपेण सुवचत्वाभ्युपगमे विरोधाभावेन सामान्यत एव व्यवहारनिष्पत्तेरित्यादिस्फुटोक्त्या च भवदभिमतसदसदनिर्वचनीयत्वानुमत्यप्रसक्तेः। विशेषतोऽपि विषयविषयिभाव इत्येव वा विशेषनाम निर्दिश्यताम्। द्वितीयेऽपि स एव सः न त्वसः अतिपीडायां तु व्यवहारानुगुण्यापादनमित्यादिना तत्रैव संज्ञास्वरूपलक्षणादिनिर्वचनेन

विशिष्य दुर्वचत्वेऽपि तात्पर्याभावाच्च । विशेषतो निर्वचनस्याशक्तिमात्रेण अबाधितानुभवसमधिगतार्थजातापलापो दुष्कर इत्यत्रैव हि संज्ञाविशेषमन्तरेणापि सामान्यत एव व्यवहारनिष्पत्तेः किन्तद्विचारेणेत्यादि । तत्तूपेक्षणीयत्ववचनानां परमं तात्पर्यम् । अतो घटादीनामनिर्वचनीयसंबन्धप्रतियोगित्वाप्रसिद्ध्या अभावसाधनं निर्निबन्धनमेव । एतच्चात्र द्वितीयकल्पमुपपादयितुं प्रवृत्तयाऽपि परकृत्या स्वदर्शितहेतूनामसिद्धिमभिसन्दधानयेव तद्विरुद्धं अन्ते पुनः न द्वितीयः कल्पः क्षोदक्षम इत्यवितथमुपसंहरन्त्या कण्ठरवेणैवानुमन्यते ।

**सम्बन्धानुपपत्त्या मिथ्यात्वानुमानानुग्राहकतर्कासंभवः**

मिथ्यात्वानुमानानुग्राहकतर्कविवक्षया दृग्दृश्यसंबन्धानुपपत्त्यभिधानमिति तृतीयकल्पश्च शतदूषण्यामसत्यत्वपक्षेऽपि संबन्धानुपपत्तिप्रसङ्गेन प्रतितर्केण पराहत इत्युक्तम् । संबन्धिनस्सत्यत्वेऽप्यनुपपद्यमानः संबन्धः तदसत्यत्वे कथमुपपन्नस्स्यादिति भावः । अत्र यदुक्तं दृश्यप्रपंचस्य ब्रह्मपरिणामतायाः श्रीभाष्यमतेऽप्यसम्मतत्वात् विवर्तरूपतायाश्च विषम सत्ताकत्वं विनाऽनुपपद्यमानतया मिथ्यात्वं विहाय सत्यत्वोपगमे ब्रह्मणस्साक्षादुपादानत्वानुपपत्तिरप्रतिहतो बाधकस्तर्क इति । तदयुक्तम् । श्रीभाष्यकृन्मते विशेषणविशेषद्वारा परिणाम्युपादानभावस्यैव श्रुतिस्मृतिसूत्राक्षरस्वारस्यपारवश्येन स्वीकार इति प्रदर्शितत्वेन विवर्तवादकथागन्धस्य दूरोत्सारितत्वात् । मिथ्यात्वानुमानेन प्रपंचमिथ्यात्वसिद्धौ विवर्तोपादनत्वसिद्धिः; तत्सिद्धौ च तदनुपपत्तिप्रसङ्गतर्कानुगृहीतानुमानेन प्रपंचमिथ्यात्वसिद्धिरिति परस्पराश्रयाद्यापत्तेश्च । अतो मिथ्यात्वसिद्धेः पूर्वं शुक्तिरूप्यादिदृष्टान्तेन संबन्धस्तत्प्रतियोग्यपि च आरोपित इति न वक्तुं शक्यम् । सत्यस्याप्यारोपितसंबन्धप्रतियोगित्वोपगमो भवन्मतेऽप्यवर्जनीय इत्यपि प्रदर्शितं शतदूषण्याम् । सत्यत्वेऽप्यनुभूतेस्तद्विषयज्ञानान्तरस्यारोपितसंबन्धेन व्यवहार इति तुल्यमिति । अनुभूतितद्ज्ञानयोस्त्वन्मते परमार्थसंबन्धानभ्युपगमेऽपि अनुभूतिज्ञानमिति व्यवहारौपयिकतया कल्पनीयानिर्वचनीयसंबन्धं प्रति सत्यभूताया अनुभूतेरेव प्रतियोगित्वोपगमावश्यंभावेन प्रतियोगिसत्यत्वे कल्पितसंबन्धानुपपत्तिरित्यपि न शक्यमापादयितुमिति हि तदाशयः ।

**अनुभूतेर्वृत्तिविषयत्वेऽपि सत्यत्ववत् घटादीनामपि तदविरोधः**

एतेन अनुभूतिर्हि संविदेवेति तस्याः ज्ञानान्तरविषयत्वमपि वृत्तिविषयत्वापरपर्यायं मिथ्याभूतम् । तत्संबन्धश्च तत्र मिथ्याभूत इत्यारभ्य आरोपितसंबन्धप्रतियोगिनः सत्यत्वं न कुत्रापि दृष्टमित्यादि व्याहतजल्पितमप्यपास्तम् । वृत्त्यपरपर्यायज्ञानान्तरेण सह घटादिवत् मिथ्याभूतसंबन्धेन संबन्धितयाऽभ्युपेतायामनुभूतावेव सत्यत्वे सत्यपि आरोपितसंबन्धप्रतियोगित्वाभ्युपगमावश्यंभावेन तददर्शनोक्तेर्विरुद्धत्वाच्च । अनुभूतेर्वृत्तिज्ञानविषयत्वाभ्युपगमानुरोधेनानुभूतिवृत्तिज्ञानयोर्यः संबन्धः कल्प्यते तत्रानुभूतेः प्रतियोगित्वं नेति न हि वक्तुं शक्यम् । अतोऽनुभूति-वत्प्रपंचस्य सत्यत्वेऽपि तत्प्रतियोगिकसंबन्धोपपत्त्या न तदनुपपत्तिः प्रसञ्जयितुं शक्यत इति न तया मिथ्यात्वानुमानानुग्राहकतर्कावकाशः । अनुभूतेरधिष्ठानतया विशेषस्तु देहादावात्माध्यासे देहादेरप्यधिष्ठानत्वात् न वक्तुं शक्य इति प्रागेवोक्तं न विस्मर्तव्यम् । संबन्धिनं विना संबन्धो नात्मानं लभत इत्येव नियमः । न तु संबन्धं विना संबन्धी नात्मानं लभत इति । दूरस्थवनस्पत्योस्तद्व्यभिचारात् । अत एवानारोपितप्रतियो-गिकारोपितसंसर्गो न संभवतीत्यपि नोपगन्तुं युक्तम् । न चात्रान्यथा-ख्यात्यापत्तिरनिर्वचनीयख्यातिबाधापत्तिर्वा दूषणम् । अप्रामाणिकबाह्य-कल्पितानिर्वचनीयख्यातिपरिग्रहापेक्षया वेदप्रामाण्यवादिनैयायिकादिपरि-गृहीतान्यथाख्यातावेव स्वारस्यादिना इष्टापत्तेरपि कर्तुमुचितत्वात् । लाघवलिप्सया वैदिकमीमांसकानुमताख्यातिवादस्वीकारेऽपि विरोधाभावात् क्वचित्तदुभयमुपगम्य त्रिवृत्करणादिश्रुतिस्मृतिसूत्रप्रतिनिधिविशेषग्रहण-न्यायाद्यनुसारेण सर्वज्ञानयाथार्थ्यवादावलम्बनेन वा सर्वव्यवहारनिर्वाहसंभवे सर्वज्ञानेषु संसर्गारोपः तत्प्रतियोगिनोऽप्यारोपः न विवर्तस्य सत्यत्वं इत्येवं सर्वापलापसन्नाहस्य सुदूरनिर्वर्तितविवर्तवार्तेषु वैदिकेष्वकिंचित्करत्वाच्च । अतस्संबन्धिनं विना न संबन्धस्यात्मलाभ इत्येव नियमः । अत एवोक्त-कुतर्कस्य विपर्ययपर्यवसानेन संबन्धोपपत्त्या दृश्यमिथ्यात्वकल्पने संबन्धि-परित्यागेन संबन्धस्वीकारप्रसङ्गः । न ह्यस्ति संभवस्संबन्धिनमन्तरेण संबन्धस्येति शतदूषण्यामङ्गवैकल्यमुपदर्शितम् ।

## सम्बन्धानुपपत्त्येत्यस्य प्रतीयमानारोपितसम्बन्धातिरिक्तसम्बन्धानुपपत्त्यर्थकत्वे दोषः

यच्चोक्तं संबन्धानुपपत्त्येत्यस्य प्रतीयमानारोपितसंबन्धातिरिक्तसंबन्धानुपपत्त्येति भावः। प्रतीयमानस्संबन्धो विश्वमिथ्यात्वं विना नोपपद्यत इत्येव अर्थापत्तेराकारः। अस्य च विपर्ययः प्रतीयते चायं संबन्ध इत्येवं रूपो न विरुद्ध इति। तच्च तुच्छम्। संबन्धानुपपत्येत्यत्र प्रतीयमानस्संबन्धो नोपपद्येतेति तदापत्त्याकारविलेखनव्याघातात्। अप्रतीयमानस्संबधो नोपपद्येतेति हि तदाकारस्स्यात्। तत्र चेष्टापतिरेव। प्रतीयमानत्वस्य आरोपितसंबन्धातिरिक्तसंबन्धविशेषणत्वे च अनारोपितसंबन्धस्यैव प्रतीयमानताया उक्तत्वेन तस्य च दृश्यसत्यत्व एवोपपद्यमानतया अनुपद्यमानत्वोक्तेः विरुद्धत्वाच्च। अपि च नोपपद्येतेति प्रसङ्गस्य उपपद्यत इत्येव स्वविषयविपर्ययस्स्यात् न तु प्रतीयत इति स तु न प्रतीयेतेति प्रसङ्गस्यैव विषयविपर्ययः। दर्शितश्चात्रापि दूषणं शतदूषण्यां उपलभ्यते चायं संबन्ध इत्येव विपर्यये न दोष इति चेत्। तर्हि दृश्यसत्यत्वे संबन्धोपलम्भभङ्गप्रसङ्ग इति तर्कस्स्यात्। अहो संबन्धिसत्यत्वे संबन्धोपलम्भभंङ्ग इति कुत्रेयं व्याप्तिर्गृह्यत इति। व्याप्तिरूपाङ्गविकलोऽयं तर्काभास एव स्यादिति भावः। संबन्धिसत्यत्वे प्रतीयमानस्संबन्धो पि सत्य एव स्यादिति चेत्काममस्तु यदि न बाधस्स्यात्। न चैवं ब्रह्मपरिणामवादस्वीकारापत्तिरिति वाच्यम्। घटपटाद्योः मिथः परिणामिपरिणामभावाभावेऽपि अनारोपितसंयोगादिसंबन्धदर्शनेन व्याप्त्यभावात्। अधिकं प्रागेवोक्तम्।

## सम्बन्धारोपे प्रतियोगिन एवारोप इत्यत्र व्यभिचारप्रदर्शनम्

संबन्धारोपे च प्रतियोगिन एवारोपः न त्वनुयोगिन इत्यपि न नियमः। सत्यस्यापि संविदात्मनः मिथ्याभूतवृत्तिज्ञानविषयत्वोपगमेन तज्ज्ञानात्मसंबन्धे वृत्तिज्ञानस्यैवानुयोगित्वात् विषयभूतसंविदात्मन एव प्रतियोगित्वाच्च। तद्विपरिवर्तोपगमे च घटादिज्ञानसंबन्धस्थलेऽपि तथाभ्युपगमो न वार्यः स्यात्। लोहितस्स्फटिक इत्यादौ सन्निकृष्टस्थले भवन्मतेऽपि अन्यथाख्यात्यभ्युपगमाच्च। काल्पनिकसंबन्धस्य काल्पनिकप्रतियोगिकत्वनियम इत्यपि न वक्तुं शक्यम्, अन्यथाख्यातौ संबन्धमात्रस्य काल्प-

निकत्वात् । न च दृशि दृश्यारोपस्तु नान्यथाख्यातिः, दृश्यस्य कारणात्मनाऽवस्थानदशायामसन्निकृष्टत्वादित्युक्तं युक्तम् । सन् घट इत्यादावेव हि दृशि दृश्यारोप इति भवतोच्यते । सन् घट इति च कार्यात्मनाऽवस्थानदशायामेव दृश्यते यदा च दृश्यते तदैव सन्निकृष्टेन भवितव्यम्, न तु कालान्तरेऽपि । अतो दृश्यस्य घटादेः कारणात्मनाऽवस्थानदशायामसन्निकृष्टत्वेऽपि दर्शनकाले चक्षुस्सन्निकृष्टत्वेन तत्रानिर्वचनीयख्यातेरनावश्यकत्वात् । अतस्सन् घट इत्यादौ दृशि दृश्यारोपोपगमेऽपि तस्यान्यथाख्यातिरूपत्वे बाधकाभावात् । संबन्धमात्रस्य काल्पनिकत्वेऽपि न तत्प्रतियोगिनः दृश्यस्य घटादेरपि काल्पनिकत्वप्रसक्तिः । यथा च परकीये स्वकीयत्वभ्रमे दूरस्थवनस्पत्योस्संयोगभ्रमे च संबन्धमात्रस्य काल्पनिकता तथोपदर्शितं शतदूषणीचण्डमारुतयोः । अतस्संबन्धस्य काल्पनिकत्वेऽपि न संबन्धिनोऽपि काल्पनिकत्वनियमः ।

## पारमार्थिकसम्बन्धसमर्थनम्

वस्तुतस्तु संबन्धोऽपि काल्पनिक एवेत्यपि च नियमः । संयोगसमवायादीनामनेकत्र भासमानानां अबाधेनाकाल्पनिकत्वात् । विषयविषयिभावाख्यसंबन्धस्य तु सर्वविषयसाधारणस्य बाधप्रसक्त्यभावात् सुतरामकाल्पनिकत्वम् ।

यत्तु विषयविषयिभावसंबन्धस्तु वृत्त्युपहितविषयोपहितचैतन्ययोस्समसत्ताकत्वात् तत्समसत्ताकस्सत्यमुपपद्यते । दृग्दृश्ययोस्तु भिन्नसत्ताकयोः न संभवतीति । तदसत् । वृत्त्युपहितविषयोपहितचैतन्ययोस्सद्भावे तयोः विषयविषयिभावे वा मानाभावात् । न हि घटं जानामीतिवत् घटोपहितचैतन्यं जानामीति स्वारसिकानुभवोऽस्ति । मिथ्यात्वानुमानसिद्धेः पूर्वं दृग्दृश्ययोः भिन्नसत्ताकत्वमपि स्वयमसिद्धम् कथं तयोः विषयविषयिभावं सर्वानुभवसिद्धमुपरुन्ध्यात् । सन् घट इति सामानाधिकरण्येनानुभवे संबन्धान्तरमेव पारमार्थिकं प्रतीयत इति प्रागुक्तम् । विषयविषयिभावस्तु ब्रह्म वेद ब्रह्मवित्, घटं जानामीत्यादौ वैयधिकरण्येनावभासमानयोर्विषयविषयिणोरनुभूयमानोऽपि पारमार्थिक एवेत्यत्रोच्यते । बाधाभावात् । यद्ध्यबाधितमधिगम्यते तत्पारमार्थिकमेवेति संप्रतिपन्नमेव । खण्डनग्रन्थादिष्वपि तत्खण्डनं

युक्तिभिरेव कृतं न तु प्रमाणबाधेन । तद्युक्तयश्चात्यन्तबल्बजा इति शतदूषण्यादौ निरूपितम् । संयोगातिरिक्तसमवायविशेषणतायाः आधेयस्वस्वामिभावादिसंबन्धानामेकैकनिष्ठत्वेऽपि संबन्धत्वं संप्रतिपन्नमस्ति, तद्वत् विषयत्वविषयित्वयोः प्रत्येकमेकैकनिष्ठत्वेऽपि न संबन्धत्वविघातः । अन्यत्र तद्व्यवहारनिर्वाहकस्य स्वस्मिन्नपि तद्व्यवहारसिद्धौ निर्वाहकान्तरादर्शने स्वपरनिर्वाहकत्वोपगमाच्च नानवस्थादयोऽपि । अत एवाद्वैतसिद्ध्यादौ खण्डनसमर्थनं प्रौढिवादमात्रमिति तदनुयायिनाऽप्यनुमन्यते ।

## ब्रह्मसिद्ध्युक्तिविमर्शनम्

यच्च दृश्यसंबन्धमधिकृत्य ब्रह्मसिद्धिरेवं वदति, एकत्व एवायं द्रष्टृदृश्यभावोऽवकल्पते, द्रष्टुरेव चिदात्मनः तथा, तथा विपरिणामात् विवर्तनाद्वा, नानात्वे तु विविक्तस्वभावयोरसंसृष्टपरस्परस्वरूपयोरसंबद्धयोः कीदृशो द्रष्टृदृश्यभावः इत्याद्युक्तम् । तच्चापाततः । उक्तवाक्यानां दृश्यतिरिक्तदृश्यनिषेधपरत्वेन दृग्दृश्यसंबन्धनिषेधपरत्वाभावात् । तत्रापि कर्मकर्तृभावस्य भेदे सत्येव स्वरसवाहितया एकत्व एवायं द्रष्टृदृश्यभावोऽवकल्पत इत्युक्तेरयुक्तेः । स्वरूपतो निर्विकारतया श्रुतस्य चिदात्मनः परिणामानुपपत्तेः । वेदेषु मृद्घटादिपरिणामदृष्टान्तस्यैव प्रदर्शनेन विवर्तवादस्य वैदिकत्वायोगात् । नानात्वेऽपि दृक्स्वरूपस्य व्यापित्वोपगमे पारमार्थिकदृश्यसंसर्गस्यानिवार्यत्वेनासंबद्धत्वविरोधात् । अणुत्वोपगमेऽपि छेत्रसंबद्धस्यापि तदीयच्छेदनसंबन्धेन छेद्यभाववत् द्रष्ट्रसंबद्धस्यापि तदीयधर्मभूतदर्शनसंबन्धेन दृश्यभावोपपत्तेश्च । दृश्यस्य धर्मभूतदर्शनसंबन्धश्च यथासम्भवं संयोगादिः विषयविषयिभावो वेत्युक्तमेव । अत एव न हि चित्या असंसृष्टं चेतितमिति युज्यत इत्यपि दत्तोत्तरम् । धर्मभूतचितिसंबन्धेनैव चेतितमित्युक्तिसंभवात् । धर्मभूतचैतन्यं च जानामीत्यनुभवसिद्धम् । "अविनाशीवारेऽयमात्माऽनुच्छित्तिधर्मा न विज्ञातुः विज्ञातेः नित्या एवात्मनो हि ते, ज्ञोऽत एवेत्यादिश्रुतिस्मृतिसूत्रसमधिगतं दुरपह्नवमित्युक्तम् । अत एवाप्रामाणिक एकान्तःकरणसंक्रमबुद्धिचिच्छायाविवर्तादिकल्पनस्यास्मन्मते प्रसक्त्यभावात् तन्निरसनानुवचनमनुक्तोपालम्भनमेवात्र ।

संबन्धश्च तादात्म्यलक्षण एवेत्यभिमानोऽपि निर्निबन्धनः । संयोगादिलक्षणस्यापि व्यधिकरणपदसमभिव्याहारादौ लोकवेदयोः बहुलमुपलम्भात् । ब्रह्मसिद्धौ च दृश्यतयैव दृश्यं व्यवस्थाप्यते न संबन्धेन । दर्शनं चेदं पराग्रूपविषयमिति मतान्तरमनूद्यते । तत्र न तादात्म्येनेति वक्तव्ये न संबन्धेनेति प्रयुक्त इति गम्यते । पूर्वमेकत्व एवायमित्यारभ्य द्रष्टृव्यतिरिक्तमस्तीति दुर्भणमित्यन्तेन स्वमते द्रष्टृदृश्यतादात्म्यस्यैवोपपादनेन तद्व्यावृत्तेरेव निरसिष्यमाणमतान्तरानुवादे वक्तुमुचितत्वात् तन्मतनिरसनावसरे चितेस्तु विभक्तमसंसृष्टं तथा चेत्यत इति दुरवगमं इति विभक्ततया भानस्यैव व्युदसनाच्च । अतो वाच्यवाचकभाववत् द्रष्टृदृश्यभाव एवानयोस्संबन्धः नान्य इति यावदिति न संबन्धेनेत्यस्य शङ्खपाणिविवरणं न मूलसन्दर्भानुगुणम् । अतस्तादात्म्यानभ्युपगमे दृग्दृश्ययोरसंबद्धत्वं ब्रह्मसिद्धावापादितं तच्चिन्त्यमेव । भिन्नयोरेव घटपटाद्योः संयोगादिना संबद्धाविमाविति स्वारसिकव्यवहारस्य लोके बहुलमुपलम्भात् । मिथ्यात्वाभिमतेन दृश्यवर्गेण परमार्थदृशस्तादात्म्यायोगात् । शुक्तिरजतवद् दृश्यस्य विवर्तत्वोपगमे तदुपादानसामानाधिकरण्येनैव प्रत्येतव्यतया इदमिति पराग्रूपेण प्रत्यगर्थदृग्वैयधिकरण्येन प्रतीतिव्यवहारानुपपत्तेश्च । दर्पणतलस्थात्मीयदेह प्रतिबिम्बविवर्तसमाधिश्चेह नानुकूलः । देहस्येव तद्विवर्तस्यापि दृग्रूपात्मभिन्नत्वेनैव तत्रेदमिति विभक्तप्रतीतिव्यवहारोपपत्तेः । न च दर्पणतले प्रतीयमानो दृगात्मनो विवर्तः अपि तु तदीयदेहस्यैव तथा च व्याख्यातं शङ्खपाणिनैव अत्र दृष्टान्तमाह दर्पण इति, आत्मन इति, आत्मीयस्य देहस्येत्यर्थं इति ।

वस्तुतो विवर्तवादस्तु निर्मूलक एवेत्युक्तम् । अत इदं जानामीत्यादिव्यधिकरणप्रतीतिव्यवहाराभ्यां दृश्यतिरिक्तदृश्यसिद्धिरनिवार्यैव स्यात् । व्यतिरेके तयोस्संबन्धसम्भवश्च पूर्वं प्रदर्शितः । न चात्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीति द्रष्टुरव्यतिरेको दृश्यस्याम्नायत इति युक्तं । व्यतिरेकेऽपि विशिष्टान्तर्भूतस्य विशेषणस्य स्वरूपतो विशिष्टज्ञानविषयत्वसंभवेनाव्यतिरेकासिद्धेः । आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इत्यात्मनो ध्येयत्वस्यापि वचनेन कारणस्यैव ध्येयत्वेन विशिष्टस्यैव कारणत्वेन चात्रात्मशब्दस्य विशिष्टपरताया वक्तुमुचितत्वात् । शरीरप्रतिसंबन्धिमात्रे रूढत्वेऽप्यात्मशब्दस्य सामर्थ्यादेव सूक्ष्मचिदचितोश्शरीरतया तदन्तर्भावावगमात् । आत्मनि

दर्शनात्मकनिरन्तरध्यानेन विषयीकृते सति तत्प्रसादात् सर्वं विदितं भवति। अनुकूलत्वेन विदितं प्रियं भवति। निरतिशयप्रियसविभूतिकब्रह्मप्राप्तिरूप-मुक्तिः भवतीति तरति शोकमात्मविदित्युपक्रम्य सर्वं ह पश्यः पश्यतीति श्रुत्यन्तरोक्तसंवादसिद्धस्फूर्तिकस्य प्रकृतानुगुणार्थस्यैव वा विवक्षणीयत्वेन दृग्दृश्यानतिरेककथाया इह प्रसक्त्यभावाच्च। अन्यथा सर्वस्याभावेन सर्वं विज्ञातमिति दुर्घटं स्यात्। मिथ्यात्वेनेत्यादिपूरणे च न किंचित्प्रमाणमस्ति। अधिष्ठानज्ञानमात्रेण स्वस्य तत्राप्रतिभातस्य पुरुषान्तरप्रतिपन्नस्यापि मिथ्या-त्वेन ज्ञानासंभवात् सर्वपदस्य संकुचितार्थकत्वप्रसङ्गः, प्रमाणान्तरविरोधश्च दुर्वारस्स्यात्। अतो दृश्यस्य द्रष्टुरव्यतिरेके अनिर्वचनीयत्वे वा न किंचिदपि मानमस्ति, प्रत्युत पारमार्थिकत्वे नानात्व एव चाबाधितमिदन्त्वेन ग्रहणा-दिकं प्रमाणम्। अत एवेष्टसिद्ध्युक्तमात्मैक्ये नैकोऽपि दोषोऽस्मत्पक्ष इत्यपि प्रत्युक्तम्। नानात्वेऽपि साक्षाद्धर्मभूतज्ञानद्वारेण वा तयोस्संयोगादिर्विषय-विषयिभावो वा पारमार्थिकसंबन्धोऽपि भवितुमर्हतीत्यभिहितम्। तस्य चाप्रामाणिकविवर्तवादोपगमविरोधभिया काल्पनिकत्वकल्पनं तु नैव न्याय्यमित्यभ्यधाम। अतो दृग्दृश्यसम्बन्धानुपपत्त्यभावेनानुग्राहकाभावेना प्रयोजकं मिथ्यात्वानुमानमिति सिद्धम्।

——

## बाह्यप्रकाशानुपपत्तिवादः

"नित्यमुक्तस्य बन्धश्चेन्नित्यमुक्तिर्न सम्भवेत् ।
बन्धस्यापि च नित्यत्वात् बन्धाभावे त्वमुक्तता ॥"

इत्यादिना शतदूषण्यां नित्यमुक्तत्वेन सर्वसंप्रतिपन्ने ब्रह्मणि अविद्याश्रयत्वाभ्युपगमे तस्य स्वगताविद्यातत्कार्यानुभवात्मकबन्धसंबन्धाभ्युपगमावश्यंभावेन नित्यमुक्तत्वमनुपपन्नमित्यादिदूषणजातं यदुक्तं तदेतत् ब्रह्माज्ञानवादाभिप्रायमिति स्फुटमेव ।

### जीवाज्ञानपक्षेण ब्रह्माज्ञानदूषणस्यापरिहार्यत्वम्

ब्रह्माज्ञानपक्षश्च आश्रयत्वविषयत्वभागिनीत्यादिसंक्षेपशारीरकादिवचनात् प्रसिद्ध एव । तदिह ब्रह्मसिद्ध्यादिसाधितजीवाज्ञानपक्षान्तरमवलम्ब्य प्रत्यवस्थानेन च ब्रह्माज्ञानपक्षे पूर्वोक्तदूषणस्यानिवार्यत्वमेव मुखान्तरेणानुमतं भवतीति न तदुद्धारशक्तिसंभावनावकाशः । न हि दह्यमानं गृहं विहायान्यत्र पलायनमात्रेण गृहदाहश्शमितो भवति । न च तत्रापि जैवेन रूपेण ब्रह्मण एवाज्ञानाभ्युपगमान्न पलायनमिति वाच्यम् । तथासति अद्वैतसिद्ध्यादिषु ब्रह्माज्ञानजीवाज्ञानवादपृथक्करणानुपपत्तेः । निर्विशेषचितेः जैवरूपायोगाच्च । जीवाज्ञानपक्षश्चेहाप्रसक्तः । सोऽपि चान्योन्याश्रयादिभिरनुपपन्न एवेत्युपपादितमन्यत्र । तत्र बिम्बप्रतिबिम्बयोरिव जीवब्रह्मणोरभेदः; अविद्याया उपाधित्वमात्रेण जीवाश्रयत्वव्यपदेशः इत्युक्तमुभयमपि न युक्तम् । अरूपस्य ब्रह्मणः प्रतिबिम्बासम्भवात् । न हि रूपात्तद्वतश्चान्यस्य क्वचित् प्रतिबिम्बं दृश्यते । सत्यत्वासत्यत्वप्राङ्मुखत्वप्रत्यङ्मुखत्वबिम्बोपाध्यादिसापेक्षत्वनिरपेक्षत्वादिबहुविधविरुद्धधर्माध्यासेन बिम्बप्रतिबिम्बयोर्भेदस्यैव लोके दर्शनात् दर्पणे मुखमित्यादावुपाधिभूतदर्पणादीनामेव प्रतिबिम्बमुखादिकं प्रत्याश्रयत्वदर्शनानुसारेण अविद्याया उपाधित्वे तस्या एव जीवं प्रत्याश्रयत्वोपपत्त्या जीवस्य तां प्रत्याश्रयत्वायोगाच्च । न च ब्रह्माभेदे सति जीवात्मनोऽपि विद्यास्वरूपतया तद्विरुद्धाविद्यासंबन्ध उपपद्यते । उपपत्तौ वा श्रवणादिनाऽपि समानविषयेण तन्निवृत्तिर्नोपपद्येत इत्यादि

दूषणजातं तावदास्तां । आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव-केवलेति पक्ष एव ह्यत्र दूषितः, तत्र ब्रह्मणि दोषानभ्युपगमे जगदध्या-साधिष्ठानत्वविवर्तोपादानत्वादिकमपि दुर्घटमेव स्यात् । न हि तमस्संबन्ध-रहिता प्रकाशदेशवर्तमाना रज्जुः तदवच्छिन्नचैतन्यं वा सर्पाध्यासाधिष्ठानं तद्विवर्तोपादानं वा भवताऽप्यनुमन्यते ।

न चाज्ञानविषयत्वोपगमादधिष्ठानत्वाद्युपपत्तिः । अज्ञातस्या-धिष्ठानत्वायोगात् । केनचिदाकारेणाज्ञातत्वेऽपि आकारान्तरेण ज्ञातत्व-मप्यस्तीति च निराकारब्रह्मवादिना न स्वरसतो वक्तुं शक्यम् । कल्पनया कथंचिदुपपादनेऽपि जीववेषेणैव संसारित्वमज्ञानानुभवादिकं च न तु स्वरूपेणेति नियमनं तु दुर्निर्वहं निर्निबन्धनं च । अनुपदं फलतस्तु विद्यात्मनो जीवात्मन एव ब्रह्मत्वात् ब्रह्मैवाज्ञानमनुभवतीति स्वयमेवाभि-धानात् । अज्ञानरहितस्वप्रकाशब्रह्मणोऽपि स्वाभिन्नजीवतद्गताज्ञानत-त्कार्यानुभवादेरनिवार्यत्वेन नित्यमुक्तत्वायोगात् । जीवरूपेणैव बाह्यानु-भवादिकं स्वरूपेण तु नित्यमुक्तत्वमित्यवच्छेदकभेदान्न विरोध इति चेत्, तर्हि बाह्यानुभवाभावात् ब्रह्मणस्स्वरूपेणाप्यज्ञानमनिवार्यं स्यात् । सर्वज्ञत्व-वचनं च व्याहन्येत । श्रूयते हि यस्सर्वज्ञः सर्वविदिति । न च तत्र जीव-रूपेणैव सर्वज्ञत्वादिकं विवक्षितमिति वक्तुं युक्तम् । तस्य अदृश्यत्वादिगुणको धर्मोक्तेरिति सूत्रे जीवव्यावर्तकहेतुतयाऽभिधानात् । तत्र च शांकरभाष्येऽपि न हि प्रधानस्याचेतनस्य शारीरस्य वोपाधिपरिच्छिन्नदृष्टेः सर्वज्ञत्वं सर्ववित्त्वं वा संभवतीति हि व्याख्यातम् । न च परमेश्वरगोचरं तत् सूत्रं न ब्रह्मस्वरूपगोचरमिति वाच्यम् । परमेश्वरस्य ब्रह्मस्वरूपात् कथंचिदपि भेदाभावात् । अन्यथा स ब्रह्मविद्यामिति ब्रह्मविद्यासमाख्या तदधिगम्यस्याक्षरस्याब्रह्मत्वे बाधिता स्यादित्युपरितनशङ्करभाष्यविरोधाच्च । निष्कृष्टचैतन्यमात्रदृष्ट्या ऐक्यं तु त्वन्मते जीवस्यापि समानमिति न तद्विवक्षयाऽप्युक्तवाक्यघटनसंभवः । मैत्रेयीब्राह्मणे च आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्यादिना मोक्षसाधनदर्शनोपासन-विषयतया आम्नातस्य परस्यैव ब्रह्मणः ब्रह्म सर्वानुभूरिति वाक्येन सर्वानु-भवितृत्ववचनं च ब्रह्मणो बाह्यानुभवनिषेधे व्याहन्येत ।

## बाह्यानुभवाभावे सर्वज्ञत्वानुपपत्तिः

यत्तु—सिद्धान्तलेशसंग्रहोक्तरीत्या सर्वविवर्तोपादानतया ब्रह्मणः सर्वप्रपंचतादात्म्येनैव सर्वज्ञत्वमिति । तन्न । विवर्तोपादानतायाः प्रागेव निराकृतत्वात् । तत्तादात्म्यमात्रस्य तज्ज्ञत्वोपपादकत्वे मृदादेरपि घटादितादात्म्येन तज्ज्ञत्वापत्तेः । तदवभासकत्वस्यापि प्रयोजकत्वोपगमे किं तादात्म्येन ? असंबद्धस्य भासकत्वायोगादिति चेन्न । तादात्म्यातिरिक्तसंबन्धत एव तत्संभवस्य प्रदर्शितत्वात् । सत्यासत्यतयाऽभिमतयोस्तादात्म्यायोगात् । दीपादेस्तदवभासकस्यापि तज्ज्ञत्वव्यवहारादर्शनेन सर्वावभासकत्वमात्रेणापि सर्वज्ञत्वानुपपत्तेः । न च ब्रह्मणः सर्वावभासकज्ञानरूपत्वात् सर्वज्ञत्वमिति वाच्यम् । सर्वज्ञ इत्यादौ कर्त्रर्थकप्रत्ययादिनैरर्थक्यापत्तेः । ब्रह्मस्वरूपपरिशुद्धचैतन्ये स्वगताज्ञानस्येव स्वाभिन्नजीवगताज्ञानतत्कार्यसुखदुःखादिभानोपगमेऽपि नित्यमुक्तत्वविरोधतादवस्थ्याच्च । एवं जीवाज्ञानवादानुधावनेऽपि अद्वैतमते नित्यमुक्तत्वविरोधो दुरुद्धर इत्युक्तमेव । तर्हि किमुत ब्रह्माज्ञानवादे, स एव चेह प्रस्तुत इत्युक्तमेव । न च ब्रह्माज्ञानवादे अविद्यातत्कार्यभानस्य साक्ष्यधीनतया स्वानुभवैकस्वभावस्य ब्रह्मचैतन्यस्य न नित्यमुक्तत्वविरोध इति वाच्यम् । ब्रह्मातिरिक्तभवदुक्तसाक्षिसद्भावे मानाभावात् । चैतन्यप्रतिबिम्बस्य निरस्तत्वेनाविद्यावृत्तावपि तदसंभवात् । शुद्धब्रह्मण एवाविद्याश्रयत्वनिरूपणावसरे शुद्धचितः अज्ञानविरोधित्वाभावे घटादिवदप्रकाशत्वापत्तिरिति शङ्कायां वृत्त्यवच्छेदेन तस्या एवाज्ञानविरोधित्वात् । स्वतः तृणतूलादिभासकस्य सौरालोकस्य सूर्यकान्तावच्छेदेन स्वभास्यतृणतूलादिदाहकत्ववत् स्वतः अविद्यातत्कार्यभासकस्य चैतन्यस्य वृत्त्यवच्छेदेन तद्दाहकत्वादिति परिहारमभिहितवत्या अद्वैतसिद्ध्याऽपि शुद्धचैतन्यस्यापि स्वतएवाविद्यातत्कार्यभासकत्वाभ्युपगमात् । लघुचन्द्रिकायां च सर्वज्ञस्यैवाज्ञानाश्रयत्वोपपादनप्रकरणे वस्तुतः अविद्याश्रयत्वेन न सर्वज्ञत्वस्य विरोधः । किन्तु यं प्रत्यावारिका अविद्या तत्र न सार्वज्ञ्यं न च जीवान्यं प्रत्यावारिकेति ध्येयमिति निगमनेन विशिष्ट एव सार्वज्ञ्यमिति मूलकृदभिनिवेशस्य तुरीयं सर्वदृक्सदेति वचनविरुद्धस्यानादरणीयत्वसूचनात् । न च "स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम् । तच्चोभयं विना अविद्यासंबन्धं नैव सिद्ध्यतो"त्युक्तं युक्तम् । स्वरूपज्ञप्तेरविद्यासंबन्धं विना स्वत एव

सर्वज्ञत्वे बाधकाभावात् । न चास्या असङ्गस्वरूपतया श्रुताया विषयसङ्गतिर्न स्वतस्संभवतीति वाच्यम् । स्वरूपज्ञप्तेरविद्याश्रयत्वोमगमेन स्वत एवाविद्या संबन्धस्याप्यभ्युपगन्तव्यतया असङ्गश्रुतेः विशेषनिषेधपरताङ्गीकारावश्यंभावेन विषयसङ्गतौ विरोधाभावात् । न चाविद्यासंबन्धोऽप्यविद्यासंबन्धसापेक्षः । आत्माश्रयप्रसङ्गात् । स्वरूपज्ञप्तेः संबन्धसामान्यनिषेधोपगमे तत्र स्वत एव कालदेशसंबन्धस्याप्यङ्गीकारासंभवेन तद्घटितसत्तानित्यत्वसर्वगतत्वादीनामपि शुद्धचित्यनभ्युपगमापत्तेश्च, श्रूयते हि नित्यं विभुं सर्वगतं सुसूक्ष्ममिति । प्रमाणानां च तत्त्वज्ञानजननेनाविद्याविरोधित्वात् न तत्संबन्धाविनाभूतता । तदेवं शुद्धचितः स्वरूपतः प्रमाणत उभयतोऽप्यविद्यासंबन्धमन्तरेणैव सर्वज्ञत्वोपगमे बाधकस्य वक्तुमशक्यत्वात्, तत्रैव प्रमाणानां स्वरसत्वाच्च । शुद्धचिद्रूपब्रह्मणः स्वस्वानतिरिक्तजीवतद्गताज्ञानतत्कार्यानुभवात्मकबन्धावश्यंभावेन नित्यमुक्तत्वं ब्रह्माज्ञानजीवाज्ञानपक्षद्वयेऽपि दुर्निर्वहमित्युक्तं भवति ।

### परमते उक्तदोषस्य स्वमतेऽप्रसक्तिः

न चैवमुक्तदोषः श्रीभाष्यकृन्मते प्रसक्तिमप्यर्हति । तत्र ब्रह्मणः अज्ञानतत्कार्यानभ्युपगमात् । जीवात्मनां तदभ्युपगमेऽपि तेषां ब्रह्मणोऽत्यन्तभिन्नत्वेन तद्गताज्ञानतत्कार्यसुखदुःखाद्यनुभवस्य परं ब्रह्म प्रति तदवृत्तिगोचरतया बन्धरूपत्वायोगेन नित्यमुक्तत्वाविरोधात् । तदिदं शतदूषण्यामेव ननु भवन्मतेऽप्यज्ञानमस्तीत्यादिना विवेचितम् । न चैवमद्वैतमतेऽपि निस्तारस्स्यात् । तत्र जीवाज्ञानवादेऽपि जीवब्रह्मणोरत्यन्तभेदानभ्युपगमेन सर्वज्ञब्रह्मणः स्वानतिरिक्तजीवगताज्ञानसुखदुःखप्रतिसन्धाननिबन्धन सुखदुःखसंवेदनरूपबन्धस्य सौभर्यादियोगिनां युगपदनेकशरीरावच्छिन्नसुखदुःखानुभववदवर्जनीयत्वात् । ब्रह्माज्ञानवादे तु सुतराम् । एतेन श्रीभाष्यमते यदि परगतत्वादज्ञानस्य न ब्रह्मबाधकत्वं तर्ह्यत्रापि समानमित्युक्तं निरस्तम् ।

### अन्तःकरणतादात्म्याध्यासनिरासः

यत्तु—नाज्ञानाश्रयत्वमात्रमात्मनो बन्धः, किन्तु सुखदुःखाद्याश्रयान्तःकरणादितादात्म्याध्यासेन । अत एव हि सुषुप्त्यादौ स्थूलसूक्ष्मशरीर-

द्वयविलयेऽप्यविद्योपहितस्य कारणशरीरमात्रकस्य वा न सातिशयानित्यसुखाद्यनुभवः। किन्तु निरतिशयानन्दमात्रानुभवः। अत एव तापत्रयातुरस्यापि सुषुप्त्यनन्तरं सुखमहमस्वाप्समिति परामर्शः। तथा चाद्वैतमतेऽविद्याश्रयत्वेऽपि जैवेन रूपेण ब्रह्मणो-नाज्ञानाद्यनुभवविरोध इत्युक्तं, तदप्यत एव प्रत्युक्तम्। अतीन्द्रियेणान्तःकरणेन तादात्म्याध्यासायोगात्। न हि प्रत्यक्षेण स्थूलशरीरेणेव अतीन्द्रियेण सूक्ष्मेणापि तादात्म्याध्यासो दृश्यते। स्थूलोऽहं कृशोऽहं इतिवत् सूक्ष्मोऽहमित्यप्रत्ययात्। सुखादेश्चेतनधर्मतया जडान्तःकरणधर्मत्वायोगाच्च। अहं सुखीत्यादावहमर्थश्चेतन एव न त्वन्तःकरणमिति प्रपंचितमाकरे। अत एव सुषुप्तावपि नाहमर्थो निवर्तते, किन्तु तदानीमप्यनुवर्तत इत्यत्र तदनन्तरभावी सुखमहमस्वाप्समिति प्रकृतोपदर्शितप्रत्यवमर्शोऽपि प्रमाणं भवितुमर्हति। स्वापकाले अहमर्थविगमे हि स्वापाश्रयतया नाहमर्थः प्रत्यवमृश्येत। प्रत्यवमृश्यते चाहमर्थः स्वापाश्रयतया, यथाऽहमस्वाप्समिति। प्रमाणान्तराणि च दर्शयिष्यन्ते। अतः नित्यश्चेतन एवाहमर्थः। स एवानित्यसातिशयसुखदुःखतदनुभवाद्याश्रयः। न त्वनित्यं जडमन्तः करणम्। अतः अहं सुखीत्यादि प्रत्ययो नाध्यासरूपः, अपि तु प्रमात्मक एव। सुषुप्त्यवस्थायां तदभावस्तु विषयविरहात्। सोऽपीन्द्रियनिरोधात्। न त्वन्तःकरणविलयात्तदध्यासविरहाद्वा। तथा चान्तःकरणतादात्म्याध्याससद्भावे उपलंभवत् कल्पकमपि मृग्यमेव। अत एवास्मन्मते स नाभ्युपगम्यते। शरीरतादात्म्याध्यासोपगमेऽपि न तस्यैव बन्धप्रयोजकता। सुषुप्त्यादावभावात्। अत एव न सुखदुःखाद्यनुभव एव बन्धः किन्तु अविद्यातत्कार्यप्रकृतिसंबन्धादिरपि। अतः स्वगताविद्यातत्कार्यतदनुभवादीनामपि तद्रूपत्वोपगमावश्यंभावात्। अन्यथा सुषुप्तिप्रलयादिदशायां निरुक्ताध्यासाभावेन बन्धाभावे मुक्तत्वव्यवहारापत्तेरनिवार्यत्वाच्च। ब्रह्मणस्स्वगताविद्यातत्कार्यतदनुभवोपगमे बन्धस्यावर्जनीयत्वेन नित्यमुक्तत्वं व्याहतमेव स्यात्। स्वत एव सर्वज्ञस्य ब्रह्मणः जैवेन रूपेणाविद्यानुभव इति व्यवस्थापनमशक्यमित्युक्तम्। ब्रह्मणि धर्मभूतज्ञानस्य वृत्तिज्ञानस्य वाऽनभ्युपगमे चाविद्यानुभवस्य ब्रह्मरूपतया नित्यत्वापत्त्या तन्मुक्तिरेव न कदाचिदपि स्यात्। ब्रह्मात्मैक्यवादिनाऽपि ब्रह्मणो बन्धानभ्युपगमे बन्धस्यैवाप्रसिद्ध्या तदभावरूपमुक्तेरप्यसिद्धत्वात् ब्रह्मणो मुक्तैव न स्यात् कुतो नित्यमुक्तत्वप्रसक्तिः। अतः

नित्यमुक्तं ब्रह्मैव स्वगतानाद्यविद्यामनुभवतीति यत्कथमिदमुपपद्यत इत्यादिः बन्धाभावे त्वमुक्ततेत्यन्ता शतदूषणी दुर्निवारेति सिद्धम् ।

## अज्ञानस्यान्तःकरणाश्रितत्वे दूषणम्

अथ तत्रैव तर्ह्यस्माकमपीत्यादिना अहङ्कारापरपर्यायान्तःकरणरूपपरगतमेवाज्ञानं संविदात्मकब्रह्मानुभूयत इति तस्य परगतत्वेन बन्धरूपत्वाप्रसक्त्या ब्रह्मणो न नित्यमुक्तत्वविरोध इत्याशङ्क्य तत्र सुषुप्त्यादावज्ञानानुभवभङ्गप्रसङ्गरूपं दूषणमुक्तम् । तदानीमन्तः करणविलयोपगमे निराश्रयावस्थानायोगेन तदाश्रिताज्ञानस्यापि विलयप्रसङ्गादिति भावः ।

एतेन सुषुप्तौ कारणशरीरेणाज्ञानेनान्तःकरणाद्यात्मनोपहितस्यैव जीवस्य सत्त्वादित्युक्तमपास्तम् । सुषुप्त्यादौ स्थूलसूक्ष्मशरीरद्वयविलयेऽपीति पूर्ववाक्येन स्वयमेवान्तःकरणविलयस्याभ्युपगमेन तदानीं तदुपहितजीवसत्त्वोक्तेरयुक्तत्वात् । न हि विनष्टस्याप्युपाधित्वं संभवति । कार्यानन्वयी सत्त्वनियतः उपाधिः विशेषणोपलक्षणाभ्यामन्यः तृतीयः प्रकार इति वाक्यान्वयाधिकरणे वक्ष्यत इति हि कल्पतरुपरिमलम् । यदि च तदानीमन्तः करणनाशेऽपि तत्कारणाज्ञानस्याविनाशात् तदात्मना अन्तःकरणस्य सत्त्वमुपपन्नमिति विवक्षितं, तर्ह्यज्ञानं प्रत्यज्ञानत्वेन आश्रयत्वायोगात् । निराश्रयस्थित्यनुपपत्तेर्न कश्चित् परिहार उक्तस्स्यात् । अत एव सुषुप्त्यनन्तरं न किंचिदवेदिषमिति अज्ञानपरामर्शस्य विद्यमानत्वादिति हेतुवचनमप्यसंबद्धम् । विद्यमानस्यैव परामर्शस्य अन्तःकरणगताज्ञानवादोपगमेन भवन्मते भङ्गप्रसङ्गे तस्यानुपपन्नपरामर्शविद्यमानत्ववचनेन निवारणायोगात् । मृतस्य तु नान्तःकरणविलयः । सूक्ष्मशरीरेण साकमेवोत्क्रान्त्यभिधानादित्युक्तमपि दुरुक्तमेव । सुप्तस्यापि स्थूलशरीरदर्शनेन तत्रोष्मोपलंभेन च सूक्ष्मशरीरसत्त्वावगमेन विशेषाभावात् । तदुपलब्धेः पुरुषान्तरविभ्रमरूपतायास्तु भवन्मते उत्क्रान्तिदशायामपि तुल्यन्यायेनाभ्युपगन्तव्यत्वात् । नाशाख्यसंस्कारात्मना तदवस्थानस्य उभयत्र समानत्वाच्च । यथोक्तं परिभाषायाम्—सुप्तस्य हि लिङ्गशरीरं संस्कारात्मना अत्रैव वर्तते परे तस्य तु लोकान्तर इति । ततश्चान्तः करणविलयस्य अविशेषेण तदानीन्तनाज्ञानस्यानुभवेऽपि न काचिद्गतिरुक्ता भवति ।

एतेन सुषुप्तिन्यायेनैव मूर्च्छायामप्यज्ञानानुभवस्समर्थनीय— इत्युक्तमपि प्रत्युक्तम् । सुषुप्तावन्तःकरणविलयेनाज्ञानस्य निराश्रयस्थित्यनुपपत्तेरनिवार्यतायास्समर्थितत्वात् ।

## अन्तःकरणावच्छिन्नजीवाश्रितत्वे दूषणम्

न च सुषुप्त्यादावपि जीवस्य सत्त्वात् अविद्याया जीवाश्रितत्वाच्च न निराश्रयत्वमित्युक्तिरिह संगता । अन्तःकरणाश्रिताज्ञानपक्ष एवात्र दूषणस्य कथनात् अन्तःकरणपदस्य तदवच्छिन्नचैतन्यरूपजीवपरत्वाश्रयणे चान्तःकरणविलयकाले तदवच्छिन्नचैतन्यरूपजीवसत्त्वमप्यनुपपन्नमेव । विशेषणाभावे विशिष्टस्याप्यभावात् । तथा चाज्ञानस्य तदानीं निराश्रयस्थित्यनुपपत्तिस्तदवस्था । अत्र निराश्रयत्वे चाधिष्ठानाभावेन निरधिष्ठानभ्रमानभ्युपगमे भ्रमाधीनसत्ताकमपारमार्थिकमज्ञानं तदानीं न भवितुमर्हति इति तत्सत्तासमर्थनाय निरधिष्ठानभ्रम एवाभ्युपगन्तव्यस्स्यात् । ततश्च माध्यमिक मध्य मध्यासितव्यमित्याशयेनोच्यते शतदूषण्यां निरधिष्ठानभ्रमानुज्ञानप्रसङ्गादिति ।

अत्र सुषुप्त्यवस्थस्य जीवस्य न भ्रमाधिष्ठानत्वम् । तत्र निर्विशेषात्मानन्दानुभवमात्रस्य सत्त्वेन सविकल्पकभ्रमानुदयादिति वदता तदानीमपारमार्थिकाज्ञानासद्भाव एव शतदूषण्या प्रसंजितस्समर्थितो भवतीति न तेन स्वपक्षानुकूल्यम् किमपि । प्रत्युत प्रातिकूल्यमेव संपादितं भवति । परोक्तस्वमतानुपपत्तेरेव दृढीकरणात् । स्वप्नावस्थायां तु नान्तःकरणादीनां विलय इत्यप्रसक्तप्रतिषेधः । तदानीमन्तःकरणविलयस्य भ्रमानुपपत्तेर्वा शतदूषण्यामिहानुक्तत्वात् ।

एतावता अन्तःकरणे तदवच्छिन्ने वा अज्ञानाश्रयत्वोपगमे सुषुप्तिमरणमूर्च्छाद्यहंकारविलयदशायामज्ञानानुभवभङ्गप्रसङ्गादिति दूषणमविचाल्यमिति व्याख्यातम् । उक्तदूषणभिया अज्ञानस्य ब्रह्माश्रयत्वोपगमे च तस्य स्वगताज्ञानानुभवावश्यंभावेन बन्धप्रसक्त्या नित्यमुक्तत्वभङ्गः । मिथ्यानुभवस्य बन्धरूपत्वानुपगमे पारमार्थिकबन्धस्य जीवस्याप्यनुपगमेन तन्निवृत्यर्थं शास्त्रारंभानुपपत्तिः । तन्निवृत्तेर्नित्यतया बन्धाप्रसिद्धिः । मूलाविद्याया ब्रह्मणाऽप्यननुभवे दर्शनैकजीविताया मिथ्याभूतायास्तस्याः

स्वयमादावेव विलयप्रसङ्गः। तत एवाहंकारादिबाह्यप्रपंचप्रसवाप्रसक्ति-रित्यादिदूषणजातमुक्तं शतदूषण्यां ब्रह्माश्रयत्वे त्वित्यादिना।

अत्रापि यदुच्यते एतन्मते त्वविद्याया ब्रह्माश्रितत्वं नाङ्गीक्रियत इति न ब्रह्मणः स्वगताज्ञानानुभवो विरुद्धचत इत्यादि तत्सर्वमसंबद्धम्। ब्रह्माश्रयत्वे त्वित्युपक्रम्य ब्रह्माज्ञानवादिनं प्रत्युक्तस्य दूषणजातस्य जीवाज्ञानकल्पावलंबिना प्रतिवक्तव्यत्वाप्रसक्तेः। कल्पान्तरावलंबेन परिहारस्य दूषितकल्पदूषणाभ्युपगमावेदन एव पर्यवसानात्। अभ्युपग-तस्यापि दूषणस्य कथंचिन्मतान्तरेण प्रतिवचनं ह्यभिनिवेशनिबन्धनमेव। जीवाज्ञानकल्पेऽपि तदनतिरिक्ततयाऽभिमतसर्वज्ञब्रह्मणः नित्यमुक्तत्वविरोधः सुषुप्त्यादिकालीनाज्ञानानुभवभङ्गप्रसङ्गश्च अवर्जनीय इति प्रागेवोपपादि-तम्। एकमुक्तौ सर्वमुक्त्यापत्तिश्च एकाविद्यापक्षे समानैव। प्रतिजीवम-विद्याभेदोपगमे जीवभेदकल्पकाविद्याश्रयगवेषणायां घट्टकुटचां प्रभातमेवे-त्यादिकं स्फुटमाकरे। जैवेन रूपेण ब्रह्मणः अज्ञानानुभवोपगमेऽपि नित्यमुक्तत्वं दुर्घटमेवेत्युक्तप्रायम्।

## अवच्छेदकभेदेन ब्रह्मणि विरुद्धसमावेशस्याकाशदृष्टान्तवैषम्येण निरासः

न चाकाशादावल्पत्वादितदभावयोरिवात्रापि बन्धमुक्तत्वयोरव-च्छेदकभेदेन विरोधपरिहारः। आकाशादावल्पत्वादिसंबन्धस्यावच्छेदकघटा-दिद्वारकत्ववदिहाज्ञानाद्यनुभवात्मकबन्धसंबन्धस्यावच्छेदकजैवरूपात्मकाचेत - नद्वारकत्वायोगेन साक्षात्त्वेन विशेषस्य दुरपह्नवत्वात्। नित्यमुक्तत्वमपि साक्षादेव हि ब्रह्मसंबन्धितयाऽभिमन्यते। साक्षात्प्रतियोगिसंबन्धिनि साक्षत्तदभावसंबन्धस्य युगपत्क्वचिदप्यदर्शनेन जैवेन रूपेणाज्ञानाद्यनुभवा-त्मकबन्धः ब्राह्मेण रूपेण नित्यमुक्तत्वं च ब्रह्मणो युगपदव्याहतमेवेति समर्थनस्य दुश्शकत्वात् ब्रह्मसिद्धीष्टसिद्धेर्नावकाशोऽस्ति। मिथ्याभूतस्य बन्धरूपत्वानुपगमे तन्निवृत्तेः पुरुषार्थत्वायोगेन जीवाश्रितमिथ्याभूताविद्या-निरासार्थमपि शास्त्राणां प्रवृत्तिः न प्रयोजनपर्यवसायिनी स्यादित्युक्त-मप्यनिवार्यमेव।

**ब्रह्मणोऽविद्याद्यनुभवानुपगमे तदनुवृत्तितत्कार्याद्यनुपपत्तिः**

अविद्यानुभवानभ्युपगमे च ब्रह्मणाऽप्यननुभूताया मिथ्याभूता-विद्यायाः प्रतिभासमन्तरेण स्थित्यनर्हतया तत्क्षण एव नाशापत्त्या कथमहंकारादिप्रसवः, कथं वा जीवकल्पनं तदाश्रयणं वेति दूषणान्यपरिहार्याण्येव । यावदखण्डाकारवृत्तिस्थापकानुभवाद्यनुवृत्तिविरहात्तावत्पर्यन्तमविद्यासत्ताया एवाप्रसक्तौ का कथा तस्या मिथ्याप्रसवशक्तेः । तथा च जैवेन रूपेण ब्रह्मणोऽहंकारादिसंबन्धः तन्निबन्धनसुखदुःखाद्यनुभवश्च दुर्वार इति वदता नित्यमुक्तत्वशिरसि मुद्गार एव प्रक्षिप्तो भवति । न हि ब्रह्माश्रिताज्ञानपक्षस्य ब्रह्माज्ञानानुभववादस्य च कोऽपि संबन्ध इत्युक्तवता च अविद्यानुवृत्तितत्प्रसवशक्तिबाह्यप्रकाशोपपत्तिषु महती शिलैव निहिता भवतीति परीक्षयाऽनया सम्यगेव कृतं नित्यमुक्तत्वबाह्यप्रकाशसमर्थनमित्यास्तामेतत् ।

श्रीभाष्ये नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणः अज्ञानानुभवश्च न संभवतीत्यत्रोक्तेषु नित्यमुक्तत्वादिहेतुगर्भविशेषणेषु स्वप्रकाशत्वविशेषणमात्रस्य स्वानुभवस्वरूपत्वादित्यनन्तरवाक्येन विवरणे कारणमाह शतदूषण्यां स एष इति प्रथमो हेतुरिति उक्तभाष्यवाक्ये प्राथमिकनित्यमुक्तपदेन विवक्षितः नित्यमुक्तत्वहेतुरित्यर्थः । व्याख्यातप्राय इति । ब्रह्मणः अविद्यां प्रत्याश्रयत्वानुपपत्तिवचनेन स्वाश्रिताविद्याद्यनुभवात्मकबन्धस्याप्यप्रसक्त्या निरासात् तद्विरोधितया नित्यमुक्तत्वमर्थसिद्धमिति भावः ।

**जीवाज्ञानपक्षे ब्रह्माज्ञानानुभवाप्रसक्तिः, स्वानुभवस्वरूपस्याविद्यानुभवविरोधश्च**

अत्र यदुक्तं न हि ब्रह्माश्रिताज्ञानपक्षस्य ब्रह्माज्ञानानुभववादस्य च कोऽपि संबन्ध उक्तरीत्या जीवाश्रिताज्ञानपक्षमादायैव तस्य वादस्य प्रस्तुतत्वादिति । तदसंबद्धम् । ब्रह्माज्ञानपक्षे तदनुभवावश्यंभावस्य प्रागुक्तत्वात् जीवाज्ञानपक्षे च ब्रह्माज्ञानानुभववादस्य प्रसक्त्यभावात् जीवाज्ञानपक्ष एव ब्रह्माज्ञानानुभववादप्रस्तावाभ्युपगमस्य नित्यमुक्तस्वभावस्य वृत्तिरूपजन्यज्ञानानाश्रयत्वात् नाज्ञानस्य न तरां बाह्यप्रकाशस्य च संभवः ।

अविद्याश्रयजीवविषयत्वादज्ञानबाह्यप्रकाशादिवादस्येति पूर्वतनस्वोक्तिविरुद्धत्वात् जैवरूपस्याद्वैतमते मिथ्यात्वेनाचेतनतया चाभ्युपगन्तव्यस्यानुभवविशेषरूपबन्धसंबन्धानर्हतया तदवच्छेदकत्वयोग्यतायाः प्रागेव निरस्तत्वाच्च । ब्रह्माज्ञानानुभववादस्य दुर्निर्वहत्वाच्च ।

स्वानुभवस्वरूपत्वस्याविद्याद्यनुभवप्रत्यनीकतां विवरीतुमारभते शतदूषण्यां—अनुभूतिस्वरूपमपि ब्रह्म स्वानुभवैकतानमिति ह्यभ्युपगम्यत इत्यादिना । तत्र च स्वानुभवैकस्वभावत्वस्यैवात्र हेतुतया विवक्षितत्वात् स्वत एवाविद्यानुभवे सत्युक्तहेतुविरोधः तदनुभवस्य नित्यतापत्त्या अनिर्मोक्षप्रसङ्गः । शुक्तिरजतादिज्ञानस्येव मिथ्याभूताविद्यानुभवरूपब्रह्मणोऽपि बाधकज्ञानेन निवृत्तिप्रसङ्गः । अन्यतोऽनुभवे च ब्रह्माविद्यातिरिक्ताभ्युपगमप्रसङ्गः । अभ्युपगमे च तस्य सत्यत्वे सद्वितीयत्वं, मिथ्यात्वेऽनवस्थेत्यादिदूषणान्युक्तानि ।

यत्तु ब्रह्मसिद्धिकारा हि अनुभवैकतानस्यापि विद्यास्वरूपस्यापि वा ब्रह्मणः अविद्याश्रयत्वनिबन्धनमेवाविद्यानुभवितृत्वादिकं स्वीकुर्वन्ति न स्वत इत्यादिना ब्रह्मणोऽन्यत एवाज्ञानत अविद्याद्यनुभवसमर्थनं तदपेशलम् । जीवाज्ञानवादे ब्रह्मणः अविद्याश्रयत्वनिबन्धनमित्युक्तेरयुक्तत्वात् । न च जीवाज्ञानवादेऽपि ब्रह्मण एव जैवरूपेणाज्ञानाश्रयत्वोक्तिर्युज्यत इति वाच्यम् । जैवरूपस्याज्ञानाश्रयतावच्छेदकतार्हताया निराकृतत्वात् । न च बिम्बप्रतिबिम्बयोरैक्यात् जीवाज्ञानवादेऽपि ब्रह्मणः अविद्याश्रयत्वोक्त्युपपत्तिः । तदैक्यस्य वैधर्म्यबाहुल्यप्रदर्शनेन प्रागेव निरस्तत्वात् । अरूपस्य प्रतिबिम्बासंभवस्य दर्पणादिवत् प्रतिबिम्बोपाधेः प्रतिबिम्बाश्रितत्वायोगस्य च दर्शितत्वाच्च । न च प्रतिबिम्बान्तर्गतस्यैवाज्ञानस्याज्ञानतद्भ्रमाद्युपाधित्वमित्युक्तं युक्तम् । मुखप्रतिबिम्बतद्भ्रमादावन्यस्यैवोपाधित्वदर्शनात् ।

### अनादित्वे भ्रमस्य सोपाधिकत्वानुपपत्तिः

न चानादिभ्रमे हेत्वन्तरान्वेषणं नापेक्षितम् । अनादित्वे हेतुसामान्यनैरपेक्ष्यापत्त्या निरुपाधिकत्वस्याप्युपगन्तव्यतया अविद्योपाधिकत्ववाचोयुक्तेरप्ययोगात् । अत्र बिम्बप्रतिबिम्बातिरिक्तस्य द्रष्टुरभावात् न तत्प्रतिभासोप-

पत्तिः । न चाविद्याया अघटितघटनापटीयस्त्वम् । मानाभावात् । मुक्ताश्रितत्वापत्तेश्च । मायाविद्याविशेषणत्वोपाधित्वभेदेन एकस्यैव ईश्वरेश्वरसाक्षिजीवभावादिकल्पनं च प्रमाणशतविरुद्धत्वादनुपादेयमिति व्यक्तमाकरे । शुद्धोपहितविशिष्टभेदोपगमेऽपि शुद्धं ब्रह्मैवाविद्याश्रयः न तु तदेककल्प्यो जोव इति यत्र विवरणसंक्षेपशारीरकादावुच्यते तत्रैवात्र दूषणान्युच्यन्ते । न च तत्र बाधः बाधकस्यानुपलंभात् । न चास्य जगदनुपादानत्वादिकं बाधकम् । नित्यमुक्तत्वस्वानुभवैकतानत्वाविद्याद्यनुभवादिभङ्गस्य अनुपादानतया विरोधाभावेन व्यावर्तनायोगात् । न च सर्वप्रमाणदूरगत्वं बाधकं असिद्धेः । अन्यथा शुद्धस्य ब्रह्मणः तुच्छत्वापत्तेः । स्वयंप्रकाशत्वेन सिद्धे तत्र प्रमाणबलेन प्रपंचप्रविलयवचनादेरिव अनिष्टप्रसङ्गरूपदूषणकथनस्याप्यविरोधाच्च । यथा च शुद्धमेव ब्रह्म शास्त्रप्रतिपाद्यं तथोक्तं शास्त्रयोनित्वसूत्रविवरणे ।

## शतदूषण्युक्तातिप्रसङ्गादेरव्याहतत्वम्

एतेन शतदूषणी ब्रह्मणः अज्ञानानुभवमादाय यद्दूषयति तद्यदि शुद्धं ब्रह्माभिप्रेत्य तर्हि बाधितम् । तद्धि न जगदुपादानं न वा जीवस्वरूपं व्यवहारविषयसर्वप्रमाणदूरत्वादित्याद्युक्तं प्रत्युक्तम् । अन्यत एवाज्ञानानुभव इति पक्षे अज्ञानानुभवश्चायमविद्याश्रयस्य वृत्तिरूपएवेत्युपक्रम्य अज्ञानानुभवरूपसाक्षिणः बाधकज्ञानेन निवृत्तिरिष्टैवेतीष्टापत्तिरसङ्गतैव । तत्पक्षे तत्प्रसक्तेरनुक्तेः । स्वत एवाज्ञानानुभव इति पक्षे हि तत्प्रसङ्ग उक्तः । न च तत्राज्ञानानुभवो वृत्तिरूप एवेति वक्तुं शक्यम् । प्रमाणप्रवृत्तिमन्तरा स्वत एव वृत्तेरसंभवात् । अतः स्वत एवानुभव इति पक्षे तस्य ब्रह्मस्वरूपत्वावश्यंभावेन तन्निवृत्तिप्रसङ्गस्त्वनिवार्योऽनिष्टप्रसङ्ग एव । अन्यतोऽनुभव इति पक्षे अविद्याब्रह्मातिरिक्ताभ्युपगमसद्वितीयत्व प्रसङ्गादिकमुक्तम् । अतिरिक्तमनभ्युपगम्याविद्ययैव तिरोधानमुखेन स्वानुभवनिर्वाह इत्युपगमे च भाष्योक्तमेव निर्विशेषब्रह्मस्वरूपनाशप्रसङ्गान्योन्याश्रयणादिदूषणजातमुच्यते शतदूषण्यां 'प्रकाशमात्रस्य ब्रह्मणः तिरोधान' इत्यादिना । अविद्यया प्रकाशैकस्वरूपं ब्रह्म तिरोहितमिति वदता स्वरूपनाश एवोक्तस्यात् । प्रकाशतिरोधानं नाम प्रकाशोत्पत्तिप्रतिबन्धो विद्यमानस्य विनाशो वा । प्रकाशस्यानुत्पाद्यत्वाभ्युपगमेन प्रकाशतिरोधानं

प्रकाश नाश एवेति हि भाष्यम् । दीपादेर्घटादिनाऽऽवरणे प्रकाशनाश एव तिरोधानव्यवहारवदिहापि प्रकाशनाश एव तिरोधानशब्देन व्यवहर्तुमुचित इति स्वरूपनाश एवोक्तस्स्यादिति भावः । न च दीपस्वरूपस्याविनाशेऽपि तिरोधानदर्शनात् तद्वत् ब्रह्मस्वरूपाविनाशेऽपि तिरोधानमुपपद्यतामिति वाच्यम् । वैषम्यात् । दीपस्य स्वरूपातिरिक्तप्रकाशाख्यधर्मोपगमेन तद्विनाशेनापि तिरोधानमुपपादयितुं शक्यते । ब्रह्मणस्तु निर्विशेषतया स्वरूपातिरिक्तधर्मानभ्युपगमेन स्वरूपनाशं विना तिरोधानव्यवहारो न निर्वोढुं शक्य इति । तदेतदभिसन्धायोक्तं शतदूषण्यां प्रकाशमात्रस्य ब्रह्मण इति ।

## श्रीभाष्ये ब्रह्मसिद्धिसिद्धान्तोन्मूलनम्

यदत्रोक्तं—तिरोधाने न स्वरूपहानिः तस्याविद्ययाऽविरोधादिति । तदिह न सङ्गतम् । विरोधेन स्वरूपहानेरिह प्रस्तावाभावात् । भवन्मते प्रयुज्यमानतिरोधानशब्दार्थवत्त्वायैव ह्यत्र स्वरूपनाशोऽप्येष्टव्य इत्युच्यते । स्वरूपनाशानभ्युपगमे च तिरोधानशब्द इहार्थशून्य एव संपद्येतेति स्वानुभवैकतानस्वभावस्य न तेन परानुभवोपपत्तिः । अतः श्रीभाष्यकाराणां तिरोधानानुपपत्तिनिरूपणं ब्रह्मसिद्धिसिद्धान्तस्याप्युन्मूलनमेव, न तु तत्पूर्वपक्षोद्गरणमात्रं, तत्रास्य प्रसक्तेरदर्शनात् । प्रकाशस्वरूपस्य ब्रह्मणः अविद्यया अविरोधोपपादनं तु भाष्यादौ आश्रयानुपपत्तिकथनावसरे निराकृतम् । तद्विस्तरस्तु परस्तात् । अनादित्वेनान्योन्याश्रयस्य परिहारश्च न युज्यते । अविद्यया तिरोधाने अविद्यानुभवः, अविद्यानुभवे सत्येवाविद्यया तिरोधानमिति खल्वत्रान्योन्याश्रय उक्तः । अस्यानादित्वेन परिहारः तदा स्यात् यदि परस्परनैरपेक्ष्यमुपगम्येत । तच्च न शक्यमुपगन्तुम् । अविद्यानुभवस्य तिरोधाननैरपेक्ष्ये तद्वत्प्रपंचानुभवस्यापि संभवेन अविद्यातत्तिरोधानकल्पननैरर्थक्यं अनिर्मोक्षप्रसङ्गश्च स्यात् । तिरोधानस्यानुभवनिरपेक्षत्वे च काचादिवदविद्यायास्सत्तया तिरस्कारकत्वात् ज्ञानबाध्यत्वं न स्यादित्यादिकं शतदूषण्यामेवोक्तम् । एवं जैवेन रूपेणाज्ञानाश्रयत्वमित्यत्रापि जैवरूपप्रयुक्तमज्ञानाश्रयत्वं, अज्ञानाश्रयत्वप्रयुक्तं जैवं रूपमित्यन्योन्याश्रयोऽपि दुस्तरः । नैरपेक्ष्ये तयोस्स्वाभाविकत्वप्रसङ्गश्चानिवार्य इत्युक्तम् ।

एतेनानादितया नान्योन्याश्रयः। काचादीनां चिकित्सयेव सत्तयैव तिरस्कुर्वन्त्या अप्यविद्यायाः ब्रह्माकारवृत्या निवृत्तिः। ततस्सर्वविवर्त-निवृत्तिः। तदनन्तरमद्वैतं ब्रह्म प्रकाशत इति नाद्वैतसिद्धिविरोध इत्युक्तं प्रत्युक्तम्। विवर्तवार्तया वेदवैदेशिकत्वं च प्रागेव प्रत्यपादि। भेदप्रमाणेषु जाग्रत्सु कथं वा भवदभिमताद्वैतसिद्धेर्न विरोधः। न चास्माकं बन्धाद्यनु-भववद् ब्रह्मणः तिरोधानानुभवोप्यस्ति, येन तिरोहितस्वरूपमतिरोहित-स्वरूपमिति द्वैविध्यमभ्युपेत्यम्।

### ब्रह्मतिरोधानानुपपत्तिवत् जीवस्य कर्मणा तिरोधाने नानुपपत्तिः

न च तिरोधानानभ्युपगमे श्रीभाष्यसिद्धान्ते कथं कर्मादिनाऽऽवरणं किमर्थं वा तन्निवर्तकधर्मभूतज्ञानमित्युक्तं युक्तम्। ब्रह्मणः कर्मादिनाप्या-वरणानभ्युपगमात्। तस्मादत्यन्तभिन्नानां जीवानामेव हि कर्मावरणं बन्धश्चाभ्युपगम्येते। तन्निवर्तकं धर्मभूतज्ञानं च ध्यानविपाकावस्थापन्नं तैरेव संपादितव्यमिति विधीयते। ब्रह्म तु सर्वदाऽप्यतिरोहितस्वरूपमेव प्रकाशत इति ह्युच्यते। अतो नास्मन्मते दूषणलेशस्याप्यवकाशः किमुता-संख्यातदूषणानाम्। अत एवास्मन्मते न हि दृष्टेऽनुपपन्नं नामेति न्याय-संचारणावश्यकता। न च ब्रह्मणि द्वैविध्योपगमापेक्षया ब्रह्मजीववैविध्योपगमे न लाघवावकाशोऽस्तीति वाच्यम्। कल्पनायामेव लाघवस्यानुसर्तव्यत्वात्। नित्यो नित्यानां ज्ञाज्ञौ द्वावित्यादिप्रमाणशतप्रतिपादितस्य लाघवन्यायेनान्य-थाकर्तुमशक्यत्वात्। न चैवं तिरोहितातिरोहितभेदेन ब्रह्मणो द्वैविध्येऽपि किंचिन्मानमस्ति। अविद्यानुभवाद्यन्यथानुपपत्तिस्तु तदनुभवादेस्तिरोधान-निरपेक्षत्वकल्पे न वक्तुं शक्या। अनुभवस्तु निरपेक्ष इति कल्प एव हि अतिरोहितस्वरूपस्यैव लाघवेनाभ्युपगन्तुमुचितत्वादिति प्रत्युच्यते। न च तत्कल्पे समापतन्तीनामनुपपत्तीनां परिहाराय शतदूषण्याऽपि काचन गति-र्द्रष्टव्या। तत्कल्पस्यैवानुपपत्तिशतेन निराचिकीर्षितत्वात्। स्वमते च लोक-विरोधस्य शास्त्रविरोधस्य वा न प्रसक्तिरिति प्रागेवोक्तम्। अतश्शिवद्रो-हात्मघातयोर्नैवात्र प्रसक्तिरस्ति।

एतेन सत्यमतिरोहितस्वरूपमात्राङ्गीकारे लाघवमित्यारभ्य किं शिवद्रोहमात्रे तात्पर्यनयेनात्मा निहन्यत इत्यन्तमुक्तं यत् तत्प्रत्युक्तम्।

## श्रीभाष्यकारसिद्धान्तेऽपि दूषणसाम्यापादनाशक्यता

यत्तु-श्रीभाष्यमते संविन्मात्रत्वादीश्वरस्येत्यादिना स्वमतसाम्यापादन-प्रयतनं तदज्ञाननिबन्धनं; श्रीभाष्यकृन्मते ईश्वरस्यानन्तगुणादिमत्वोपगमेन संविन्मात्रत्वानभ्युपगमात्। प्रकृत्यादिशरीरकस्यान्तर्यामिब्राह्मणेन अस्मान्मायी सृजते विश्वमेतत्'' सोऽभिध्याय शरीरात्स्वात् सिसृक्षुरित्यादिश्रुतिस्मृत्येक-कण्ठ्येन जगत्सर्वं शरीरं ते यदम्बु वैष्णवः कायः, तत्सर्वं वै हरेस्तनुः, तानि सर्वाणि तद्वपुः इत्यादिपुराणरत्नादिवचनैश्चाङ्गीकारेऽपि यत्किंचि-दन्यथानुपपत्तिमात्रेणाङ्गीकाराभावात् । एवं जीवात्मनामपि नित्यज्ञानादि-गुणकत्वेनाभ्युपगतानां संविन्मात्रत्वानभ्युपगमात् । प्रत्यक्षागमादिप्रमाणानु-रोधेन सुखदुःखादिहेतुशरीरसंबन्धस्य कर्मसंबन्धस्य चाभ्युपगमेऽपि अन्यथानु-पपत्त्या तदनभ्युपगमात् । अन्यथानुपपत्तेरप्यद्वैतसिद्धान्ते अविद्यातिरोधाना-दिविषये दुर्निरूपतायाः प्राक्प्रदर्शितत्वाच्च । कथंचिदप्युभयोस्साम्यसंभाव-नायाः प्रसक्त्यभावात् ।

श्रीभाष्यकृतां मतेऽपि ब्रह्मस्वरूपं स्वानुभवैकतानं सर्वज्ञम् । अत एव सर्वानुभवरूपमपीत्यभ्युपगन्तव्यत्वादविशेष इति भ्रान्ताशंका तु शतदूषण्यामेव ननु भवतामपि ब्रह्मस्वरूपं स्वानुभवैकतानमित्यादिनानूद्य गुणभूतेन ज्ञानेन सविषयत्वस्वभावेन स्वेतरसमस्तविषयीकरणादित्यादिना विशेषप्रदर्शनादपुनरङ्कुरं निराकृता ।

## धर्मभूतज्ञानोपगमकैमर्थ्यादिप्रश्नोत्तराणि

यश्च तदुपरि पृच्छ्यते सर्वव्यापकस्य परमात्मनः दीपासंपृक्तस्थले प्रभाया इव कुत्र वा स्वासंपृक्तदेशे धर्मभूतज्ञानस्य व्याप्तिरिति । तस्य च ब्रह्मव्याप्तिरहितदेशाभावात् तद्व्याप्तिदेश एव तद्धर्मभूतज्ञानस्यापि व्याप्तिरि-त्युत्तरे न बाधकं किंचत् । तर्हि संविद्रूपेण परमात्मना संपृक्तत्वादेव सर्वं ज्ञायते, किं धर्मभूतज्ञानेनान्तर्गडुनेति चेत् । तदैवमुपालभ्येमहि यदि ब्रह्मणो विषयव्याप्त्यन्यथानुपपत्त्या धर्मभूतज्ञानं कल्पयेम । न चैवम् । प्रमाणपार-तन्त्र्येण हि तदभ्युपगच्छामः । 'यस्सर्वज्ञः सर्ववित्', 'यस्य ज्ञानमयं तपः', 'तदैक्षत बहु स्यां, स्वाभाविकी ज्ञानबलक्रिया च' इत्यादौ सर्वविषयकज्ञाना-श्रयत्वं ह्याम्नायते न तु सर्वविषयकज्ञानरूपता । अतस्स्वानुभवैकतानस्य

ब्रह्मस्वरूपस्य संविद्रूपत्वेऽपि न स्वेतरविषयीकरणयोग्यता । किन्तु तद्धर्म-भूतज्ञानस्यैवेति यथाप्रमाणमभ्युपगमे न परिचोदनावकाशः । तदेतत्सर्वम-भिसन्धाय शतदूषण्यामेव 'गुणभूतेन ज्ञानेन सविषयत्वस्वभावेन स्वेतरसमस्त-विषयीकरणा'दित्युक्तम् । भगवद्धर्मभूतज्ञानस्य च किंचिदपेक्षयाऽतीतवर्तमान-भविष्यत्कालभेदव्यवस्थितस्रष्टृत्वपालयितृत्वसंहर्तृत्वादिगोचरसंकल्परूपतया सदातनत्वोपगमात् न कादाचित्कत्वपरस्परविरोधादिप्रसक्तिरिति प्रागेवाभि-हितम् । विषमसृष्टयादेः तत्तत्कर्माधीनत्वाच्च न वैषम्यनैर्घृण्यप्रसक्तिरिति भगवता सूत्रकृतैवोक्तत्वात् न तत्र पर्यनुयोगावकाशोऽस्ति ।

एवं जीवात्मनामपि केषांचित्सर्वज्ञत्वं धर्मभूतज्ञानविकासादेवानु-मन्यत इति सिद्धेऽपि तत्र प्रश्नविकल्पपरंपरायाः ग्रन्थपूरणं विना न कश्चि-दर्थस्संभाव्यते ।

यत्तु जीवधर्मभूतज्ञानस्य संकोचविकासाभ्यां बाह्यप्रकाशतदभावोप-पादनेन जीवस्यापि संविन्मात्रस्य तिरोधानं शतदूषण्यपि स्वीकरोति । अनेनैव न्यायेनाद्वैतमतेऽपि तिरोधानमुपपद्यते । तथा चातिरोहितस्वरूपस्यैव जीवस्य संविन्मात्रस्य स्वीकारे लाघवात् तत्र तिरोधानकल्पनं गौरवादनुप-पन्नमिति शङ्का श्रीभाष्यमतेऽपि समानेति । तत्तु अविवेकविलसितम् । तथा हि श्रीभाष्यकृतां मते जीवात्मनां संविद्रूपत्वेऽपि न तन्मात्रता, ज्ञानादि-धर्माभ्युपगमात् इति प्रागेवोक्तम् । तस्य च कर्मनिमित्तेन संकोचाख्येन प्रकाशनाशेन स्वविषये परविषये वा तिरोधानमुपपादयितुं शक्यम् । न चैवमद्वैतब्रह्मणः स्वरूपातिरिक्तप्रकाशधर्मानभ्युपगमेन स्वरूपनाशापत्तेरुक्त-त्वात् । एवमद्वैतब्रह्मणःतिरोधाननिरपेक्ष एव बाह्यानुभव इति कल्पे तिरोहि-तातिरोहितभेदेन ब्रह्मद्वैविध्यकल्पनं मानाभावेन गौरवादनुपपन्नमित्युक्तम् । न चेदमस्मन्मते जीवात्मनां तिरोहितातिरोहितभेदेऽपि समानम् । जीवेष्वज्ञा-भिज्ञभेदस्य लोकत एव सिद्धत्वेन जीवानां तिरोधानतारतम्यसिद्धेर्दुरपह्न-वत्वात् । जीवात्मनां कर्मणा तिरोधानमन्तरेण संसरणानभ्युपगमाच्च । यदपि चोक्तं संविद्रूपस्य व्यापकस्य परमात्मनः ब्रह्मसिद्धयुक्तप्रकारेण सर्व-संबन्धात् सर्वज्ञत्वं भवतु, किं धर्मभूतज्ञानेनेति प्रश्नस्तु श्रीभाष्यमतेऽव-शिष्यते । तत्परिहारमात्रं शतदूषणी शिक्षयत्विति । तदपि वार्तम् । सर्व-विषयकज्ञानाश्रयत्वमन्तरा सर्वसंबन्धमात्रेण आकाशादेरिव सर्वज्ञत्वासंभवात्

प्रमाणशतप्रतिपन्नमित्युपपादिते धर्मभूतज्ञाने कैमर्थ्यप्रश्नस्य परिहास्यत्वाच्च ।

एतेन संविन्मात्रस्य परमात्मनः स्वत एव सर्वप्रपंचतादात्म्येनैव ब्रह्मसिद्धिकारमतवन्निर्वाहात् धर्मभूतज्ञानं विनापि बाह्यप्रकाश उपपद्यत इति व्यर्थं धर्मभूतज्ञानाङ्गीकरणमित्याम्रेडितमपि दूरोत्सारितम् । चिदचिद्भावरूपवैधर्म्येणात्यन्तभिन्नयोः संवित्प्रपंचयोस्तादात्म्यासंभवस्य मृद्घटयोस्तादात्म्येऽपि तस्य तज्ज्ञत्वापादकत्वाभावस्य च प्रागेव प्रदर्शितत्वात् मुक्तिदशायां सर्वतादात्म्याभावेन सर्वज्ञत्वानुपपत्तेश्च । तथा न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते, अविनाशी वारेऽयमात्मा अनुच्छित्तिधर्मा" इत्यादिश्रुतिषु जाग्रतीषु जीवात्मनां बाह्यप्रकाशनिर्वाहायान्तःकरणवृत्तिकल्पनं गङ्गातीरे पिपासाशमनाय कूपखननमेव । न हि वैदिकभूमिमाश्रितस्य वेदवाक्यसिद्धार्थं परित्यज्य बाह्यकल्पितपक्षपाते बाह्यस्नेहं निगूढवेदविद्वेषं च विना कश्चन हेतुरस्ति । यदि बाह्यत्वेऽपि प्रसिद्धदर्शनान्तरत्वात्सांख्यस्य तत्प्रक्रियेवात्र स्वीकर्तव्येत्यभिमन्यते तर्हि नैयायिकदर्शनमेव प्रकृतेऽनतिविरुद्धं कथमुपेक्ष्यते, कपिलगौरवादिति चेत् । तर्हि कारणत्वादिविषयेऽपि तत्प्रक्रिया कुतो नाद्रियते । श्रुतिस्मृतिसूत्रविरोधादिति चेत्, प्रकृते कथं परिहारः । कथं वा तर्हि पक्षपातरहितान् प्रति भवदुक्तादेव वः श्वश्रूभिक्षानिषेधाधिकारन्यायपक्षपाताद्विमुक्तिः । अन्तःकरणवृत्तेः ज्ञानरूपत्वं चिच्छायापत्त्या आत्मधर्मत्वं चात्यन्तमनुपपन्नमिति भाष्यादावुपपादितम् ।

### वैदिकानां सांख्यप्रक्रियानादरणीयता

अत एव किमनेन सांख्यप्रक्रियामाश्रित्य सर्वनिर्वाहे संभवति संकोचविकासशालिनोऽपि नित्यत्वमिति स्वीकारे किं शरीरपरिमाणात्मवादिजैनमतद्वेषेण ? कथं चैवं चात्मा कात्स्न्र्यमिति न्यायस्य धर्मभूते ज्ञाने नावतारः इति चोक्तं परास्तम् । नित्यत्वाविशेषेऽपि निर्विकारत्वश्रवणतदभावरूपविशेषेण धर्मिविषयोक्तन्यायस्य धर्मभूतज्ञाने प्रवृत्त्यनर्हतायाः प्रागेव प्रपंचितत्वाच्च । अतः अभेदाभिव्यक्त्यर्था वृत्तिः चिदुपरागार्था वृत्तिरित्येवं वृत्तिभेदकल्पनं बाह्यवासनासंकरदोषमूलत्वात् वैदिकानामनुपादेयमेव ।

## बाह्यानुभवस्योपादानवत् हानमप्यशक्यम्

अतो ब्रह्मणो मुक्तानां बद्धानां वा जीवात्मनामपि च धर्मभूतज्ञानेनैव बाह्यानुभव इति श्रुत्यादिप्रमाणस्वारस्यपारवश्यादभ्युपेत्यम् । अन्यथा बाह्यानुभवो दत्तजलांजलिस्स्यात् इत्याह शतदूषण्यां "यदि बाह्यानुभवमिच्छसि तदा स्वरूपमात्रप्रकाशस्वभावादात्मस्वरूपादतिरिक्तं तद्धर्मभूतं ज्ञानमभ्युपगच्छ वा त्यज वा बाह्यानुभवव्यसनमित्यादिना ।"

यच्चाप्यन्ते बाह्यप्रकाशानुपपत्तिरियं किं मुक्तान् ब्रह्मभूयंगतान् ब्रह्म वाऽधिकृत्य उत बद्धानिति विकल्प्याद्ये शिरस्यनुभवस्यानभ्युपगमादेव नानुपपत्तिरित्युक्त्वा द्वितीयं शिरो विस्मृत्येवाविचार्य तृतीये शिरसि न काचिदनुपपत्तिरित्युक्तम् । तच्चाप्यसंबद्धम् । नित्यमुक्तस्वप्रकाशचैतन्यैकस्वरूपस्य ब्रह्मणः अज्ञानानुभवश्च न संभवतीति वाक्यस्य बद्धमुक्तपरत्वसंभावनाया एवानवकाशेन शतदूषण्यां बद्धमुक्ताल्पज्ञत्वसर्वज्ञत्वोपपादनस्य प्रासङ्गिकत्वेन च निरुक्तविकल्पानुत्थितेः । मुक्तानां बाह्यानुभवाभावे भूमविद्यादिफलतया सर्वेषु लोकेषु कामचारो भवति, सर्वं ह्पश्यः पश्यतीत्यादौ सर्वलोकसंचारसर्वदर्शित्वश्रवणाद्यनुपपत्तेः । विकल्पितद्वितीयशिरस्यनुपपत्तेरवश्यपरिहरणीयत्वे सत्यपि तत्र मौनावलंबनेनानुमतत्वसिद्ध्या शेषविस्तरस्य निरर्थकत्वाच्च । ब्रह्मणि पारमार्थिकधर्मभूतज्ञानमसहमानेन तस्य बाह्यानुभवोपपादनवत् तदभावोपपादनमप्यशक्यमित्याह शतदूषण्यां 'त्यजामस्तर्हि बाह्यानुभवमित्याशङ्क्यानुवादानन्तरं न विकल्पसहत्वा'दित्यादिना । न च बद्धजीवानां मिथ्याभूतबाह्यानुभवोपगमेनैव सर्वव्यवहारनिर्वाहे शुद्धचितस्तदनभ्युपगमेऽपि न क्षतिरिति वाच्यम् । बद्धानामपि धर्मभूतज्ञानानुपगमे तदनिर्वाहात् । न च वृत्त्या निर्वाहः । अचितः तस्या अनुभवत्वायोगात् । युष्मदीयैरपि चित्स्वभाव एवात्मा तेन तेन प्रमेयभेदेनोपधीयमानः अनुभवाभिधानीयकं लभते । अविवक्षितोपाधिरात्मादिशब्दैरभिधीयत इत्येवं चिदनुभवैक्यं हि पंचपादिकादावुक्तम् । अत एवैषां मते बाह्यानुभवस्यैव विशोधितस्य निवृत्तविषयोपरागस्य ब्रह्मत्वाभ्युपगमात् । तस्यापि अवस्तुत्वे विशेषाभावात् माध्यमिकमतावतारो दुर्वार इत्युक्तम् । अतिरिक्तं तु चिन्मात्रं शशशृङ्गमेवेत्युक्तम् ।

एतेन जैवेन रूपेण ब्रह्मणः वृत्तिज्ञानद्वारा बाह्यप्रकाशोपपत्ति-रित्युक्तमपि प्रत्युक्तम् । स्वत एव च ब्रह्मणो बाह्यानुभवानभ्युपगमे स्वरूपानन्तर्गतजैवरूपकल्पनायास्तेन रूपेण बाह्यानुभवस्य बन्धस्य वा प्रसक्त्यभावाच्च । तथा च ब्रह्मणो बाह्यानुभवानभ्युपगमेऽनुल्लेखपक्षपरि-शेषाल्लोकव्यवहारविरोधः । अभ्युपगमे तु नित्यमुक्तत्वादिविरोध इति सुष्ठूक्तं ।

---